त्वां चैवाहं वधिष्यामि पापं पापस्य कारणम् ॥ ५७

मृत्युरुवाच ।

विवशौ कालवशगावावां तद्दिष्टकारिणौ ।
नावां दोषेण गन्तव्यौ यदि सम्यक्प्रपश्यसि ॥ ५८

लुब्धक उवाच ।

युवामुभौ कालवशौ यदि वै मृत्युपन्नगौ ।
हर्षक्रोधौ कथं स्यातामेतदिच्छामि वेदितुम् ॥ ५९

मृत्युरुवाच ।

याः काश्चिदिह चेष्टाः स्युः सर्वाः कालप्रचोदिताः ।
पूर्वमेवैतदुक्तं हि मया लुब्धक कालतः ॥ ६०

तस्मादुभौ कालवशावावां तद्दिष्टकारिणौ ।
नावां दोषेण गन्तव्यौ त्वया लुब्धक कर्हिचित् ॥ ६१

भीष्म उवाच ।

अथोपगम्य कालस्तु तस्मिन्धर्मार्थसंशये ।
अब्रवीत्पन्नगं मृत्युं लुब्धमर्जुनकं च तम् ॥ ६२

काल उवाच ।

नैवाहं नाप्ययं मृत्युर्नायं लुब्धक पन्नगः ।
किल्बिषी जन्तुमरणे न वयं हि प्रयोजकाः ॥ ६३

अकरोद्यदयं कर्म तन्नोऽर्जुनक चोदकम् ।
प्रणाशहेतुर्नान्योऽस्य वध्यतेऽयं स्वकर्मणा ॥ ६४

---

om ) एव हि ( for चैवाहं ) —$^d$) $Dn_2$ om , $T_{2\ 3}$ पर, $G_{1.3\ 4}$ पर ( for पाप ) $D_2$ कारणे, $D_{4\ 6-9}$ $M_4$ कारिण ( for कारणम् )

58 $G_2$ om 58 ( cf. v l 55 ) T $G_{1\ 3\ 4}$ $M_{1-3}$ सर्प, $M_4$ मृत्युसर्पौ [ ऊचतु ] ( for मृत्युर् ) —$^a$) $D_8$ -वशगा —$^b$) $B_3$ धात्रा, $Dn_2$ $D_3$ वाचा, $D_1$ om ( for आवा ) $V_1$ B Dn निर्दिष्ट , $D_1$ उद्दिष्ट- ( for तद्दिष्ट ) $T_1$ -कारकौ, $G_{1\ 3}$ -कारणौ ( for -कारिणौ ) —$^c$) $B_1$ $Dn_2$ न वां, $T_1$ आवां ( for नावां ) $B_5$ मंतव्यौ; $G_{1\ 4}$ हतव्यौ ( for गन्तव्यौ ) —$^d$) $D_9$ प्रश- स्यसि ( for प्रपश्यसि )

59 $G_4$ partly damaged —$^a$) $D_6$ यदि ( for उभौ ) B परवशौ ( for काल ) —$^b$) $V_1$ $B_2$ ( marg as in text ) $_{4\ 5}$ Dn यदि मे, $G_2$ यदिष्टौ ( for यदि वै ) —$^c$) $D_{1-6}$ हर्षशोकौ ( for क्रोधौ ) $V_1$ $B_{1\ 2}$ ( marg as in text ) $_{3-5}$ Dn यथा ( for कथं )

60 $B_2$ partly damaged $T_1$ भीष्म ( for मृत्युर् ) —$^a$) $B_2$ $D_4$ काचिद् ( for काश्चिद् ) $B_3$ $D_5$ $T_{2\ 3}$ G $M_4$ एव ( for इह ) $D_8$ स (sic) ( for स्यु ) $V_1$ $B_{1.4\ 5}$ Dn या काचिदेव चेष्टा स्यात्, $T_1$ याश्चिदेव चेष्टा स्यु· ( submetric ) —$^b$) $B_2$ $D_2$ प्रचोदिता; $D_{4-8}$ प्रनो( $D_{5\ 6}$ णो )दिता·, $D_9$ -प्रनोदिता, $D_{10}$ T G -वशानुगा ( for -प्रचोदिता ) $V_1$ $B_{1.3\ 4}$ Dn सर्वा का ( $B_1$ सर्वका , $Dn_1$ सर्वा म )लप्रचोदिता —$^c$) $D_{1\ 2}$ $T_2$ सर्वम् ( for पूर्वम् ) $B_1$ एक तद्; $T_3$ एव तद् ( for एवैतद् ) —$^d$) $Dn_3$ कामत ; $D_{10}$ S तत्त्वत ( for कालत· ) $B_1$ मया लुब्ध न कामत·

61 $T_{2.3}$ $G_{1.3.4}$ om 61 —$^a$) $D_{4.6}$ अहं, $D_5$ आवा ( for उभौ ) $M_{1-3}$ तदुभौ कालवशगाव् —$^b$) $V_1$ B Dn निर्दिष्ट-, $D_1$ उद्दिष्ट ( for तद्दिष्ट ) $T_1$ -कारकौ ( for -कारिणौ ) —$^c$) $B_4$ $Dn_1$ न वां, $D_1$ आवा (sic) ( for नावा ) $Dn_1$ om दोषेण $B_{1\ 3\ 5}$ मतव्यौ ( for गन्तव्यौ ) —$^d$) $D_{4-6}$ पुत्रक ( for लुब्धक )

62 $T_{1\ 3}$ om the ref —$^a$) $D_1$ कालात्तु, $T_2$ कालस्य ( for स्तु ) —$^b$) $T_1$ सिद्धये, $T_2$ ( also as in text ) -सयुगे ( for -सशये ) $Dn_3$ तस्मिन्कर्मार्थ- सशये —$^c$) $B_5$ om. from मृत्यु up to कृत ( in $65^a$) $D_2$ मृत्योर् ( for मृत्यु ) — $D_8$ om ( hapl ? ) $62^d$–$63^a$ —$^d$) $G_3$ तौ ( for तम् ) $V_1$ $B_{3\ 4}$ Dn $D_2$ लुब्ध चा- ( $D_2$ ब्ध वा )र्जुनकं तथा; $B_1$ $D_5$ लुब्धक चार्जुनं तथा ( $D_5$ च त ), $B_2$ $D_1$ $G_2$ लुब्धकार्जुनक तथा ( $D_1$ च तत्, $G_2$ च त ), $D_{4\ 6}$ लुब्धकमर्जुन च त, $D_8$ लुब्धकं चार्जुनक च त ( hypermetric ), $D_9$ लुब्धकमर्जुनकं च त ( hypermetric )

63 $B_5$ om 63, $D_8$ om $63^a$ ( for both, cf v l. 62 ) $D_{4-10}$ $T_{1\ 3}$ $M_{1-3}$ om the ref —$^a$) $V_1$ B ( $B_4$ om ) Dn हि ( for [ए]व ) $T_3$ $G_{1\ 3\ 4}$ [अ]य ( for [अ]ह ) $B_1$ चाप्ययं, $D_7$ $G_{2\ 4}$ नाप्यहं ( for °यं ) —$^b$) $B_2$ ( marg ) न च, $D_{1-3}$ नापि, $D_{4\ 5}$ नेमौ; $T_1$ अय ( for नायं ) $D_{4-6}$ -पन्नगौ ( sic ) —$^c$) $D_{4\ 6}$ -करणे ( for मरणे )

64 $B_5$ om. 64 ( cf v l. 62 ) $D_{4\ 6-9}$ om ( hapl. ) $64^b$–$65^a$ —$^b$) $B_1$ तन्नो चार्जुन, S ( except $G_3$ $M_3$ ) तदर्जुनक $B_2$ चोदक·, $B_4$ चोदनं, $D_{10}$ T G चोदित ( for चोदकम् ). —$^c$) $V_1$ B ( $B_5$ om )

यदनेन कृतं कर्म तेनायं निधनं गतः ।
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥ ६५
कर्मदायादवाँल्लोकः कर्मसंबन्धलक्षणः ।
कर्माणि चोदयन्तीह यथान्योन्यं तथा वयम् ॥ ६६
यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति ।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ ६७
यथा छायातपौ नित्यं सुसंबद्धौ निरन्तरम् ।
तथा कर्म च कर्ता च संबद्धावात्मकर्मभिः ॥ ६८
एवं नाहं न वै मृत्युर्न सर्पो न तथा भवान् ।
न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणम् ॥ ६९
तस्मिंस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप ।
स्वकर्मप्रत्ययाँल्लोकान्मत्वार्जुनकमब्रवीत् ॥ ७०
नैव कालो न भुजगो न मृत्युरिह कारणम् ।
स्वकर्मभिरयं बालः कालेन निधनं गतः ॥ ७१
मया च तत्कृतं कर्म येनायं मे मृतः सुतः ।
यातु कालस्तथा मृत्युर्मुञ्चार्जुनक पन्नगम् ॥ ७२

भीष्म उवाच ।

ततो यथागतं जग्मुर्मृत्युः कालोऽथ पन्नगः ।
अभूद्विरोषोऽर्जुनको विशोका चैव गौतमी ॥ ७३
एतच्छ्रुत्वा शमं गच्छ मा भूश्चिन्तापरो नृप ।

---

Dn विनाश- ( for प्रणाश- ) D2 3 [ए]षोस्य, G1 3 [अ]न्योस्ति ( for [अ]न्योऽस्य ) —$^{d}$) Dn1 य॰ स्व-, D2 3 स्वेन ( for ऽयं स्व- )

65 B5 om up to कृतं ( in 65$^{a}$ ) ( cf v l 62 ) D4, 6–9 om 65$^{a}$ ( cf v l 64 ) T1 om 65–67 —$^{a}$) D3 यदि तेन ( for यदनेन ) D5 अकरोद्यदय कर्म —$^{c}$) D2 विनाशस्य ( hypermetric ) ( for विनाश- ) —$^{d}$) D1–3 सर्वे कर्मवशानुगा

66 T1 om 66 ( cf v l 65 ) D4 6–9 om ( hapl ) 66 G2 om 66$^{a}$–68$^{b}$ —$^{a}$) D10 T3 G1, 3 4 M -दायादको ( for °वाँल्ल॰ ) —$^{b}$) D10 T3 G1 3 4 M -बधन- ( for संबन्ध- ) —$^{c}$) Dn3 कर्मणा ( for कर्माणि ) D5 हि ( for [इ]ह ) —$^{d}$) T2 3 G1 3 4 M1, 3 4 तथा ( for यथा ) Dn2 [अ]न्योन्या B5 D2 3 10 T2 3 G1 4 M यथा ( for तथा ) D1–3 वय ( sic )

67 T1 om 67 ( cf v l 65 ) G2 om. 67 ( cf. v l. 66 ) —$^{a}$) M4 मृत्पिण्डक ( for °त ) —$^{d}$) M1 3, 4 मानव ( for °व ) D4–6 कर्ता प्राप्नोति मानव

68 G2 om 68$^{ab}$ ( cf. v l. 66 ) —$^{a}$) D4 छाया तथा ( for छायातपौ ) —$^{b}$) D2 समुद्बद्धौ, T2 स्वय वधौ ( for सुसबद्धौ ) B3 परस्पर ( for निरन्तरम् ) —$^{c}$) D9 om कर्ता च —$^{d}$) B1 समृद्धावार्धिकर्माभि ( sic )

69 $^{a}$) Dn2 एव D1–3 च ( for the first न ) D4, 6–9 [ए]व ( for वै ) D6 मृत्युं —$^{b}$) G2 नाहिर् ( for सर्पो ) —$^{c}$) T2 3 G1 3 4 [ए]व, G2 [इ]द ( for [इ]य ) T2 वध्या ( for वृद्धा )

70 Before 70, T3 G2 ins भीष्मः॰ —$^{a}$) D4, 6 तु ( for तु ) —$^{b}$) D4–9 तत॰ ( for नृप ) T2 M1–3 गौतमी ब्राह्मणी नृप —$^{c}$) D3 विकर्म-, D3 9 अ॰ ( for स्व॰ )

71 G1 M1 om ( hapl ) 71$^{a}$–74$^{b}$ Before 71, all MSS ( except G1 M1 ) ins गौतम्युवाच —$^{a}$) Dn3 नैव —$^{d}$) Dn1 विलय ( for निधनं )

72 G1 M1 om 72 ( cf. v l. 71 ) —$^{a}$) B2 [ए]तत् ( for तत् ) —$^{b}$) T2 योस्य धर्मे ( for येनाय मे ) D3 क्षत सुत, D4–9 मृत॰ शिशु॰, D10 T G3 4 M2 3 सुतो मृत ( by transp ) G2 एकोय ते न मे मृत —$^{c}$) T2 3 यथा ( for यातु ) —$^{d}$) T1 अर्जुन ( for [अ]र्जुनक )

73 G1 M1 om 73 ( cf v l 71 ) B2 reads 73 on marg —$^{b}$) D2 T2 मृत्यु, D3 मृत्यो ( for मृत्यु ). Dn3 ( marg, orig as in text ) [ऽ]पि ( for ऽथ ) —$^{c}$) V1 B ( except B5 ) Dn T1 2 वि( B1 अ )शोको ( for विरोषो ) —$^{d}$) D2 G3 विशोचा, T2 विरोषा ( for विशोका ) D1–3 चापि, D9 वापि ( for चैव )

74 G1 M1 om 74$^{ab}$ ( cf v l 71 ) —$^{a}$) D2 3 एव ( for एतत् ) —$^{b}$) D2 T G2 3 भूय् ( for भूश् ) V1 B Dn शोकपरो, D10 चिंतागतो ( for °परो ) — D2 om 74$^{c}$–75$^{d}$ —$^{d}$) D7 पुरुषर्षभ, D10 S समितिंजय ( for मनुजर्षभ ) V1 B1–4 Dn सर्वे गच्छति वै नृप ( Dn3 °पा ), B5 तान्विद्धि भरतर्षभ

75 D2 om 75 ( cf v l 74 ) —$^{a}$) V1 B न तत्; Dn1 n2 नैव; Dn3 नैतत्; D4 6 7 9 मनु ( for

स्वकर्मप्रत्ययाल्लोकांस्त्रीन्विद्धि मनुजर्षभ ॥ ७४
न तु त्वया कृतं पार्थ नापि दुर्योधनेन वै ।
कालेन तत्कृतं विद्धि विहता येन पार्थिवाः ॥ ७५

वैशंपायन उवाच ।
इत्येतद्वचनं श्रुत्वा बभूव विगतज्वरः ।
युधिष्ठिरो महातेजाः पप्रच्छेदं च धर्मवित् ॥ ७६

इति श्रीमहाभारते अनुशासनपर्वणि प्रथमोऽध्यायः ॥ १ ॥

# २

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
श्रुतं मे महदाख्यानमिदं मतिमतां वर ॥ १
भूयस्तु श्रोतुमिच्छामि धर्मार्थसहितं नृप ।
कथ्यमानं त्वया किंचित्तन्मे व्याख्यातुमर्हसि ॥ २
केन मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्जितः ।
इत्येतत्सर्वमाचक्ष्व तत्त्वेन मम पार्थिव ॥ ३

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्जितः ॥ ४
मनोः प्रजापते राजन्निक्ष्वाकुरभवत्सुतः ।
तस्य पुत्रशतं जज्ञे नृपतेः सूर्यवर्चसः ॥ ५
दशमस्तस्य पुत्रस्तु दशाश्वो नाम भारत ।
माहिष्मत्यामभूद्राजा धर्मात्मा सत्यविक्रमः ॥ ६

---

न तु ) V1 B Dn कर्म ( for पार्थ ) — b ) M1–8 तु ( for [अ]पि ) S ( except T2 ) च ( for वै ) — c ) D9 10 T1 [ए]तत्, G2 तं ( for तत् ) D4 6–9 कर्म ( for विद्धि ) — d ) D7 निहिता

76 D2 T2 om the ref — c ) B5 महाराज ( for °तेजा° ) — d ) D10 S स ( for च )

Colophon — *Parvan name* B1 3–5 D1 2 शांति — *Sub-parvan* V1 B2 4 Dn D1–4 दानधर्म — *Adhy name* V1 B1–3 5 Dn1 n3 गौतमीलुब्धकव्यालमृत्युकाल- ( B3 om काल )सवाद , B4 लुब्धकमृत्युसवाद , Dn3 D4–9 गौतम्यर्जुनक( D5 om क )मृत्युकालसवाद°, D1–3 गौतम्यादि( D3 समस्यादि )संवाद , D10 गौतमलुब्धकमृत्यु- कालसवाद°, T2 G1 गौतम्युपाख्यान, G2 4 गौतम्या- ख्यान, G3 गौतमीमृत्यूपाख्यान, M4 गौतमीलुब्धकपन्नग मृत्युकालसवाद° — *Adhy no* ( figures, words or both ) V1 B2 3 Dn1 n3 D5. 8 10 S 1 ( as in text ) — *Śloka no* Dn1 81, D4 82

## 2

1 a ) D4 महाप्रज्ञ — b ) D4. 7 -विशारद°. — c ) D3. 4 श्रुत ते ( D4 °त्वा मे ) महदाख्यातम् — d ) D4 om मति

2 a ) B5 Dn3 D1–3 T3 च ( for तु ) D4–9 भूय- श्चेच्छाम्यहं श्रोतुं — b ) B3 5 D4–9 वच ( for नृप ) — d ) D1 तं ( for तन् ) D1 अर्हति

3 a ) B3 यथा, B4 कथ ( for केन ) D4 मृत्यु T1 गृहस्थैश्च ( for °स्थेन ) — b ) D6 निर्जिता — B5 om ( hapl. ) 3c–4d — c ) G2 [ए]वं ( for [ए]तत् ) T2 3 G2–4 M1 3 4 धर्मम् ( for सर्वम् ) D4–6 9 एतत्सर्वं समाचक्ष्व — d ) V1 Dn D3 [अ]पि च ( for मम ) D2 3 तत्त्वेन परिपृच्छत°, S तत्त्वे( M4 °थ्ये )न भरतर्षभ

4 B5 om 4 ( cf v l 3 ) — a ) T2 [ए]व ( for [अ]पि )

5 For the substitution for 5c–12d in M1–3, cf. v l. 12 — c ) V1 तथा ( for तस्य ) — d ) B5 D4. 5 8 9 -तेजस ( for -वर्चस )

6 For the substitution in M1–4, cf v l 12 — a ) D2 G3 तत्र ( for तस्य ) D3 पुत्रस्य ( for °स्तु ) — b ) D1–3 विश्रुत , D4–9 नामत ( for भारत ) — c ) Dn1 D4 महिष्मत्याम् D2 3 G3 राजन् ( for राजा ).

दशाश्वस्य सुतस्त्वासीद्राजा परमधार्मिकः ।
सत्ये तपसि दाने च यस्य नित्यं रतं मनः ॥ ७
मदिराश्व इति ख्यातः पृथिव्यां पृथिवीपतिः ।
धनुर्वेदे च वेदे च निरतो योऽभवत्सदा ॥ ८
मदिराश्वस्य पुत्रस्तु द्युतिमान्नाम पार्थिवः ।
महाभागो महातेजा महासत्त्वो महाबलः ॥ ९
पुत्रो द्युतिमतस्त्वासीत्सुवीरो नाम पार्थिवः ।
धर्मात्मा कोशवांश्चापि देवराज इवापरः ॥ १०
सुवीरस्य तु पुत्रोऽभूत्सर्वसंग्रामदुर्जयः ।
दुर्जयेत्यभिविख्यातः सर्वशास्त्रविशारदः ॥ ११
दुर्जयस्येन्द्रवपुषः पुत्रोऽग्निसदृशद्युतिः ।
दुर्योधनो नाम महान्राजासीद्राजसत्तम ॥ १२
तस्येन्द्रसमवीर्यस्य संग्रामेष्वनिवर्तिनः ।
विषयश्च प्रभावश्च तुल्यमेवाभ्यवर्तत ॥ १३
रत्नैर्धनैश्च पशुभिः सस्यैश्चापि पृथग्विधैः ।
नगरं विषयश्चास्य प्रतिपूर्णं तदाभवत् ॥ १४

---

7 For the substitution in M1-8, cf v l 12 — a ) D4-10 T1-8 G1 8 4 M4 च ( for तु ) T2 दशाश्वस्य सुतस्यापि — d ) D4 G2 नित्यरत, D10 T2 नित्यव्रत, T8 G4 नित्य व्रत, G1. 8 सत्यव्रतं ( for नित्य रत ) Dn1 मम ( for मन )

8 For the substitution in M1-8, cf. v l 12 D4 6 om 8a-9b — b ) B5 D1-3 पृथिवीपते — c ) D5 निरतो ( for वेदे च ) — d ) D5 पृथिव्या ( for निरतो ) D10 T G M4 यस्य नित्य र( T1 M4 °त्यर )तं मन

9 For the substitution in M1-8, cf v l 12 D4 6 om 9ab ( cf v l 8 ) — a ) B5 पुत्रस्य ( for °स्तु ) — b ) D2 9 पार्थिव, D10 T G M4 भारत — c ) D1 महाभाग, D8 °भीमो ( for °भागो ) — d ) D4 om ( hapl ) महासत्त्वो

10 For the substitution in M1-8, cf. v l 12 — a ) Dn8 D4 5 T2 च ( for तु ) — After 10a, V1 B Dn D5 8 ins

14* राजा परमधार्मिक ।
सर्वलोकेषु विख्यात

— b ) V1 B2-4 Dn नामत, D2 8 विश्रुत, D4 10 पार्थिव ( for °व ) — T2 om 10c-12d — c ) V1 B Dn कोषवांश् Dn8 D10 T1. 8 G2 M4 [पु]व ( for [श्च]पि ) G1 8 4 धर्मात्मा भोगवांश्चैव — d ) T1 8 G M4 राजराज ( for देव° )

11 For the substitution in M1-8, cf v l. 12 T2 om 11 ( cf. v l 10 ) — a ) B2 8 D8 च, D4-6 [पु]व ( for तु ) D10 T1 8 G M4 च राजेंद्र ( for तु पुत्रोऽभूत् ) — b ) D10 T1 8 G M4 पुत्रो युद्धेषु दुर्जय — c ) T1 8 G M4 दुर्जयो नाम विख्यात — d ) D4 -शस्त्र- ( for -शास्त्र ) — For 11cd, V1 B ( except B5 ) Dn subst

15* सुदुर्जय इति ख्यात सर्वशस्त्रभृतां वर ।
[ V1 B2 ( marg ) स ( for सु- ) B8 सर्वशास्त्रभृतां ]

12 T2 om 12 ( cf v l 10 ) — a ) G4 partly damaged B2 ( marg ) D1 2 T1 [इ]दु ( for [इ]न्द्र ) G2 सदृश ( for -वपुष ) — b ) V1 B2-4 Dn D5 10 [s]ग्नि ( for ऽग्नि ) — d ) B8 [अ]भूद् ( for [आ]सीद् ) B2 5 D8 9 M4 -सत्तम V1 B4 Dn1 n2 राजा राजर्षिसत्तम — For 5c-12d, M1-8 subst

16* इक्ष्वाकोस्तु शतं पुत्रा दशाश्वो दशम स्मृत ।
माहिष्मत्यामभूद्राजा मदिराश्वस्ततोऽभवत् ।
तस्य च द्युतिमान्नाम सुवीरस्तस्य चात्मज ।
दुर्जयस्तस्य तस्यापि दुर्योधन इति स्मृत ।

13 a ) V1 -बल ( for -सम ) B1 -वीरस्य — b ) B8 [अ]निवर्तित, M1-8 [अ]पलायिन — c ) T G1 2 M प्रतापश् ( for प्रभावश् ) — d ) D1-8 [अ]भ्य( D2 °भि )पद्यत, D10 S [अ]भ्यवर्त( M2 °र्ध )तां ( for °वर्तत ) — For 13cd, V1 B Dn D5 8 subst

17* विषये वासवस्तस्य सम्यगेव प्रवर्षति ।

14 a ) M अन्नैर् ( for रत्नैर् ) B1 जनैश्च, D1 धनेन, D2-9 धनेन ( for धनैश्च ) D10 T G अन्नैर्धनैश्च बहुभि ( T1 om बहुभि ) — b ) D10 सरत्नैश्च पृथग्विधै, T1 बहुसैन्यैश्च भारत, T2 8 G M सस्यैरन्यै( G3 रत्नै, M1-8 °र्विप्रै )श्च भारत — c ) B2 नगरी B4 विषम, G2 °यं ( for °यश् ) T1 चापि, G1. 8 तस्य ( for चास्य ) D1-9 विषये ( D1-8. 5 °यो ) नगरं चास्य — d ) V1 B Dn D1. 5 10 G1. 4 M8 4 प्रति( B2 D5 G1. 4 परि )पूर्णस्, D2 4. 6 T2 परिपूर्णं ( for प्रति° ) T1 इव, T2 सदा ( for तदा ) D2 G3 परिपूर्णं तदा भवेत्, T8 G1 परिपूर्णंस्तथाभवत्

न तस्य विषये चाभूत्कृपणो नापि दुर्गतः ।
व्याधितो वा कृशो वापि तस्मिन्नाभूत्नरः कचित् ॥१५
सुदक्षिणो मधुरवागनसूयुर्जितेन्द्रियः ।
धर्मात्मा चानृशंसश्च विक्रान्तोऽथाविकत्थनः ॥ १६
यज्वा वदान्यो मेधावी ब्रह्मण्यः सत्यसंगरः ।
न चावमन्ता दाता च वेदवेदाङ्गपारगः ॥ १७
तं नर्मदा देवनदी पुण्या शीतजला शिवा ।
चकमे पुरुषश्रेष्ठं स्वेन भावेन भारत ॥ १८
तस्य जज्ञे तदा नद्यां कन्या राजीवलोचना ।
नाम्ना सुदर्शना राजन्रूपेण च सुदर्शना ॥ १९
तादृग्रूपा न नारीषु भूतपूर्वा युधिष्ठिर ।
दुर्योधनसुता यादृगभवद्वरवर्णिनी ॥ २०
तामग्निश्चकमे साक्षाद्राजकन्यां सुदर्शनाम् ।
भूत्वा च ब्राह्मणः साक्षाद्वरयामास तं नृपम् ॥ २१

---

15 $^{a}$) Dn8 D6 वाभूत्, D1-3 8 चासीत्, T G M1-3 कश्चित्, M4 तस्मिन् ( for चाभूत् ) — $^{b}$) D7-9 वापि, T G1. 3 4 नाम ( for नापि ) V1 दुष्कृत ( for दुर्गत ) D4-6 कृपणो वापि दुःखित — M1-3 om 15$^{cd}$ — $^{d}$) V1 तस्मिन्मा भून्, D1-3 तथा नाभून्, D4 6-9 तन्वा नाभून् ( for तस्मिन्ना° ) — For 15$^{cd}$, T G M4 subst

18* व्याधितो दुर्गतश्चैव पुरुषः प्रत्यदृश्यत ।
[ T1 M4 दुर्जनश् ( for दुर्गतश् ) ]

16 $^{a}$) D5-7 9 T G M4 स ( for सु ) — $^{b}$) T1 परमायुर् ( for अनसूयुर् ) — $^{c}$) D10 [अ]नृशसस्तु, T2 सत्य ( for °सश्च ) — $^{d}$) D4-7 9 S विक्रान्तो न विकत्थन

17 $^{a}$) V1 B1 5 D10 च दांतो, B3 Dn1 वदातो ( sic ) ( for वदान्यो ) — $^{b}$) G3 4 धृतिमान् ( for ब्रह्मण्य ) — D10 om 17$^{cd}$ — $^{c}$) Dn8 [ए]व ( for च ) — $^{d}$) B4 °वेदात

18 $^{a}$) D1 नदी देव ( for देवनदी ) — D10 om 18$^{b}$ — $^{b}$) D1 3 G1 पुण्य, G2 पुण्यं ( for पुण्या ) M4 शिव ( for शीत ) — $^{c}$) V1 B Dn °व्याघ्र; D9 श्रेष्ठ ( for श्रेष्ठ ) D10 चकमे देवरूपिणी — D10 om 18$^{d}$ — $^{d}$) D1 9 पार्थिव ( for भारत )

19 $^{a}$) N ( except D1-3 ) M3 तस्या ( for तस्य ) D2 यज्ञे ( for जज्ञे ) D4-6 9 सदा ( for तदा ) D1-3 तस्या ( for नद्यां ) — $^{b}$) D1-9 कमल ( for राजीव ) — $^{c}$) D4 सा हि, D5-9 M नाम, T G चैव ( for राजन् )

20 $^{a}$) G4 ( inf lin as in text ) तादृग्विधा ( for °रूपा ) — $^{b}$) G4 M1-3 कदाचन ( for युधिष्ठिर ) — M1-3 om 20$^{cd}$

21 After 21$^{ab}$, S ( except T2 3 ) reads 27$^{cd}$ for the first time, repeating it in its proper place D10 T2 3 ins after 21$^{ab}$ T1 G M after the first occurrence of 27$^{cd}$

19* सा चाग्निशरणे राज्ञः शुश्रूषाकृतनिश्चया ।
नियुक्ता पितृसंदेशादारिराधयिषुः शिखिम् ।
तस्या मनोरमं रूपं दृष्ट्वा देवो हुताशनः ।
मन्मथेन समाविष्टः पत्नीत्वे यतते मिथः ।
अग्नि: ।
भज मामनवद्याङ्गि कामारकमललोचने । [ 5 ]
रम्भोरु मृगशावाक्षि पूर्णचन्द्रनिभानने ।
तवेदं पद्मपत्राक्षं मुखं दृष्ट्वा मनोहरम् ।
भ्रूलताकलितं कान्तमनङ्गो बाधते हि माम् ।
ललाटं चन्द्रलेखाभं शिरोरुहविभूषितम् ।
दृष्ट्वा ते पत्रलेखाङ्कमनङ्गो बाधते भृशम् । [ 10 ]
बालातपेनाकुलितं सस्वेदपुलकोद्गमम् ।
बिम्बाधरोष्ठं वदनं विबुद्धमिव पङ्कजम् ।
अतीव चारुविभ्रान्तं मुदमावहते मम ।
दन्तप्राकारनियता वाणी तव सुरक्षिता ।
ताम्रपल्लवसंकाशा जिह्वेयं ते मनोहरा । [ 15 ]
समा स्निग्धा सुजाताश्च सहिताश्च द्विजास्तव ।
द्विजप्रिये प्रसीदस्व भज मां सुभगा ह्यसि ।
मनोज्ञं शुक्लतापाङ्गं मुखं तव मनोहरम् ।
स्तनौ ते संहतौ भीरु हाराभरणभूषितौ ।
पक्वबिल्वप्रतीकाशौ कर्कशौ संगमक्षमौ । [ 20 ]
गम्भीरनाभिसुभगे भज मां वरवर्णिनि ।
भीष्म ।
सैवमुक्ता विरहिते पावकेन महात्मना ।
ईषदाकम्पिहृदया व्रीडिता वाक्यमब्रवीत् ।
ननु नाम कुलीनानां कन्यकानां विशेषतः ।

दरिद्रश्चासवर्णश्च ममायमिति पार्थिवः ।
न दित्सति सुतां तस्मै तां विप्राय सुदर्शनाम् ॥ २२
ततोऽस्य वितते यज्ञे नष्टोऽभूद्धव्यवाहनः ।
ततो दुर्योधनो राजा वाक्यमाहर्त्विजस्तदा ॥ २३

दुष्कृतं मम किं नु स्याद्भवतां वा द्विजर्षभाः ।
येन नाशं जगामाग्निः कृतं कुपुरुषेष्विव ॥ २४
न ह्यल्पं दुष्कृतं नोऽस्ति येनाग्निर्नाशमागतः ।
भवतां वाथ वा मह्यं तत्त्वेनैतद्विमृश्यताम् ॥ २५

माता पिता प्रभवत. प्रदाने बान्धवाश्च ये । [25]
पाणिग्रहणमन्त्रैश्च हुते चैव विभावसौ ।
सता मध्ये निविष्टाया कन्याया शरणं पति ।
साहं नात्मवशा देव पितरं वरयस्व मे ।
अथ नातिचिरात्कालाद्राजा दुर्योधन किल।
यज्ञसंभारनिपुणान्मन्त्रीनाहूय चोक्तवान् । [30]
यज्ञ यक्ष्येऽहमिति वै संभारा संश्रियन्तु मे ।
तत समाहितस्तस्य यज्ञो ब्राह्मणसत्तमै ।

[ (L 1) T2 8 राज्ञे, M1-8 राजा (for राज्ञ) —(L 2) T8 पुत्र- (for पितृ-) —(L 3) M2 तस्मान् (for तस्या) D10 T1 2 G2 8 तस्या म(T1 °स्मान्म)नोहर रूप (for the prior half) — G8 om the ref T2 पति (for अग्नि) —(L 5) G2 काम (for कामात्) —(L 7) M1 2 4 मनोरमं (for °हरम्) —(L 8) M1 2 च (for हि) —(L 9) D10 T1 3 G2 8 -रेखाभ (for -लेखाभ) G2 -विभूषण —(L 10) T1 -रेखाकम् —(L 11) T2 G8 तुलित (for [आ]कु°) T1 सस्वेद, G2 स्वेदेन (for सस्वेद-) —(L 12) D10 T1 2 G1 8 4 बिंबाधरोष्ठ- (for °रोष्ठ). T1.8 प्रबुद्धम्, G4 विवृ° (for विवु°) —(L 13) D10 T2 G मदम् (for सुदम्) — T1 om lines 14-15 —(L 14) T2 G2 8 -प्रकाश- (G2 °र-) (for प्राकार) D10 तन्त्रीप्रकारनियना (for the prior half) —(L 15) T2 G M4 मे (for ते) M4 मनोहरत्व (for °हरा) —(L 16) T1 चले जाता (for सुजाताश्च) T1 द्विजास्तव मनोहरे (for the post. half) —(L 17) M1-8 मा (for मां) —(L 19) D10 सुहृतौ, M1-8 सहितौ (for सहृतौ) T1 पीनौ (for भीरु) T1 G2 M4 वराभरण- (for हारा°) —(L 20) T1 पर्व- (for पक्ष) T1 M -विंब (for -बिल्व-) D10 सगत- (for सगम-) —(L 21) D10 G1 2 4 M2 -नाभि (for नाभि-) — M om the ref —(L 22) D10 G1.4 निर भीता, M1 2 विरहसि (for °हिते) —(L 23) T8 G2 M1-8 ईपदाकप- T1 G1 4 -हृदय (for °या) — Before line 24, G2 ins सुदर्शना —(L 25) G2 प्रदाने बांधनाश्रये (for the post half) —(L 27) M4 सभा- (for सतां) M विसृष्टाया (for निवि°) T1 प्रति (for पति) —(L 28) T1 साहमात्मवशा नैव (for the prior half) — Before line 29, T8 ins भीष्म° —(L 29) T2 transp राजा and कालात् D10 तथा, T2 G8 तदा (for किल) —(L 31) M4 यज्ञ *जिष्येहमिति (for the prior half) —(L 32) D10 T2 G समाहिते (for °हितस्) T1 यज्ञ, T2 G M2 यज्ञे (for यज्ञो) ]

— D4 om. $21^{c}$–$22^{b}$ — $^{c}$) V1 B Dn D10 राजन् (for साक्षाद्) — $^{d}$) B1 दर्शयामास (for वर°) B5 D5-9 ता (for तं) D5 7-9 नृप (for नृपम्) — For $21^{cd}$, S subst

20* विप्ररूपी हुतवहो नृपं कन्यामयाचत ।

[ G2 विप्ररूपो T2 G1 नृप- (for नृप) ]

— After the above, S cont

21* न तु राजा प्रदानाय तस्मै भावमकल्पयत् ।

22 D4 om $22^{ab}$ (cf v l. 21) — $^{b}$) D9 मया (for मम) V1 T1 2 पार्थिव — $^{c}$) B2 (marg as in text) नादित्सत (for न दित्सति) B1 4 D10 तदा, D8 ततस् (for सुता) B8 5 D1.2 न दि(D1 नादि)त्सत तदा त(D2 °तस्त)स्मै, Dn8 (marg) नादित्सत्स तदा तस्मै, D6-9 नादिशत्स त(D8 स)दा तस्मै — $^{d}$) B5 कन्या वै (for विप्राय) — For $22^{cd}$, S subst

22* इति तस्मै न वै कन्या दित्साचक्रे नराधिप ।

[ M मत्वा (for इति) T1.2 स (for न) T1 2 राजा (for कन्यां) T1 8 मतिं, G2 दीक्षां (for दित्सा) G2 नराधिप ]

23 For the substitution for $23^{a}$–$27^{b}$ in S, cf v l 27 — $^{c}$) V1 B Dn D5 10 सुदुःखितो (for दुर्योधनो) — $^{d}$) V1 B2 Dn D4-9 द्विजास्, B1 8 द्विज (for [ऋ]त्विजस्) B5 Dn3 तथा (for तदा)

24 For the substitution in S, cf v l 27 — $^{a}$) Some MSS दुःकृत B1 न (for नु) — $^{b}$) D9 द्विजर्षभ — $^{c}$) D1 नाम (for नाश) D10 गतो वह्नि (for जगामाग्नि) — $^{d}$) B3 कृति (for कृत) D1-3 7 [इ]ह (for [इ]व)

25 For the substitution in S, cf v l 27 D5

एतद्राज्ञो वचः श्रुत्वा विप्रास्ते भरतर्षभ ।
नियता वाग्यताश्चैव पावकं शरणं ययुः ॥ २६
तान्दर्शयामास तदा भगवान्हव्यवाहनः ।
स्वं रूपं दीप्तिमत्कृत्वा शरदर्कसमद्युतिः ॥ २७
ततो महात्मा तानाह दहनो ब्राह्मणर्षभान् ।
वरयाम्यात्मनोऽर्थाय दुर्योधनसुतामिति ॥ २८

ततस्ते काल्यमुत्थाय तस्मै राज्ञे न्यवेदयन् ।
ब्राह्मणा विस्मिताः सर्वे यदुक्तं चित्रभानुना ॥ २९
ततः स राजा तच्छ्रुत्वा वचनं ब्रह्मवादिनाम् ।
अवाप्य परमं हर्षं तथेति प्राह बुद्धिमान् ॥ ३०
प्रायाचत नृपः शुल्कं भगवन्तं विभावसुम् ।
नित्यं सांनिध्यमिह ते चित्रभानो भवेदिति ।

om 25 — [a]) D4 6–9 [अ]लु, D10 [अ]न्य (for [अ]ल्प) Some MSS दुष्कृत Dn3 D3 7–9 न, D4 6 च (for नो) — [b]) D4 om भ्रिनां D1–3 7 8 आगमत्, D4 6 आसुयात्, D9 आगतं (for °त) — [c]) B3 5 Dn च (for the first वा) — [d]) V1 B (except B2) Dn3 D6 10 विमृश्यतां

26 For the substitution in S, cf v l 27 — [a]) Dn1, n2 D10 तत्र (for एतद्) — [b]) D7 पुरुषर्षभ (for भरत) — [c]) D7 नियतावतपाश्चैव (sic)

27 [a]) D4–9 तदा तान्दर्शयामास — For 23[c]–27[b], S subst.

23* अथ दीक्षामुपेतस्य यज्ञे तस्य महात्मनः ।
आहितो हवनार्थाय वेद्यामग्निः प्रणश्यत ।
तत स भीतो नृपतिर्भृशं प्रव्यथितेन्द्रिय ।
मन्त्रिणो ब्राह्मणांश्चैव पप्रच्छ किमिदं भवेत् ।
यज्ञे समिद्धो भगवान्नष्टो मे हव्यवाहन । [5]
समन्त्रकुशलैस्तैस्तु ब्राह्मणैर्वेदपारगै ।
अमानुषो विकारोऽयमिति तैरेव बोधित ।
धर्मविघ्नकर वीर नैतत्त्वय्युपपद्यते ।
स्तूयता भगवान्वह्निर्ब्राह्मणैर्वेदपारगै ।
ऋत्विग्भिर्मन्त्रकुशलैर्गीयतां वै हुताशन । [10]
अथ ऋक्सामयजुषां पारगैर्वेदपारगै ।
वेदतत्त्वार्थकुशलै स्तुत स्तोमपुरस्कृतै ।
गुह्येषु नामधेयेषु कीर्त्यमानेषु पावक ।

[(L 1) T1 निद्राम् (for दीक्षाम्) —(L 2) G2 आहूतो (for आहितो) T1 आहितोभूद्धुताशाय (for the prior half) G प्रणश्यति (for त) —(L 3) G स (for स) T1 भृशं प्राप्य जितेंद्रिय (for the post half) —(L 5) T1 समिद्धे —(L 6) T3 G तैर् (for तु) T3 वेदवेदांतपारगै (for the post half) — After line 6, T2 reads line 13 for the first time, repeating it in its proper place T2 om lines 7–9 T3 repeats line 7 after line 9 G3 reads lines 7–9 twice —(L 7) T1 अव, M1–3 अनु- (for एव) —(L 8) M1–3 transp वीर and नैतत् —(L 9) M1, 2 4 हूयतां (for स्तू°) T1 M2 अग्निर् (for वह्निर्) —T3 om lines 10–11 —(L 10) T1 नियत, Kumbh ed यज्यतां (for गीयतां) G1 वा (for वै) —(L 11) T2 M पारगैर्ब्रह्मवादिभि°, Kumbh ed ब्राह्मणैर्वेदपारगै (for the post half) —(L 12) T1 स्तुतिस्तोम-, T2 3 M1–3 स्तुत साम-, M4 स्तुत सोम (for स्तुत स्तोम) Kumbh ed तत सोमपुरस्कृतै (for the post half) —(L 13) T2 (first time) Kumbh ed गुह्यैश्च नामभि सर्वैरर्चितो (Kumbh ed °राहूतो) हव्यवाहन ]

—T1 G M read 27[cd] for the first time after 21[ab] — [c]) B1 2 Dn1 D3–5 T1 (both times) 3 G1 (both times) 2 3 (both first time) 4 (both times) M1 (first time) 2 3 (both both times) 4 (second time) स्व, T2 सु (for स्व) — [d]) T1 (second time) om from शरद up to महात्मा (in 28[a]) D1–4 7 9 शा(D7 श)रदार्क (D1 °दाक) (for शरदर्क-) T2 द्युतिं, G3 (first time) M1 2 (both both times) 3 (first time) द्युति (for द्युति)

28 T1 om up to महात्मा (in 28[a]) (cf v l 27) — [a]) D4–9 दहनो, T1 प्रोवाच (for तानाह) — [b]) D4–9 [ऽ]ब्रवीत्तान् (for दहनो) — Before 28[cd], D6 (marg) ins अग्निरुवाच — [c]) T1 2 G M वरये हि, T3 वरिष्ये हि (for वरयामि) — [d]) D10 T1 3 इमां (for इति)

29 [a]) T3 तत् (for ते) V1 B Dn D2 5 10 कल्यम्, M1 3 कार्यम् (for काल्यम्) — T2 om. 29[cd] — [c]) D4–9 विस्मिता ब्राह्मणा सर्वे

30 [a]) Dn1 om स D3 9 सं (for तत्) — [b]) D5 ब्राह्मणस्य वच शुभ — [c]) D4 5 8 9 अवाप (for प्य) T3 च परं (for परमं)

31 [a]) V1 B2 5 Dn2 n3 अयाचत, B1 प्रोवाच त, Dn1 D4–7 T2 3 प्रयाचत, T1 प्रावेदयत् (for प्रायाचत) V1 B1–3 Dn3 T G1 3 4 M तत°, Dn1 n2 G2 च त (for नृप) Dn1 शुल्कं B4 प्रोवाच च वच

तमाह भगवानग्निरेवमस्त्विति पार्थिवम् ॥ ३१
ततः सांनिध्यमद्यापि माहिष्मत्यां विभावसोः ।
दृष्टं हि सहदेवेन दिशो विजयता तदा ॥ ३२
ततस्तां समलंकृत्य कन्यामहतवाससम् ।
ददौ दुर्योधनो राजा पावकाय महात्मने ॥ ३३
प्रतिजग्राह चाग्निस्तां राजपुत्रीं सुदर्शनाम् ।
विधिना वेददृष्टेन वसोर्धारामिवाध्वरे ॥ ३४
तस्या रूपेण शीलेन कुलेन वपुषा श्रिया ।
अभवत्प्रीतिमानग्निर्गर्भं तस्यां समादधे ॥ ३५
तस्यां समभवत्पुत्रो नाम्नाग्नेयः सुदर्शनः ।
शिशुरेवाध्यगात्सर्वं स च ब्रह्म सनातनम् ॥ ३६
अथौघवान्नाम नृपो नृगस्यासीत्पितामहः ।
तस्याप्योघवती कन्या पुत्रश्चौघरथोऽभवत् ॥ ३७
तामोघवान्ददौ तस्मै स्वयमोघवतीं सुताम् ।
सुदर्शनाय विदुषे भार्यार्थे देवरूपिणीम् ॥ ३८
स गृहस्थाश्रमरतस्तया सह सुदर्शनः ।
कुरुक्षेत्रेऽवसद्राजन्नोघवत्या समन्वितः ॥ ३९
गृहस्थश्चावजेष्यामि मृत्युमित्येव स प्रभो ।
प्रतिज्ञामकरोद्धीमान्दीप्ततेजा विशां पते ॥ ४०
तामथौघवतीं राजन्स पावकसुतोऽब्रवीत् ।

---

श्लक्ष्ण, D10 प्रोवाच वचनं शुल्क — c) T1 M नित्य- (for नित्यं) D1 आधत्स्व (for इह ते) D2 8 नित्यं मे तव सानिध्य — e) D1-9 वह्निर् (for अग्निर्) — f) D8 पार्थिव, G2 भारत

32 For the event, cf 2 28 11-36 — a) V1 B (except B5) Dn8 अत (for तत) T8 अत्रासीन् (for अद्यापि) Dn1 तत सानिध्यमानापि (sic) — b) D6 महिष्मत्या — c) D1-9 तत् (for हि) — d) V1 B Dn D1. 2 10 दिश (for दिशो) B1 विजयते T1. 2 G M च तत्, T8 [अ]भवत् (for तदा)

33 b) Dn1 n2 आहत-, Dn8 आहत- (for अ°) D4 6 7 -वाससा

34 a) B2 8 तामग्नी, Dn1 n2 चाग्निस्तु (for °स्तां) — b) Dn1. n2 राजकन्या (for °पुत्री) — c) D2 देव- (for वेद-) — d) G3 [आ]त्मने (for [अ]ध्वरे)

35 a) D2 तस्यानुरूपेण (hypermetric) — b) B1 देवेन, B3 वयसा, D2 om (for कुलेन) — d) D1 तस्यै, D4 5 10 T G चास्यां (for तस्या) D8 समा ददे (for °दधे) V1 B Dn गर्भं चास्या (Dn8 °स्या) मनो दधे

36 a) B2 damaged, D1 4 7-9 S (except M8) तस्या (for तस्या) — b) D4 6 8 नाम (for नाम्ना) B3 [आ]त्रेय, M1 4 [आ]त्रेय (for [आ]ग्नेय) — After 36ab, V1 B (except B1) Dn D4 5 (repeating it after 39ab) 6-10 ins

24* सुदर्शनस्तु रूपेण पूर्णेन्दुसदृशोपम ।
[ B3 तत्गि- (for पूर्णेन्दु-) ]

— c) D1 T2 3 G अभ्यगात् (for अध्य°) — d) B1 Dn1 n8 परं, Dn2 पर (for स च)

37 a) Dn2 T1 G1 4 M3 4 अथोघवान्, D1-9 अमोघवान् (for अथौघ°) — b) D1 2 G4 नृपस्य, G1 damaged (for नृगस्य) — c) V1 B Dn D1 10 [अ]थ, D4 5 8 च, D6 9 वा (for [अ]पि) T G1. 8 4 पुत्री, G2 प्राप्य (for कन्या) — d) Dn8 D2 G चोघरथो, D10 चौघरसो, T1 चारुरथो (for चौघ°) D1-9 पुत्रश्चो (D4 7 °श्चौ) घरथो महान्

38 a) B1 अथोघवान्, B3 तामौ° — b) B6 औघवतीं, T1 व्योमवतीं (for ओघ°) T G1-3 M तदा, G4 तथा (for सुताम्) — c) T3 विधिवद् (for विदुषे) — d) B1 भार्याख्ये, Dn1 D2 8 °र्थं (for °र्थे) B2 3 देवरूपिणे

39 a) T -गतस्, G2 -परस् (for रतस्) D1 6-9 स च (D4 6 वै) गृहाश्रमरतो, D5 सा गृहस्थाश्रमरता — b) D1-9 ययौ राजा (for तया सह) — After 39ab, D5 repeats 24* — c) D5 9 G1 [ऽ]वसन् (sic) — d) T1 व्योमवत्या (for ओघ°) M4 समाहित (for समन्वित)

40 a) D2 8 [प्र]त्र, D5 वि, D10 T2 8 G1 3 4 [उ]प (for [अ]व)

41 a) G1 om अथ D1-6 8 9 T G1-3 M1 ब्यो (D5 T2 3 M4 °वो) घवतीं D5 यो हि (for राजन्) — c) G2 अनिर्थान् (for थे) D2 3 प्रतिगृह्य (for °कूल ते) — d) B om न B1 D2 3 कदाचन (for कथं°)

अतिथेः प्रतिकूलं ते न कर्तव्यं कथंचन ॥ ४१
येन येन च तुष्येत नित्यमेव त्वयातिथिः ।
अप्यात्मनः प्रदानेन न ते कार्या विचारणा ॥ ४२
एतद्व्रतं मम सदा हृदि संपरिवर्तते ।
गृहस्थानां हि सुश्रोणि नातिथेर्विद्यते परम् ॥ ४३
प्रमाणं यदि वामोरु वचस्ते मम शोभने ।
इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा ॥ ४४
निष्क्रान्ते मयि कल्याणि तथा संनिहितेऽनघे ।
नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव ॥ ४५
तमब्रवीदोघवती यता मूर्ध्नि कृताञ्जलिः ।
न मे त्वद्वचनात्किंचिदकर्तव्यं कथंचन ॥ ४६
जिगीषमाणं तु गृहे तदा मृत्युः सुदर्शनम् ।
पृष्ठतोऽन्वगमद्राजन्रन्ध्रान्वेषी तदा सदा ॥ ४७
इध्मार्थं तु गते तस्मिन्नग्निपुत्रे सुदर्शने ।
अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा ॥ ४८
आतिथ्यं दत्तमिच्छामि त्वयाद्य वरवर्णिनि ।
प्रमाणं यदि धर्मस्ते गृहस्थाश्रमसंमतः ॥ ४९
इत्युक्ता तेन विप्रेण राजपुत्री यशस्विनी ।
विधिना प्रतिजग्राह वेदोक्तेन विशां पते ॥ ५०
आसनं चैव पाद्यं च तस्मै दत्त्वा द्विजातये ।
प्रोवाचौघवती विप्रं केनार्थः किं ददामि ते ॥ ५१
तामब्रवीत्ततो विप्रो राजपुत्रीं सुदर्शनाम् ।

---

42 a) D6 om one येन D2 8 स (for च) — b) B1 तथा, D8 तव, D5 7 स च, D10 सदा (for त्वया) D3 S नित्यमेवातिथिस्तव, D4 6 8 9 व स चातिथि — c) D8 9 तथा (for अपि) D1 तस्यात्मन प्रदाने ते — d) Dn3 om न D2 8 G4 ते न (by transp)

43 a) T2 M1–3 वृत्तं (for व्रतं) M1–3 हृदि (for मम) — b) D2 M1–3 मम (for हृदि) — c) B Dn1. n2 D4–6 च, M1–3 तु (for हि) — d) B1 भिद्यते (sic) (for वि) G2 वर (for परम्)

44 a) B1 प्रदानं (for प्रमाण) — b) S वचनं (for °स्ते) — c) D2 अव्यग्र्या — d) D4 6 8 9 T3 G4 M हृदा (for हृदि) T2 सं (for त्वं) D1. 5 7 G1–3 धारयेत् (for ये) B4 हृदि त्व धारयिष्यसि, T1 हृदा त्व धारयस्व ह

45 a) Some MSS निःक्रांते — b) T1 G2 न मे (sic); T2 च वै (for ऽनघे) — c) S (except G2) अतिथिर्नावमंतव्य

46 a) T2 G1 3 ततोब्रवीद् Dn1 D7 ओघमती (for °वती) — b) V1 B Dn D10 T1 तथा, D1 (also as in text) गत, D6–9 यतो, T2 G1. 3 4 यत्ता (for यता) — c) S (except G2) तद्वचन B3 om किंचित् — d) B2 5 Dn1. n2 D1 3 6 8 न कर्तव्य (for अक) D4–6 हि किंचन (for कथंचन)

47 a) N (except D1–3) T2 3 G M2 जिगीषमाण (D4. 6 °णा)स् (for माणं) T1 स राजन्, T2 G तु सदा, T3 M तु तदा (for तु गृहे) — b) D2. 3 T2 3 G1 3 4 M4 तथा, T1 M1–3 सदा (for तदा) G3 सुदर्शन — c) Dn3 [ऽ]नुगमद् T1 चैव (for राजन्) — d) D1–9 सदा स(D5 7 9 त)दा, T1 महामते, T2 G1 2 4 M तथा स(M4 त)दा (for तदा सदा)

48 a) D6 नु (for तु) — b) D8 त्वग्नि (for अग्नि) — c) D4 श्री*, T3 भूत्वा (for श्रीमांस्) — d) B5 तव; D1 2 सदा (for तदा) T1 corrupt, G1. 3 स तामोघवतीं तदा

49 a) D5 अतिथिर् (for आतिथ्यं) V1 B Dn D10 कृतम्, D1. 2 दातुम्, T2 G1. 3 4 कर्तुम् (for दत्तम्) — b) D4 6–9 [अ]हं (for [अ]द्य) — c) D8 वा धर्मस्ते (hypermetric), D4–8 ते धर्मो (by transp), T1 M धर्मास्ते — d) D8 T1 M -समता, G2 -सपद- (for -संमत)

50 a) Dn2 n3 D1 3. 6–8 T2 3 G1–3 M3 [उ]क्त्वा (for [उ]क्ता) — b) D8 राजपत्नी (for °पुत्री)

51 b) T1 transp तस्मै and दत्त्वा B4 द्विजाय ये, D2 विशां पते (for द्विजातये) B1 तस्मै नत्वा द्विजाय ये — c) B1 D10 विप्र (for विप्रं) — d) B4 किमर्थं, D10 G1 2 4 केनार्थी, T1 कोर्थस्ते (for केनार्थ) V1 Dn3 T1 M1–3 ददानि (for °मि) D1. 3–9 केनार्थ किं (D5 त) प्रदीयतां

52 a) D4 corrupt. D5–7 9 तदा (for ततो) T1 3 G M4 राजन् (for विप्रो) — b) M4 यशस्विनीं (for सुदर्शनाम्) — T1 om 52cd — c) D8 समार्थं,

त्वया ममार्थः कल्याणि निर्विशङ्के तदाचर ॥ ५२
यदि प्रमाणं धर्मस्ते गृहस्थाश्रमसंमतः ।
प्रदानेनात्मनो राज्ञि कर्तुमर्हसि मे प्रियम् ॥ ५३
तथा संछन्द्यमानोऽन्यैरीप्सितैर्नृपकन्यया ।
नान्यमात्मप्रदानात्स तस्या वव्रे वरं द्विजः ॥ ५४
सा तु राजसुता स्मृत्वा भर्तुर्वचनमादितः ।
तथेति लज्जमाना सा तमुवाच द्विजर्षभम् ॥ ५५
ततो रहः स विप्रर्षिः सा चैवोपविवेश ह ।
संस्मृत्य भर्तुर्वचनं गृहस्थाश्रमकाङ्क्षिणः ॥ ५६
अथेध्मान्समुपादाय स पावकिरुपागमत् ।
मृत्युना रौद्रभावेन नित्यं बन्धुरिवान्वितः ॥ ५७
ततस्त्वाश्रममागम्य स पावकसुतस्तदा ।
तामाजुहावौघवतीं क्वासि यातेति चासकृत् ॥ ५८
तस्मै प्रतिवचः सा तु भर्त्रे न प्रददौ तदा ।
कराभ्यां तेन विप्रेण स्पृष्टा भर्तृव्रता सती ॥ ५९
उच्छिष्टास्मीति मन्वाना लज्जिता भर्तुरेव च ।
तूष्णींभूताभवत्साध्वी न चोवाचाथ किंचन ॥ ६०
अथ तां पुनरेवेदं प्रोवाच स सुदर्शनः ।
क्व सा साध्वी क्व सा याता गरीयः किमतो मम ॥ ६१
पतिव्रता सत्यशीला नित्यं चैवार्जवे रता ।
कथं न प्रत्युदेत्यद्य स्मयमाना यथा पुरा ॥ ६२
उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनम् ।

(for ममा°) — d) D1–9 T2 G निर्विशंकं, D10 T3 M °शंका (for °शङ्के) G1 damaged for तदाचर

53 G2 om 53a–56b — a) T M धर्मास — b) T M -संमता

54 G2 om 54 (cf v l 53) Before 54, D10 ins वैशंपायन उवाच — a) V1 B Dn D10 स तया (B1 °दा), D2 त्वया स, D5–7 M1 2 4 तया सं- (for तथा स) D4 तदा सछद्यमानोन्यैर्, T1 3 तया संचोद्य°, T3 G1 3 4 M3 तया (T3 M3 °था) संछाद्य° — b) D2 -कन्यका (for °या) — c) D4 6 हि, D5 7–9 वै (for स) — d) G1 partly damaged V1 D4 वर (for वरं) D2 द्विज, D4 -द्विजं

55 G2 om 55 (cf v l. 53) — a) D7 तस्य (for स्मृत्वा) — b) D7 स्मृत्वा, D9 तस्य (for भर्तुर्)

56 G2 om 56ab (cf v l 53) — a) Dn1 n2 Cn विहस्य, D1–9 वहि स (for रह स) — b) Dn3 सा वा, T2 स ह (for सा च) B1 Dn1 n2 D10 [अ]थ (for [उ]प-) — d) B3 गृहमाश्रम D1 -काक्षिता, T1, 3 G -कारिण ; T2 -कारण (for -काङ्क्षिण)

57 a) B1 3 D1 5 7 T1 अथेर्ध्मं, D3 corrupt, D9 अथेध्मा, T3 अथेर्धं (sic), G2 आदेशात् (for अथेध्मान्) V1 B3 4 Dn D6 G4 अथेध्मानमुपादाय, D3 अथेध्ममनुपा° — d) T1 निस्य (for नित्य).

58 T1 om 58ab — a) D5 स्वाश्रमम् (for स्वा°) B4 आगत्य — b) V1 B स्व (for स) D7 पावकि (for °क) D2 8 स पावकिरतस्तदा — c) V1 B Dn D10 व्याजहार (for आजुहाव) D9 [ओ]घवती — d) D5 यातेपि (sic) (for °ति) D8 वासकृद्, D1–6 चाब्रवीत् (for चासकृत्)

59 a) D4 6–9 तस्मिन् (for तस्मै) D6 नु (for तु) — b) B1 भद्रे (sic) (for भर्त्रे) D4 प्रति (for न प्र) G1 सदा (for तदा) — d) B3 मृष्टा, D2 दृष्ट्वा, G4 स्पृष्ट्वा (for स्पृष्टा) G4 सदा (for सती)

60 a) T2 न दोषोस्ति (for उच्छिष्टासि) — b) D2 ललिता, T1 वर्जिता (for लज्जिता) — c) D6 1 तूष्णी- (for तूष्णीं-) D3 -भूत्वा (for -भूता) — d) D2 वा (for च) S विप्रकोपाच्च शंकिता

61 a) M [अ]पि (for [इ]द) T G अथ ता कि न्वि (G2 किं स्वि)ति पुन — b) D7 om , T G च (for स) D4 प्रोवाच समदर्शन — c) D1 om क्व सा सा G3 reads क्व सा साध्वी twice V1 B1 4 5 Dn3 D1–8 वा (for the second सा) — T1 om 61d–62a — d) B1 यवीय (for गरीय)

62 T1 om 62a (cf v l 61) T3 om 62ab — a) B1 D4 5 धर्म (for सत्य) — b) V1 चैवार्जिते; D2 देवार्चने — c) M4 नु (for न) B1 2 प्रत्युपैति, D10 प्रवदति (for प्रत्युदेति) D1 om , D2 3 स्म; G1 [अ]स्य (for [अ]द्य) B1 कथ न प्रत्यागच्छेत्स्मा; T1 म

अतिथिं विद्धि संप्राप्तं पावकं ब्राह्मणं च माम् ॥ ६३
अनया छन्द्यमानोऽहं भार्यया तव सत्तम ।
तैस्तैरतिथिसत्कारैरार्जवेऽस्या दृढं मनः ॥ ६४
अनेन विधिना सेयं मामर्चति शुभानना ।
अनुरूपं यदत्राद्य तद्भवान्वक्तुमर्हति ॥ ६५
कूटमुद्गरहस्तस्तु मृत्युस्तं वै समन्वयात् ।
हीनप्रतिज्ञमत्रैनं वधिष्यामीति चिन्तयन् ॥ ६६
सुदर्शनस्तु मनसा कर्मणा चक्षुषा गिरा ।
त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदम् ॥ ६७

सुरतं तेऽस्तु विप्राग्र्य प्रीतिर्हि परमा मम ।
गृहस्थस्य हि धर्मोऽग्र्यः संप्राप्तातिथिपूजनम् ॥ ६८
अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति ।
नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः ॥ ६९
प्राणा हि मम दाराश्च यच्चान्यद्विद्यते वसु ।
अतिथिभ्यो मया देयमिति मे व्रतमाहितम् ॥ ७०
निःसंदिग्धं मया वाक्यमेतत्ते समुदाहृतम् ।
तेनाहं विप्र सत्येन स्वयमात्मानमालभे ॥ ७१
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।

---

प्रत्युद्याति च कथं —$^{d}$) D4 6 पुरा यथा (by transp), G3 M यथापुर, G4 यशस्विनी

63 $^{a}$) D2 उटजस्थं (for स्थम्) D5 स्तुवन् (for सु तं) —$^{c}$) Dn1 विधि (for विद्धि) —$^{d}$) V1 B2 Dn ब्राह्मणं (Dn2 णे) पावके च मा

64 $^{a}$) T1 मन्यमानो, T3 छाद्य° (for छन्द्य°) —$^{b}$) V1 भार्यायास् B1 भव (for तव) D3 8 T2 G1 3 सुव्रत (for सत्तम) —$^{c}$) D6 तस्मिन् (for तैस्तैर्) D4 संस्कारैर् (for सत्कारैर्) —$^{d}$) D1. 7 [अ]नृतं; D3 स्थित (for दृढं) V1 B Dn D5 8 10 ब्रह्मश्चेषा वृता मया, D6 आर्जवेस्याहते मन; D9 °वस्या नृतं मन, T1 यादृशं चार्जवे मन, T2 आर्जवेन भृतो मत, T3 आहत चार्जवे मन, G M1-3 आर्जयेन हृतं म(G1 3 पु)न, M4 °न हृता मम

65 M4 reads 65$^{ab}$ twice —$^{a}$) D5 य स (for सेयं) S (M4 first time) आत्मप्रदानविधिना —$^{b}$) V1 B (except B4) Dn D1 5 7 G1 अर्च्छति, D3 अर्चति, M4 (first time) अर्चती (for अर्चति) —$^{c}$) D1 तु यत्र (for यदत्र) V1 B1-4 Dn D10 अत्रा(D10 °प्य)न्यत्; T2 अत्रापि, G2 अत्रा तु (sic) (for अत्राद्य) —$^{d}$) V1 B Dn D2 कर्तुम् (for वक्तुम्) D3 4. 6 8 T2 अर्हसि (for °ति)

66 $^{a}$) B1 corrupt D3 -हस्ते D8 om., T G1. 3 4 च (for तु) —$^{b}$) V1 तं मे, S चैनं (for स वै) V1 B (except B4) Dn D1-8 10 समन्वगा(Dn3 शा)त्; T1 °भ्ययात् (for °न्वयात्) D4-9 मृत्युस्तं हंतुमभ्ययात् —$^{c}$) D1-9 हीनप्रतिज्ञ इत्येव (D2 3 न; D4. 6 8 °व); D10 °ज्ञामात्रैन —$^{d}$) D5 हनिष्यामि (for वधि)

67 $^{a}$) D4-9 च (for तु). —$^{b}$) D2-9 चक्षुषा कर्मणा गिरा —$^{c}$) G1 3 corrupt T3 तृस स (for त्यक्तेर्ष्यस्) Dn3 तु (for च)

68 $^{a}$) G4 स्वागत (for सुरत) D1 तु (for ऽस्तु) T1 विप्रर्षे (for विप्राग्र्य) D5 सुरते यस्तु विप्राग्र्य —$^{b}$) D4-6 त्वयि, D7-9 मयि (for मम) —$^{c}$) V1 D6 om., D5 7 च, T3 G1. 2 4 M1. 3 4 तु (for हि) D4 6 धर्माग्र्य, D5 धर्मज्ञ, G2 धर्मो य, M1 धर्मोग्र (for धर्मोऽग्र्य) —$^{d}$) D1-3 संप्रोक्तोतिथिपूजनं, D4-9 स प्रोक्तो°, S सप्राप्तोतिथिपूजनात्

69 $^{b}$) Dn3 D6 नु (for तु) B3 तिष्ठति, G2 गच्छत (for °ति) —For 69$^{ab}$, T3 subst.

25* हीनप्रतिज्ञमत्रैक संप्राप्तस्य तु गच्छति ।

—$^{d}$) D4 6-9 एवमाहुर्, D5 एव प्राहुर् T2 मनीषितं

70 D2 om. 70 —$^{a}$) D4-8 S च (for हि) —$^{b}$) D4 ये चान्ये (for यच्चान्यद्) —B2 partly damaged in 70$^{c}$ —$^{d}$) D3 corrupt. D8 om from समाहितम् up to पृ (in 72$^{a}$)

71 D8 om 71 (cf v l 70) —$^{a}$) V1 B2-4 Dn D10 यथा, D3 8 इद (for मया) —$^{b}$) B1 यथा, D2 3 मया (for एतत्) V1 B Dn D1. 10 मे (for ते) —$^{c}$) G ततो (for तेन) D4 [अ]स्य, D6 9 [अ]द्य (for [अ]हं) D4 सत्वेन (for सत्येन) —$^{d}$) D7 आलभेत्

72 D8 om पृ (cf. v l 70) —$^{b}$) Dn1 पंचकं; D4 चन्द्रमा —G1 partly damaged in 72$^{c}$ —$^{d}$) S चैता(M4 क)स्तथा (for चैव गुणा) D3 6 गुणाश्चैव दिशो दश.

बुद्धिरात्मा मनः कालो दिशश्चैव गुणा दश ॥ ७२
नित्यमेते हि पश्यन्ति देहिनां देहसंश्रिताः ।
सुकृतं दुष्कृतं चापि कर्म धर्मभृतां वर ॥ ७३
यथैषा नानृता वाणी मयाद्य समुदाहृता ।
तेन सत्येन मां देवाः पालयन्तु दहन्तु वा ॥ ७४
ततो नादः समभवद्दिक्षु सर्वासु भारत ।
असकृत्सत्यमित्येव नैतन्मिथ्येति सर्वशः ॥ ७५
उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विजः ।
वपुषा खं च भूमिं च व्याप्य वायुरिवोद्यतः ॥ ७६
स्वरेण विप्रः शैक्षेण त्रींल्लोकाननुनादयन् ।
उवाच चैनं धर्मज्ञं पूर्वमामन्त्र्य नामतः ॥ ७७
धर्मोऽहमस्मि भद्रं ते जिज्ञासार्थं तवानघ ।
प्राप्तः सत्यं च ते ज्ञात्वा प्रीतिर्मे परमा त्वयि ॥ ७८
विजितश्च त्वया मृत्युर्योऽयं त्वामनुगच्छति ।
रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृतः ॥ ७९
न चास्ति शक्तिस्त्रैलोक्ये कस्यचित्पुरुषोत्तम ।
पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमप्युत ॥ ८०
रक्षिता त्वद्गुणैरेषा पतिव्रतगुणैस्तथा ।
अधृष्या यदियं ब्रूयात्तथा तन्नान्यथा भवेत् ॥ ८१
एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी ।

---

73 a) Dn1 n2 D4–9 एव हि, D1–8 एवाभि, S एतानि (for एते हि) — b) D3 om (hapl) देहस B4 -सस्थिता, M1–8 संश्रितं (for °ता) D1 2 4–9 देहिना देहमाश्रिता — c) Some MSS दु कृत B1 चैव, B8 D5 6 10 G1. 8 M1–8 वापि (for चापि) — d) D1–8 G2 ध(G2 क)र्मविदा, T G1 3 4 M4 कर्मवता (for धर्मभृता) M1–8 कर्म त्रिविधमादित

74 a) B2 तथैषा, D4–9 यद्येषा, T2 यथैव, G2 यदैपा, G4 यथेष्टा (for यथैषा) D1 2 व्याहृता, T2 चानृता (for ना°) — b) V1 B (B2 damaged) Dn1 n2 D10 G1 समुदीरिता (for °दाहृता) — c) D1 2 M1. 8 मा, D4–9 मे (for मा)

75 a) G3 वाद (for नाद) G1 समुदभूद् (for समभवद्) D2 ततो नादा समभवन् — B1 corrupt for 75b — c) V1 B Dn M3 4 [ए]व (for [ए]न) D1–7 9 असक्त सत्यमित्येतन् (D1–8 °क्तमित्येव) — d) D4–9 [ए]व (for [ए]तन्) V1 B1 8 Dn D2 3 10 सर्वत (for °श)

76 a) Dn1 उटजं (for °जाद्) G4 पश्चान् (for तस्मान्) — c) B2 Dn1 n2 T1 M2 द्या (for खं) — d) D7 यथा (for व्याप्य) V1 B2 Dn3 D1. 7 9 G2 M1 2 4 [उ]द्धत, B3 [ई]प्सित, B4 D4–6 10 G4 [उ]त्थित, B5 T1 [उ]द्गत, D2 8 स्थित (for [उ]द्यत) T2 व्याप्य वायुरवाप्यत

77 a) D1 2 सुरेण (for स्व°) D2 T1 G श्लक्ष्णेन, D3 शैक्ष्येण, D7 शिष्येण, D10 शाक्ष्येण, T2 शैक्ष्येन (for शैक्षेण) T3 स्वरूपस्वमश्लक्ष्णेन (corrupt) — b) D4 -वादयन् (for -नाद°) — c) D1–3 T1 G2 धर्मज्ञ ; G1 3 4 °ज्ञ (for °ज्ञ) — d) T2 तत्रास्य (for आमन्त्र्य)

78 G2 om. 78a–80b — a) D1–4 6–9 धर्मज्ञ (for भद्रं ते) — b) D1–9 इहागत (for तवानघ) — c) D1–9 प्राप्य (for प्राप्त) D10 त्वा (for ते) B1 भूत्वा (for ज्ञात्वा) — d) D1 प्रीतं (for प्रीतिर्) S (G2 om.) हि (for मे) D1 परम (for °मा) T3 मम (for त्वयि)

79 G2 om 79 (cf. v l 78) — a) D2 8 [ऽ]य (for च) — b) S (G2 om) एप (for योऽय) T1 वाछति (for गच्छति) — d) D6 7 9 वृत्या (for धृत्या)

80 G2 om 80ab (cf v l 78) — a) D6 वा (for च) — b) D1–9 कस्यचित्पुरुपर्षभ — d) Dn1 M1 [उ]दीक्षितुम् (for [उ]द्वी°) G4 अप्यथ, M2 अच्युत (for अप्युत)

81 a) V1 तद्गुणैर्, D1–9 स्वैर्गु° (for त्वद्गु°) M1 2 रक्षितस्त्वाद्गुणैरेषा — b) D2 3 5 M4 पा(D3 प)तिव्रत्य (for पतिव्रत) M3 अपि (for तथा) T G M1 2 पातिव्रत्यगुणाद(M1 2 °णैर)पि — c) B1 corrupt Dn1 T1 8 G2 इद (for इय) T2 धृष्या यत इद ब्रूयाद — d) T G1 3 4 M4 तत्तथा (by transp), G2 स तदा D1–9 तत्तथा न तदन्यथा

82 T3 om 82ab — a) G2 मे (for हि) T1 एषा हि तव सत्येन — b) T2 G1. 3 4 संयु(T2 °य)ता (for °क्ता) D4–8 सयु(D7 °य-, D9 °यु)ता ब्रह्मचारिणी — c) D2 8 पावनार्थं T1 2 G तु; T3 नु, M4 गि (for च) — d) D1 2 सति श्रेया (for

पावनार्थं च लोकस्य सरिच्छ्रेष्ठा भविष्यति ॥ ८२
अर्धेनौघवती नाम त्वामर्धेनानुयास्यति ।
शरीरेण महाभागा योगो ह्यस्या वशे स्थितः ॥ ८३
अनया सह लोकांश्च गन्तासि तपसार्जितान् ।
यत्र नावृत्तिमभ्येति शाश्वतांस्तान्सनातनान् ॥ ८४
अनेन चैव देहेन लोकांस्त्वमभिपत्स्यसे ।
निर्जितश्च त्वया मृत्युरैश्वर्यं च तवोत्तमम् ॥ ८५
पञ्च भूतान्यतिक्रान्तः स्ववीर्याच्च मनोभवः ।
गृहस्थधर्मेणानेन कामक्रोधौ च ते जितौ ॥ ८६
स्नेहो रागश्च तन्द्री च मोहो द्रोहश्च केवलः ।
तव शुश्रूषया राजन्राजपुत्र्या विनिर्जिताः ॥ ८७

भीष्म उवाच ।

शुक्लानां तु सहस्रेण वाजिनां रथमुत्तमम् ।
युक्तं प्रगृह्य भगवान्व्यवसायो जगाम तम् ॥ ८८
मृत्युरात्मा च लोकाश्च जिता भूतानि पञ्च च ।
बुद्धिः कालो मनो व्योम कामक्रोधौ तथैव च ॥ ८९
तस्माद्गृहाश्रमस्थस्य नान्यद्दैवतमस्ति वै ।
ऋतेऽतिथिं नरव्याघ्र मनसैतद्विचारय ॥ ९०

---

सरिच्छ्रेष्ठा) T3 भविष्यसि (for °ति) — After 82, D5 reads 85$^{ab}$ for the first time, repeating it in its proper place

83 $^{a}$) D1. 3 अनेन, T1 अर्थेन (for अर्धेन) — $^{b}$) G1 अर्थेन (for अर्धेन) D4-7 9 [उ]प (for [अ]नु) D1 °शास्यति (for यास्यति) — D4 om 83$^{c}$-84$^{b}$ — $^{c}$) D2 महाभागो, G1 भाग — $^{d}$) D2 3 यो गार्हस्थ्ये-वशेषि(D2 स्याविशेष)त°, T1. 2 भार्येयं स्ववशे स्थिता

84 D4 om 84$^{ab}$ (cf v l. 83) — $^{ab}$) D1-3 5-9 transp लोकाश्च and गन्तासि M1-3 त्व (for [अ]सि) D5 G2 M1. 2 जितान् (for [अ]र्जितान्) — $^{d}$) D2 3 पुरुषस्, D3 शाश्वतीस् (for तास्) S अनुत्तमान् (for सनातनान्)

85 D5 reads 85$^{ab}$ for the first time after 82 — $^{a}$) D1-3 T2 3 G1 [ए]व च (by transp), D4 5 (second time) 6-9 [ए]व तु (D8 om तु), G2 परि- (for चैव) — $^{b}$) B1 अभिपत्स्यसि, B5 यास्यसि, Dn1 D5 (first time) इह पत्स्यसे, D4 9 T2 अभि° (T2 °नु)पत्स्यते, T1 अनुपश्यसि, T3 G2-4 अनुवत्स्यसे (for अभिप) — $^{d}$) D2 3 नैव कार्यं (for ऐश्वर्यं च) D1 च तदा, D4-6 ते त(D5 य)था, D7 9 च तथा, D8 तव च (by transp) B4 [उ]दितं (for [उ]त्तमम्)

86 $^{a}$) D4 पूर्वं, D8 सर्वं (for पञ्च) B3 [अ]वि क्रम्य (for क्रान्त) — T1 om 86$^{bc}$ — $^{b}$) V1 B (except B1) Dn D8 T3 मनोजव, D1-3 °भवान्, D7 9 10 T2 G M4 भवं (for भव) D4 5 स्वद्वी- (D5 स्वं वी)र्याच्च मनोभव — $^{c}$) D2 गृहस्थधर्मे नान्येन — $^{d}$) B3 त्वया, D10 च तौ, G2 च मे (for च ते)

87 $^{a}$) M1 पक्षे (for स्नेहो) B3 यागश्, T1 रोगश् (for रागश्) V1 B5 तद्रा, B3 G4 तन्त्री (for तन्द्री) — $^{b}$) D4 9 T1 G M केवलं (for °ल) — $^{c}$) Dn3 महान्, D1-3 [अ]न्नेय (for राजन्) ❀ Cn राज-स्त्रियृषिराजत्वाद्राजजामातृत्वाद्वा सबोधनम् । ❀ — $^{d}$) B3 T2 3 G M च (for वि) B1 °वर्जिता, D7 9 G2 निर्जिता (for °ता)

88 B2 partly damaged — $^{a}$) B1 शुक्राना, B3 शत्रूणा, D3 शुक्ताना (for शुक्लाना) V1 च (for तु) M4 सहस्राणा (for °स्रेण) — $^{b}$) B3 वाजिना रथसत्तम — $^{c}$) D2 3 युक्त सं, D7 स मुक्तं, D3 9 सयुक्त (for युक्त प्र) D10 S आरुह्य (for प्रगृह्य) B1 बलवान् (for भग°) D4-6 सप्र(D6 स प्र)युक्त गृह्य भवान् — $^{d}$) D6 9 हव्यवाहो (for व्यवसायो) V1 B2-5 Dn वासवोप्या(B3 वोश्या)जगाम त, D4 5 हव्यवाहो जगाम ता (D5 ह), D7 8 हव्यवाहाजगाम त, D10 T1. 2 G M यम साक्षाजगाम ह (D10 तत्), T3 साक्षाद्धर्मो जगाम ह

89 T1 om 89 — $^{a}$) D1 G1 3 M4 लोकश् — $^{c}$) D6 बुद्धि (for बुद्धि) T3 मद क्रोधो, G2 M4 मदो मोह (for मनो व्योम) T2 G1 3 4 मृत्यु कालो मदो (G1 °नो) मोह — $^{d}$) D2 कामक्रोधं, T3 मोह कामस्

90 $^{a}$) B2 partly damaged D2 T2 तस्माद्गृहस्था (T2 स्था)श्रमस्त, D7 M1 गृहस्थाश्रमस्थश्च (M1 °स्थ) (hypermetric), D9 हाश्रमस्थश्च — $^{b}$) D1-9 उच्यते (for अस्ति वै) — $^{c}$) D1-5 [ऽ]तिथिर् — $^{d}$) D2 मनसैत, G2 °सस्ते (for सैतद्) D7-9 विधारय (for विचा°)

91 $^{a}$) V1 B Dn D4 10 T G2 M यदि (for यस्य).

4

अतिथिः पूजितो यस्य ध्यायते मनसा शुभम् ।
न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः ॥ ९१
पात्रं त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत् ।
स दत्त्वा सुकृतं तस्य क्षपयेत ह्यनर्चितः ॥ ९२
एतत्ते कथितं पुत्र मयाख्यानमनुत्तमम् ।
यथा हि विजितो मृत्युर्गृहस्थेन पुराभवत् ॥ ९३
धन्यं यशस्यमायुष्यमिदमाख्यानमुत्तमम् ।
बुभूषताभिमन्तव्यं सर्वदुश्चरितापहम् ॥ ९४
य इदं कथयेद्विद्वानहन्यहनि भारत ।
सुदर्शनस्य चरितं पुण्याँल्लोकानवाप्नुयात् ॥ ९५

इति श्रीमहाभारते अनुशासनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## ३

युधिष्ठिर उवाच ।
ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्नराधिप ।
कथं प्राप्तं महाराज क्षत्रियेण महात्मना ॥ १
विश्वामित्रेण धर्मात्मन्ब्राह्मणत्वं नरर्षभ ।
श्रोतुमिच्छामि तत्त्वेन तन्मे ब्रूहि पितामह ॥ २
तेन ह्यमितवीर्येण वसिष्ठस्य महात्मनः ।
हतं पुत्रशतं सद्यस्तपसा प्रपितामह ॥ ३
यातुधानाश्च बहवो राक्षसास्तिग्मतेजसः ।

---

— b) S मनसा ध्यायते फल (T2 M शुभ) — c) D7 8 तु (for तत्)

92 a) T1 हि, M4 च (for तु) D2 तु तिथिम् (sic) (for त्वतिथिम्) — b) D10 शीलाढ्यैर् D5 ये — D8 reads $92^{cd}$ twice — c) D1 3 अदात्तु, D8 अदत्त, D4–7 8 (second time) 9 तत्सर्वं (for स दत्त्वा) B1 Dn2 n3 D1 8 (first time) तस्मै (for तस्य) S सुद- (T2 स्वद-, G3 स द)त्त सुकृ(M1–3 सहु)त वा(T1 चा)-पि — d) V1 B Dn D3 (first time) 10 पुण्यमादाय गच्छति, T1 2 G M4 क(T1 M4 क्ष)पयेदप्यनर्चित

93 a) D4–9 सर्वं (for पुत्र) — b) Dn1 D4. 5 [आ]ख्यातम् — D1 8 10 T1 om (hapl.) $93^{c}$–$94^{b}$ — c) Dn1 om हि D4–9 G1. 3 विनिर्जितो (for हि विजितो) — d) G4 भवेत्

94 D1 3 10 T1 om $94^{ab}$ (cf v l 93) D3 om $94^{ab}$ — a) Dn1 धन, D5 G4 धर्म्यं, D6 7 धर्मं (for धन्य) — c) D3 8 सत्यमिति (for बुभूषता) B1 [अ]धिगतव्य, B2 4 हि मंतव्य, D8 T2 G1. 3 M [अ]भिपत्तव्य, D10 G3 °वक्तव्य, T1. 3 G4 हि वक्तव्य (for [अ]भिमन्तव्यं) D1 सत्यमित्यभिपत्तव्यं, D4 corrupt, D4–7 9 शुश्रूषताभिपत्तव्य — d) D3 T1 सर्वदुश्चरितावह, D4 6 सर्वंदुरितापहं, D5 सर्वेषां दुरितापहं

95 a) V1 B Dn2 n3 D10 G2 4 M इदं य (by transp), Dn1 इद च, T1 एवं य S नित्यम् (for विद्वान्) — b) S पार्थि(G4 पाड)व (for भारत) — d) D1 पुण्य लोकम्

Colophon om in Dn1 — *Parvan name* B1 3 4 Dn3 D2 शांति — *Sub parvan* V1 B1–4 Dn2 n3 D1. 2 10 T2 M4 दानधर्म — *Adhy name* V1 B1 2 5 Dn2 n3 D1–6 8–10 T2 3 सुदर्शनोपाख्यान, B4 *दर्शनोपाख्यान, D7 G2 सुदर्शनाख्यान, G1 3 मृत्युजये सुदर्शनोपाख्यान, M4 सुदर्शनचरित — *Adhy no* (figures, words or both) V1 B3 D5 10 S 2 (as in text) — *Śloka no* Dn1 94 — After this adhy, Dn3 reads adhys 28–31, and S reads adhys 28–30

### 3

1 G1 4 partly damaged — a) D3 8 ब्रह्मण्य Some MSS दुःप्राप, B1 Dn1 n3 D1 4–9 दुष्प्राप्यं — c) D5 6 महाभाग

2 a) D4 6 7 9 माहात्म्यं (for धर्मात्मन्) — b) D3 नराधिप (for नरर्षभ) — c) D3 तत्तेन (for तत्त्वेन)

3 D1. 4 om (hapl) 3 D3 transp 3 and 4 — b) B1 2 5 D2 वसिष्ठस्य D3 महात्मना — d) V1 B1 2 5 Dn D4 8 10 [अ]पि; S च (for प्र)

मन्युनाविष्टदेहेन सृष्टाः कालान्तकोपमाः ॥ ४
महान्कुशिकवंशश्च ब्रह्मर्षिशतसंकुलः ।
स्थापितो नरलोकेऽस्मिन्विद्वान्ब्राह्मणसंस्तुतः ॥ ५
ऋचीकस्यात्मजश्चैव शुनःशेपो महातपाः ।
विमोक्षितो महासत्रात्पशुतामभ्युपागतः ॥ ६
हरिश्चन्द्रक्रतौ देवांस्तोषयित्वात्मतेजसा ।
पुत्रतामनुसंप्राप्तो विश्वामित्रस्य धीमतः ॥ ७
नाभिवादयते ज्येष्ठं देवरातं नराधिप ।
पुत्राः पञ्चशताश्चापि शप्ताः श्वपचतां गताः ॥ ८
त्रिशङ्कुर्बन्धुसंत्यक्त इक्ष्वाकुः प्रीतिपूर्वकम् ।
अवाक्शिरा दिवं नीतो दक्षिणामाश्रितो दिशम् ॥ ९
विश्वामित्रस्य विपुला नदी राजर्षिसेविता ।
कौशिकीति शिवा पुण्या ब्रह्मर्षिगणसेविता ॥ १०
तपोविघ्नकरी चैव पञ्चचूडा सुसंमता ।
रम्भा नामाप्सराः शापाद्यस्य शैलत्वमागता ॥ ११
तथैवास्य भयाद्बद्ध्वा वसिष्ठः सलिले पुरा ।
आत्मानं मज्जयामास विपाशः पुनरुत्थितः ॥ १२
तदाप्रभृति पुण्या हि विपाशाभून्महानदी ।

---

4 D3 transp 3 and 4 —$^{a}$) B1 om च —$^{b}$) Dn1 -तेजस, D7 -चेतस, M तेजसा (for °स) G2 राक्षसा स्निग्धचेतस —$^{c}$) T3 मृत्युना (for मन्युना) —$^{d}$) G2 दृष्टा (for सृष्टा)

5 $^{a}$) B1 corrupt. B3 कुलिक, B5 कुक्षिक, D4 6 कुशक D2 तु (for च) D7 महाकुशिकवंशस्य —$^{b}$) G1. 3 4 महर्षि (for ब्रह्मर्षि) D2 3 ब्रह्मर्षिगणसंस्तुत — D3 om (hapl.) 5$^{cd}$ —$^{d}$) Dn2 T1 3 G1 3 4 विद्वद् (for विद्वान्) Dn3 -संयुत, G1 M4 -संस्कृत, G4 सस्कृत (for -सस्तुत) D1 4–9 मह( D1 ब्रह्म )र्षिगण सयु( D1 4 °स्तु )त

6 $^{a}$) D8 ऋषीकस्य, D10 G2 ऋची( G2 चि )कश्च —$^{b}$) V1 B1 3 4 Dn3 D4 6 9 शुन शेफो, B3 °फेनो, D7 °शेषो (for शेपो) T1 महायशा (for °तपा) — D3 om. 6$^{c}$–7$^{b}$ —$^{c}$) B1 विक्षितोथ, B4 विमोचितो (for क्षितो) D2 10 T1 महासत्त्वात्, T3 °सूत्रात्, G3 °स्राव (for सत्रात्) —$^{d}$) Dn1. n3 D4 5 7 9 G3 अप्युपागत (for अभ्यु ) B1 स पशुत्वमुपागत

7 D3 om 7$^{ab}$ (of v 1 6) T1 om (hapl) 7-8 —$^{a}$) V1 D2 3 M1 हरिश्चंद्र G1 3 विद्वास् (for देवास्) —$^{b}$) D3 [आ]त्मतेजस, D4 7–9 महातपा (for [आ]त्मतेजसा) D5 तर्पयित्वा महातपा —$^{c}$) Dn3 om ता and प्राप्तो D2 3 उत, D7 9 उप (for अनु)

8 T1 om 8 (of v 1 7) —$^{a}$) B1 D1-3 नाभ्य ( D1 °त्य )वादयत, D4 माभिवादयत —$^{b}$) Dn1 D2 3 T2 देवराजं; D1 T3 देवसानां; D4 देव राज (for देव रात) D3 9 नराधिप —$^{c}$) D1 7–9 पञ्च( D1 °चा )-शतश्च; T2 पंचदर्श, T3 G M शत (for °शताश्च) V1 B Dn D10 पुत्रा पंचाशदेवापि —$^{d}$) D10 शप्ता (for शप्ता) D2 3 श्वापदता (for श्वपचता) D4–9 शप्ता पचत्वमागता

9 $^{a}$) B1 3 4 D1–6 10 बधुभिस् ( D5 °ना ) (for °स) G3 संमुक्त (for सत्यक्त) V1 B2 5 Dn त्रिशकुर्बंधुभिर्मुक्त, D7–9 नृशसैर्बंधुभिस्त्यक्त ( D7 °क्तम् ) —$^{b}$) Dn1 n3 T1 G3 M ऐक्ष्वाक, D1 इक्ष्वाक, D2 7 9 ऐक्ष्वाकु, D3 एक्ष्वाकु (for इ°) G1 पूर्वक —$^{c}$) D10 अर्वाक्शिरा G4 दिश (for दिव)

10 $^{a}$) D5 वै पुण्या, S (except T1) भगिनी (for विपुला) D2 3 विश्वामित्रा च विपुला, D4 6–9 °मित्राय भगवान् —$^{b}$) V1 B Dn D5 10 देवर्षि (for राजर्षि) D4 6–9 दीक्षां राजर्षिसेविता — D2 3 T2 om (hapl) 10$^{cd}$, B3 reads the same on marg —$^{c}$) V1 B2–5 Dn D10 च, D1 तु (for [इ]ति) T1 G कृता (for शिवा) —$^{d}$) B2 partly damaged V1 B Dn D10 -सुर (for -गण)

11 $^{b}$) B2 partly damaged B1 पंचभूता, M °चूला D4 नु संमता, D5–8 नु सगत ( D8 °ता ), D9 सुसगत (for °मता) T1 सर्वभूतमनोहरा —$^{cd}$) T3 G1. 3 transp शापात् and यस्य

12 $^{a}$) B1 भयाद्धीमान्, D1–3 भयोद्विग्नो (for भया द्बद्ध्वा) —$^{b}$) V1 B (except B2) D3 वशिष्ठ. —$^{c}$ N (except D1–3) आत्मान मज्जयच्छ्री( B1 [illegible] —$^{d}$) D4–9 विपाश समपद्यत

13 T1 om 13–16 —$^{a}$) B1 इ; D[illegible] ( T1 om ) सा (for हि) —$^{b}$) D1 4 6–9 S ( T1 om. वै, D2 3 सा; D5 हि (for [अ]भूत्) महानद्य —$^{c}$) D4 6 विख्यात (for [illegible] V1 B (except B2) D3 वशिष्ठस्य

अभिषेकांश्च नियमान्देवतायतनेषु च ।
बलिं च कृत्वा हुत्वा च देवतां चाप्यपूजयत् ॥ १८
संकल्पनियमोपेतः फलाहारो जितेन्द्रियः ।
नित्यं संनिहिताभिश्च ओषधीभिः फलैस्तथा ॥ १९
अतिथीन्पूजयामास यथावत्समुपागतान् ।
एवं हि सुमहान्कालो व्यत्यक्रामत्स तस्य वै ॥ २०
अथास्य मुनिरागच्छत्संगत्या वै तमाश्रमम् ।
संपूज्य स्वागतेनर्षिं विधिवत्पर्यतोषयत् ॥ २१
अनुकूलाः कथाः कृत्वा यथावत्पर्यपृच्छत ।
ऋषिः परमतेजस्वी धर्मात्मा संयतेन्द्रियः ॥ २२
एवं स बहुशस्तस्य शूद्रस्य भरतर्षभ ।
सोऽगच्छदाश्रममृषिः शूद्रं द्रष्टुं नरर्षभ ॥ २३
अथ तं तापसं शूद्रः सोऽब्रवीद्भरतर्षभ ।
पितृकार्यं करिष्यामि तत्र मेऽनुग्रहं कुरु ॥ २४
बाढमित्येव तं विप्र उवाच भरतर्षभ ।
शुचिर्भूत्वा स शूद्रस्तु तस्यर्षेः पाद्यमानयत् ॥ २५
अथ दर्भांश्च वन्याश्च ओषधीर्भरतर्षभ ।
पवित्रमासनं चैव बृसीं च समुपानयत् ॥ २६

---

$17^d$–$18^a$ — $^f$) V1 B Dn D5 10 मुनि, D1–4 6–9 सुखी (for सुखम्)

18 T1 om $18^a$ (cf v l 17) — $^a$) D4 सु- (for च) — $^b$) V1 S देवतायतनानि च — $^c$) D5 om the first च D4 6 8 9 transp च and कृत्वा T1 कृत्वा भुक्त्वा, M1–3 हुत्वा कृत्वा (by transp) D7 बलिं कृत्वा च बहुधा — $^d$) D1–9 देवता सोम्य(D1 °त्य) पूजयत्, T1 G2 M दै(T1 G2 दे)वतान्य(G2 °न)भ्य°, T2 3 G1 3 4 देवता अ(G4 ह्य)भ्य°

19 D1 om $19^a$–$20^b$ — $^c$) B2 G1 partly damaged D2 T1 नित्य- (for नित्य) D4–9 सनिहिताभिश् (for °भिश्) V1 Dn1 n2 तु (for च)

20 D1 om $20^{ab}$ (cf v l. 19) — $^a$) D4–8 अतिथीन्पूजयित्वा च — $^b$) D8 यथावत्समुपस्थितान् — $^c$) V1 om, D1–4 6–9 च (for हि) G4 सुमहत् (for °हान्) — $^d$) V1 B1 2 4 Dn D8 10 व्यत्य(D8 °ति)क्रामत, D2–5 7–9 व्यतिक्रान्त स, T G व्यतिक्रामत्स (for व्यत्य°) D1 व्यतिक्रान्तमृतस्य वै (sic)

21 G1 partly damaged — $^a$) D4 om, T2 3 G1 3 तथास्य (for अ°) S (except T1) ऋषिर् (for मुनिर्) — $^b$) D8 सगत्याय (for °त्या वै) M1 lacuna for वै G4 चैतम् (for वै तम्) V1 तमाश्रय, B1 तथाश्रम, D5 तदा° (for तमा°) — $^c$) D6 om, G4 स्वागतैरर्षीन् (sic) — $^d$) V1 Dn समतोषयत्, T1 पर्यपूज° (for पर्यतोष°)

22 $^a$) D1 om कथा — $^b$) V1 B Dn D10 यथागतमपृ(B1 3 °ग)च्छत, T1 स धर्मात्मा सयतव्रत (hypermetric) — $^d$) D1 स्वधर्मा (for धर्मात्मा) V1 B (B2 damaged) Dn D10 संशितव्रत, D4 8 9 संजितेन्द्रिय, T2 नियतेंद्रिय (for सय°) T1 जगाम स्वाश्रम प्रति

23 B2 reads 23 on marg — $^a$) V1 B1 3 4 Dn1 n2 D1 8 T1 M सु- (for स) — After $23^{ab}$, T2 ins 56* B8 D2 om (hapl.) $23^c$–$25^b$ D5 om (hapl) $23^c$–$24^b$ T3 om (hapl) $23^{cd}$ G1 partly damaged for $23^{cd}$ — $^c$) B5 T1 G M अगच्छद् (for सोऽग°)

24 B8 D2 om 24, D6 om $24^{ab}$ (for all, cf v l 23) B2 partly damaged — $^a$) D10 तत् (for तं) — G3 reads $24^{bcd}$ on marg D4 6 9 om (hapl) $24^c$–$25^b$ M3 om. (hapl) $24^c$–$26^b$ — After 24, T3 ins 56*

25 B8 D2 om. $25^{ab}$ (cf. v l 23) D4 6 9 om. $25^{ab}$, M3 om 25 (for all, cf v l 24) — $^b$) G2 4 उवाच स्नेहसयुत — T1 G (G1 partly damaged) ins after $25^{ab}$ T2 after $23^{ab}$ T3 after 24

56* अथ ग्राहयितु विप्र शूद्रो नीवारतण्डुलान् ।

[ G2 4 विप्र (for विप्र) ]

— D10 om (hapl) $25^c$–$26^b$ — $^c$) V1 B1 च (for तु) — For $25^{cd}$, G4 subst

57* शुचिर्भूत्वा नमस्कृत्य तस्य पाद्यमथानयत् ।

26 M3 om $26^{ab}$ (cf v l 24) D10 om $26^{ab}$ (cf v l 25) D7 om (hapl) 26 — $^a$) D3 वान्याश्, T1 2 M1 2 4 पात्रीं, T3 पत्राश्, G पात्रीश्; Kumbh ed. वन्याश् (for वन्याश्) D1–6 अथ दर्भान्यवाश्चान्यान् — $^b$) Dn1 D1–6 औषधीर् (for ओ) — $^d$) V1 B Dn3 D8 शूर्पी च, D1–6 8 पृथिवीं; D10 बृसीश्च, T2 3 G2–4 मसीं च (for बृसीं च)

अथ दक्षिणमावृत्य बृसीं परमशीर्षिकाम् ।
कृतामन्यायतो दृष्ट्वा ततस्तमृषिरब्रवीत् ॥ २७
कुरुष्वैतां पूर्वशीर्षां भव चोदङ्मुखः शुचिः ।
स च तत्कृतवाञ्शूद्रः सर्वं यदृषिरब्रवीत् ॥ २८
यथोपदिष्टं मेधावी दर्भादींस्तान्यथातथम् ।
हव्यकव्यविधिं कृत्स्नमुक्तं तेन तपस्विना ॥ २९
ऋषिणा पितृकार्ये च स च धर्मपथे स्थितः ।
पितृकार्ये कृते चापि विसृष्टः स जगाम ह ॥ ३०
अथ दीर्घस्य कालस्य स तप्यञ्शूद्रतापसः ।
वने पञ्चत्वमगमत्सुकृतेन च तेन वै ।
अजायत महाराजराजवंशे महाद्युतिः ॥ ३१
तथैव स ऋषिस्तात कालधर्ममवाप्य ह ।
पुरोहितकुले विप्र आजातो भरतर्षभ ॥ ३२
एवं तौ तत्र संभूतावुभौ शूद्रमुनी तदा ।
क्रमेण वर्धितौ चापि विद्यासु कुशलावुभौ ॥ ३३
अथर्ववेदे वेदे च बभूवर्षिः सुनिश्चितः ।
कल्पप्रयोगे चोत्पन्ने ज्योतिषे च परं गतः ।
सख्ये चापि परा प्रीतिस्तयोश्चापि व्यवर्धत ॥ ३४

---

27 B2 reads $27^{ab}$ on marg — a) D2 आसाद्य, D4 6–9 S आश्रित्य ( for आवृत्य ) — b) G1 partly damaged D3 9 वृशीं, T2 G1 ब्रसीम् ( for बृसीं ) D6 चरम , T2 3 G4 M4 अपर ( for परम ) D8 -शीर्षका V1 B1 3–5 Dn Cn बृषीं ( Dn1 n2 सीं ) च( B1 प )रमशै र्षिकीं, D5 T1 G2 3 बु( T1 G3 ब्र )सीं पर( T1 श्रि )- मशीर्षकां, D10 बृसीं पश्चिमशीर्षिकीं, M1–3 बृसीमव ( M3 °प )रशीर्ष( M1 र्षि )का ❀ Cn बृसीं चरमशैर्षिकी मासनकूर्चं पश्चिमाग्रम् । ❀ — c) B2 G2, 4 कृतम् ( for कृताम् ) G1 अन्वासतो ( for अन्यायतो ) — d) V1 B2 3 Dn D5 स शूद्रम् ( for ततस्तम् ) G4 ततस्त्वृ षिरथाब्रवीत्

28 D3 4 6 7 9 10 om ( hapl ) 28 — a) T G1–3 M [ए]नां, G4 चैना ( hypermetric ) ( for [ए]ता ) — b) V1 B Dn D5 भवाद्य ( for भव ) T2 3 भवतोदङ्मुख शुचि — d ) T1 यथा च ( for सर्वं यद् )

29 a ) B5 D3 अथ ( for यथा ) D4–9 [उ]पदिष्टान् — b ) V1 B1, 4 Dn1 D10 दर्भज्यादि, B2 3 Dn2 दर्भा घादि, B5 दीक्ष, S ( G1 partly damaged ) दीनि ( for °दींस्तान् ) D8 यथायथं, D10 G1 3 तथा ( for °तथम् ) Dn3 दर्भाज्यादि यथाक्रम — c ) D1–3 7–9 हव्ये कव्ये, D4 6 हव्यकव्ये ( for कव्य ) — d ) B3 T1 M1 4 उक्तस् ( for उक्त ) S यशस्विना ( for तप )

30 D4 6–9 om $30^{ab}$ — a ) V1 M4 ऋषीणा ( for ऋषिणा ) B ( except B2 ) D1–3 -कार्येय, T1 -कार्याणि, M1 2 4 -कार्येण ( for कार्ये च ) T2 3 G1, 3 ऋषिणा धर्मकार्येषु, G4 दक्षिणा पितृकार्येषु — b ) D1 S ( except T1 ) सदा ( for स च ) B1 कर्म ( for धर्म ) D1 M4 पथि ; G2 पदे ( for पथे ) — c ) Dn1 पितृकार्यं Dn3 D4 6–10 वा ( for च )

31 B2 G1 partly damaged — b ) D1–3 सोतप्यन्, D5 8 स तपन्, T1 सुतपा , T3 G1 3 4 संतपन्, G2 संतवान् ( sic ) ( for स तप्यन् ) — d ) D4 5 9 स्व- ( for सु ) T2 3 G2 तु तेन, G1 3 4 कृतेन ( for च तेन ) — f ) Dn1 n2 वशे स च, D9 ( marg ) -वंशे शूद्रो ( for राजवंशे )

32 a ) T3 G M1 च ( for स ) T1 भ्रात ( for तात ) — b ) V1 Dn G2 अवाप ( for प्य ) B1 हि, B4 स , D4–7 9 च ( for ह ) — c ) D1–3 राजन् ( for विप्र ) — d ) B4 अजितो, Dn3 D2 10 M2 स जातो, D3 M1 3 4 सजातो, D5–9 प्र° ( for आ ) D1–3 7–9 ब्राह्मणर्षभ ( for भरतर्षभ ). D4 damaged, T G1–3 स जा( T3 G1 3 सजा )तोस्य वशानुग , G4 स जातो ह्यवशानुग

33 b ) D4–9 T1 G तथा ( for तदा ) — c ) T1 वार्तितौ ( for वर्धितौ ) B3 5 तत्र, D4 7 10 वापि ( for चापि ) — d ) D4–9 विद्या( D7 द्या )स्व ( for विद्यासु )

34 B2 partly damaged — a ) D6 वेद- ( for वेदे ) — b ) V1 B2 Dn सुनिष्ठित , B5 विनिश्चित , D10 स नि° ( for सुनि ) — c ) D6 वा ( for च ) D6–9 T2 3 G M1 3 4 [उ]त्पन्न , D10 [उ]त्पन्नौ ; T1 तथा ( for [उ]त्पन्ने ) — d ) D4–6 10 T1 परतप ( D4 10 प ), M1 4 पर गत D7–9 तौ निषेवे परतप — e ) V1 B Dn D10 T2 3 G साख्ये चैव, D2 3 तत्रापि च, D7 सख्ये वापि, D8 सांख्ये चापि, M सख्ये चैव ( for सख्ये चापि ) — f ) D6 om [अ]पि B2 3 Dn2 n3 तस्य चैवं, B4 5 D10 तस्य चैव ( for तयोश्चापि ) D4–9 [अ]भ्यवर्धत, T2 विवर्धिता ( for व्यवर्धत ) V1 तस्य मेव व्यवर्धित ( sic ); B1 तस्य चैव व्यवर्तत ; Dn1 तस्य चैवं विवर्धते, D2 3 तयो

पितर्युपरते चापि कृतशौचः स भारत ।
अभिषिक्तः प्रकृतिभी राजपुत्रः स पार्थिवः ।
अभिषिक्तेन स ऋषिरभिषिक्तः पुरोहितः ॥ ३५
स तं पुरोधाय सुखमवसद्भरतर्षभ ।
राज्यं शशास धर्मेण प्रजाश्च परिपालयन् ॥ ३६
पुण्याहवाचने नित्यं धर्मकार्येषु चासकृत् ।
उत्स्मयन्प्राहसच्चापि दृष्ट्वा राजा पुरोहितम् ।
एवं स बहुशो राजन्पुरोधसमुपाहसत् ॥ ३७
लक्षयित्वा पुरोधास्तु बहुशस्तं नराधिपम् ।
उत्स्मयन्तं च सततं दृष्ट्वासौ मन्युमानभूत् ॥ ३८
अथ शून्ये पुरोधास्तु सह राज्ञा समागतः ।
कथाभिरनुकूलाभी राजानमभिरामयत् ॥ ३९
ततोऽब्रवीन्नरेन्द्रं स पुरोधा भरतर्षभ ।
वरमिच्छाम्यहं त्वेकं त्वया दत्तं महाद्युते ॥ ४०

राजोवाच ।

वराणां ते शतं दद्यां किमुतैकं द्विजोत्तम ।
स्नेहाच्च बहुमानाच्च नास्त्यदेयं हि मे तव ॥ ४१

पुरोहित उवाच ।

एकं वै वरमिच्छामि यदि तुष्टोऽसि पार्थिव ।
यद्ददासि महाराज सत्यं तद्वद मानृतम् ॥ ४२

भीष्म उवाच ।

बाढमित्येव तं राजा प्रत्युवाच युधिष्ठिर ।

---

राजन्नवर्धत

35 $^a$) D7 10 G2 4 वा (for च) S (G1 damaged) [अ]थ (for [अ]पि) — $^b$) D1–8 कृतस्नान (for °शौच) V1 B Dn तु पार्थिव (B1 2 °व), D10 सुपार्थिव (for स भारत) — B4 om (hapl) 35$^{cd}$ — $^d$) D10 तु (for स) — $^e$) T2 3 G M ऋषिभिर् (for स ऋषिर्) D1–9 अभिषिक्ते तु नृपतावृ, T1 °षेकेन ऋषिभिर्

36 T1 om 36$^{ab}$ — $^a$) D4 ते (for तं) D2 सुतम् (for सुखम्) — $^b$) B1 अवदद्, D5 अभजद्, D6 8 अभवद् (for अवसद्) — $^c$) D1 6 7 T2 G2 4 प्रशास, D4 5 8 9 M4 प्रशासन्, T1 M1–3 प्रशासद् (for शशास)

37 $^a$) D7 G4 पुण्याहवचने — $^b$) S (except G4) कृत्येषु (for -कार्येषु) — $^c$) V1 उत्स्मायन्, B3 उत्स्मयद् (for °यन्) D1 4 6–9 प्राहसश्, D5 G3 प्रहसंश्, G4 प्राह त (for प्राहसच्) — $^d$) V1 B Dn3 D1 4–7 9 10 पुरोधसं (for °हितम्) — $^e$) D1 M सु- (for स) D1–3 T1 राजा (for राजन्) — $^f$) D2 3 T1 पुरोहितम् (for °धसम्) D5 उपाहरद् (for °हसत्) B2 (marg as in text) 3 पुरोधां (B3 °धा) प्राह चाहसन्

38 B3 om 38$^a$–39$^b$ — $^a$) S च (for तु) — $^b$) T1 च (for त) — $^c$) D4 corrupt D10 उत्स्मयतश्, D5 च राजान, D8–9 हसंत च, T1 ततो दृष्ट्वा (for च सतत) — $^d$) B4 स दृष्ट्वा, T1 हसंत, T2 3 G M दृष्ट्वा त (for दृष्ट्वासौ) V1 Dn दृष्ट्वासौ मन्युमाविशत्, D1–9 ततो मन्युमुपाविशत् (D5 °हरत्)

39 B3 om 39$^{ab}$ (cf. v l. 38) — $^a$) T1 तस्य (for शून्ये) — $^b$) D2 3 समाहित ; D4–9 °गमे, T1 2 G2 4 M °गमत्, T3 G1 3 [अ]भ्युपागमत् (for समागत) — $^c$) S (except T1) अनुरूपाभी (for °कूलाभी) — $^d$) V1 B (B2 damaged) Dn1 n3 D10 चाभ्यरामयत्, Dn2 चाभ्यचोदयत्, D2 3 सोभ्यराधयद्, D4 अभिरामयन्, T1 °हर्षयन्, T2 G1 3 M3 °धारयत् (G1 3 °न्), T3 °रोचयन्, G2 °रंजयन्, G4 अनुरंजयन्, M1 2 4 अभिराधयन् (for °रामयत्)

40 $^a$) T3 नरेंद्रस्तु, G1 damaged, M4 नरेंद्र त — $^c$) T1 चैवं, T2 G चैकं (for त्वेकं)

41 $^a$) D1–9 दद्मि (for दद्या) — $^b$) V1 T3 M किमु च, Dn1 n2 किं वत (for किमुत) D9 ते द्विजोत्तम (hypermetric) (for द्विजो°) — $^c$) G1 3 वा (for the first च)

42 D1–9 पुरोधा, T1 विप्र (for पुरोहित) — $^a$) D10 एतद् (for एक) T1 G2 4 M च, T2 3 G1 3 तु (for वै) — $^b$) D7 यं हि (for यदि) M1–3 तुष्टोसि यदि पार्थिव — T1 om 42$^{cd}$ — $^c$) D1 ददामि, D3 दधासि, D5 वदामि (for ददासि) V1 B Dn D10 प्रतिजानीहि तावत्त्व — $^d$) B2 Dn1 n2 सत्यं यद्, D2 3 तत्सत्यं (by transp), T3 G1–3 सयं तद्

43 T G om the ref T1 om 43$^{cd}$ — $^d$) G1 partly damaged D1 9 अजानन्, T2 G2–4 M अजात (G4 °तु) (for अजानन्) D5 ननु (for न तु) B1

यदि ज्ञास्यामि वक्ष्यामि अजानन्न तु संवदे ॥ ४३
पुरोहित उवाच ।
पुण्याहवाचने नित्यं धर्मकृत्येषु चासकृत् ।
शान्तिहोमेषु च सदा किं त्वं हससि वीक्ष्य माम् ॥ ४४
सव्रीडं वै भवति हि मनो मे हसता त्वया ।
कामया शापितो राजन्नान्यथा वक्तुमर्हसि ॥ ४५
भाव्यं हि कारणेनात्र न ते हास्यमकारणम् ।
कौतूहलं मे सुभृशं तत्त्वेन कथयस्व मे ॥ ४६
राजोवाच ।
एवमुक्ते त्वया विप्र यदवाच्यं भवेदपि ।
अवश्यमेव वक्तव्यं शृणुष्वैकमना द्विज ॥ ४७
पूर्वदेहे यथा वृत्तं तन्निबोध द्विजोत्तम ।
जातिं स्मराम्यहं ब्रह्मन्नवधानेन मे शृणु ॥ ४८
शूद्रोऽहमभवं पूर्वं तापसो भृशसंयुतः ।
ऋषिरुग्रतपास्त्वं च तदाभूर्द्विजसत्तम ॥ ४९
प्रीयता हि तदा ब्रह्मन्ममानुग्रहबुद्धिना ।
पितृकार्ये त्वया पूर्वमुपदेशः कृतोऽनघ ।
बृस्यां दर्भेषु हव्ये च कव्ये च मुनिसत्तम ॥ ५०
एतेन कर्मदोषेण पुरोधास्त्वमजायथाः ।
अहं राजा च विप्रेन्द्र पश्य कालस्य पर्ययम् ।

G2 संविदे, B6 मां वदे; M1 2 संवदे  D2 8 अजान श्चेत्कथं वदे (D2 °देत्)

44 D1-3 7 पुरोधा (for पुरोहित) —a) D1, 2 T2 M4 पुण्याहवचने —b) D1 कर्मकार्येषु, D2 8 कर्मकालेषु, D4-9 धर्मकार्येषु, G2 पुण्यकृत्येषु (for धर्म°) D8, 6 वा (for च) —c) B6 T2 8 G M1 3 4 तदा (for सदा) —d) T G1-3 M किं तद्, G4 किंस्विद् (for किं त्व) D4-9 उद्धससि (for त्वं हससि) D1 मा (for माम्)

45 a) T1 पीडित, T2 8 G M व्रीलितं (for सव्रीड) Dn8 हि, D1 4-6 S मे (for वै) Dn8 वै (for हि) D2 8 मनो मम हि सव्रीड, D7 सव्रीड हि मे भवति —b) D1 T1 G2 4 M वै (for मे) D2-9 मनो वै (D2 8 जायते) हसति त्वयि —c) G1 partly damaged B1 D1-3 काम्यया, D10 S स मया (for कामया) T1 चोदितो (for शापितो) D10 स मया श्राविता राजन्

46 a) B2 damaged V1 B1 3-5 Dn D10 सुव्यक्तं कारणं ह्यत्र —b) D2 तं (for ते) —d) D5 तत्तेन (for तत्त्वेन) D1 M वै (for मे)

47 a) T1 G4 उक्तस् —b) G1 partly damaged D4 6 7 9 यद्यवाच्य, T2 8 G2 यदवोचं (for °वाच्य) D4 om. भवेदपि and 47c D2 8 इह (for अपि)

48 a) T1 पूर्वमेव (for °देहे) —b) T1 2 G निबोध द्विजसत्तम —T8 om (hapl.) 48c–49d —c) D2 पूर्वम् (for ब्रह्मन्) —D1 om (hapl) 48d–50a —d) G1 partly damaged D2 शृणुष्व मे (hypermetric) (for मे शृणु) T1 अवधानामिम शृणु

49 D1 T8 om 49 (cf v l 48) B2 G1 partly damaged —a) D7 अभवत् (for अभव) —b) B1 4 5 D10 तापस्ये (for °सो) V1 B1 3 5 Dn8 D5 7 -संयत T1 M तापस्ये धृत(T1 दृढ)निश्चय, T2 G1 3 तापसे (G3 तपस्ये) कृतनिश्चय, G2 4 तापस्ये तत्र निश्चय (G2 °य) —c) B2 तपस्वी (for तपास्त्व) T2 G तु (for च) —d) B3 यदा, G1 3 4 तथा (for तदा) V1 B3 D7 8 G2 M4 [अ]भूद्, G1 3 [अ]हं (for [अ]भूर्) B1 2 5 Dn8 G4 द्विजसत्तम

50 D1 om 50a (cf v l 48) —a) D9 प्रीयतां, T1 प्रार्थितो, G4 सुप्रीतो (for प्रीयता) D4 6 7 9 सदा, D5 मया, T8 G2 तथा (for सदा) D2 प्रीयता हि तदाजेन —b) B5 D5 T1 मया, D2 त्वया (for मम) D8 -बुद्धिमान् (for °ना) —B1 om 50cd —c) D8 T2 G ब्रह्मन् (for पूर्वम्) D2 8 पितृकार्येषु य (D8 व) पूर्वम् —d) S मम (for ऽनघ) —e) V1 B1 4 5 Dn8 बृष्यां; Dn1 दृष्या, D10 वृश्या, M1-3 बृस्या (for बृस्यां) G2 4 दर्भे च (for दर्भेषु) D5 हव्येषु (for हव्ये च) B3 D1 6-8 बृष्यां (D7 8 °इयां) दर्भेषु हव्येषु, D2 8 9 T1 बृश्या (D3 °ष्यां, T1 °स्या) हव्येषु दर्भे(T1 °से)षु, T2 8 G1 3 बृस्या दर्भे च हव्ये च —f) G1 damaged. D2-9 कव्येषु (for कव्ये च) T2 G3 4 द्विज- (for मुनि) B2 3 5 -पुंगव (for सत्तम) T1 दर्भेषु द्विजसत्तम

51 b) D10 om. from त्वमजायथा up to प्रहसे (in 52b) D8 9 त्वमजायिथा, G1 3 समजायथा (for त्वम°) —c) D2 8 च राजा (by transp), D4-9 हि राजा —e) T1 मत्कृतेन हि (hypermetric), M4 °तेपि, Madras ed. त्वत्कृतेन (for मत्कृते हि) D4 [उ]पदेशस्य,

मत्कृते ह्युपदेशेन त्वया प्राप्तमिदं फलम् ॥ ५१
एतस्मात्कारणाद्ब्रह्मन्प्रहसे त्वां द्विजोत्तम ।
न त्वां परिभवन्ब्रह्मन्प्रहसामि गुरुर्भवान् ॥ ५२
विपर्ययेण मे मन्युस्तेन संतप्यते मनः ।
जातिं स्मराम्यहं तुभ्यमतस्त्वां प्रहसामि वै ॥ ५३
एवं तवोग्रं हि तप उपदेशेन नाशितम् ।
पुरोहितत्वमुत्सृज्य यतस्व त्वं पुनर्भवे ॥ ५४
इतस्त्वमधमामन्यां मा योनिं प्राप्स्यसे द्विज ।
गृह्यतां द्रविणं विप्र पूतात्मा भव सत्तम ॥ ५५

भीष्म उवाच ।

ततो विसृष्टो राज्ञा तु विप्रो दानान्यनेकशः ।
ब्राह्मणेभ्यो ददौ वित्तं भूमिं ग्रामांश्च सर्वशः ॥ ५६
कृच्छ्राणि चीर्त्वा च ततो यथोक्तानि द्विजोत्तमः ।
तीर्थानि चाभिगत्वा वै दानानि विविधानि च ॥ ५७
दत्त्वा गाश्चैव विप्राणां पूतात्मा सोऽभवद्द्विजः ।
तमेव चाश्रमं गत्वा चचार विपुलं तपः ॥ ५८
ततः सिद्धिं परां प्राप्तो ब्राह्मणो राजसत्तम ।
संमतश्चाभवत्तेषामाश्रमेऽऽश्रमवासिनाम् ॥ ५९

---

D6–9 °शश्च (for °शेन) V1 B Dn D5 मत्कृतस्योपदेशस्य, D2 8 T2 8 G मत्कृतेनोपदेशेन — f) B2 damaged V1 B3–5 Dn3 D2 T1 G2 M [अ]वाप्तम्, B1 Dn1 चाप्तम् (for प्राप्तम्) Dn2 त्वया चाप्तमिद कुलं

52 D10 om up to प्रहसे (in $52^{b}$) (cf v l 51) B2 G1 partly damaged — a) D3 राजन् (for ब्रह्मन्) — D1 om (hapl) $52^{bc}$ — b) D2 5 T1 वि(D5 प्र)हसामि, D4 6–9 आहस त्वां, G4 प्रहस्ये त्वा (for °से त्वा) — c) D4, 6–8 G4 M त्वा (for त्वां) D4 6 9 S परिभवाद् (for °वन्) D3 न चापरिभवद्ब्रह्मन् — d) T1 न वदामि, G4 प्रहस्यामि (for °सामि) D3 प्रहसे त्वा द्विजोत्तम

53 D1 om $53^{a}$–$54^{b}$ T1 om $53^{ab}$ — a) Some MSS विपर्ययेन, D7 विपर्यायेण D4–7 9 मन्युस्ते (for मे मन्युस्) — b) G1 8 M स्मयति मे (for संतप्यते) D4–9 येनास्मयत मे मन, T2 8 G2 4 तेन स्मयति मे मति — c) D4–9 विप्र, S ब्रह्मस् (for तुभ्यम्) — d) D4–9 S ततस् (for अतस्) D5 7 [अ]ह (for वै)

54 D1 om $54^{ab}$ (cf v l 53) — a) S एव तपो गृहीत व (T2 तद्, G2 4 वा) — D1 partly damaged for $54^{cd}$ — d) G3 यत स (for यतस्व) B4 M1–3 ह्यपुनर्भवे, T1 8 G2 M4 न पुन° (for त्व पुन°)

55 B2 damaged. — a) D2 8 योनिम् (for अन्या) — b) T8 G1 3 4 त्व (for मा) D4–9 प्राप्स्यामि D2 8 अन्या प्राप्स्यसि ब्राह्मण — c) D2–4 6–9 भूरि (for विप्र) — d) B1 T2 भूतात्मा (for पू°) D2 8 सुव्रत (for सत्तम) — After 55, D1 2 7 9 read $64^{ab}$ for the first time, repeating it in its proper place

56 G1 om (1 hapl) $56^{a}$–$57^{b}$ (with the ref) Dn om 56 (retaining the ref) D1 3 4 6 7 9 om $56^{ab}$ (D1 7 9 om also the ref) After the ref, D3–6 read $64^{ab}$ for the first time, repeating it in its proper place — a) G3 4 M4 निसृष्टो (for वि°) D2 ततो राज्ञा तु विसृष्टो — b) V1 दानम्, S (except T1, G1 om) धान्यानि (for दानानि) — After $56^{ab}$, D8 reads $64^{ab}$ repeating it in its proper place — d) T1 ग्रामान्भूमिं (by transp) D1 2 4–7 9 स द्विज, M धर्मंत (for सर्वश) D8 भूरि ग्रामाश्च स द्विज

57 G1 om $57^{ab}$ (cf v l 56) — a) B5 तीर्त्वा (for चीर्त्वा) D4–6 व्रतानि कृत्वा कृच्छ्राणि, S (G1 om) कृच्छ्राणि कृत्वा च तथा (T2 8 G3 °दा) — b) T1 कल्पोक्त वै, G4 तथोक्तानि V1 B Dn D10 द्विजोत्तमं, D1 4 8 9 G3–4 M2 °त्तम — c) V1 B Dn D9 10 T2 8 G [अ]पि (for [अ]भि) D8 स (for वै) D4 corrupt, D5 6 तीर्थानि गत्वा विप्र स (D6 स विप्रो) — d) D2 वै (for च)

58 B2 partly damaged — a) V1 B (B2 damaged) Dn D7 विप्रेभ्य, D10 सर्वेभ्य (for विप्राणा) — b) D3 तदा (for द्विज) — c) V1 न चैव (for तमेव) D7 वा (for च) — d) D2 तत (for तप)

59 a) G1 damaged T G3 4 तप- (for तत) — c) T G सत्तमश् (for समतश्) — d) D2 8 गोश्रमे (for आ°) V1 B Dn D10 आश्रमे वनिवासिनां, D2–4 6 आ( D4 6 सो )श्रमाश्रम

60 c) B5 न च वनस्यमिद हि — d) B किंचिद् (for तस्माद्) V1 जना

एवं प्राप्तो महत्कृच्छ्रमृषिः स नृपसत्तम ।
ब्राह्मणेन न वक्तव्यं तस्माद्वर्णावरे जने ॥ ६०
वर्जयेदुपदेशं च सदैव ब्राह्मणो नृप ।
उपदेशं हि कुर्वाणो द्विजः कृच्छ्रमवाप्नुयात् ॥ ६१
एषितव्यं सदा वाचा नृपेण द्विजसत्तमात् ।
न प्रवक्तव्यमिह हि किंचिद्वर्णावरे जने ॥ ६२
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
एतेषु कथयन्राजन्ब्राह्मणो न प्रदुष्यति ॥ ६३
तस्मात्सद्भिर्न वक्तव्यं कस्यचित्किंचिदग्रतः ।
सूक्ष्मा गतिर्हि धर्मस्य दुर्ज्ञेया ह्यकृतात्मभिः ॥ ६४
तस्मान्मौनानि मुनयो दीक्षां कुर्वन्ति चादृताः ।
दुरुक्तस्य भयाद्राजन्नानुभाषन्ति किंचन ॥ ६५
धार्मिका गुणसंपन्नाः सत्यार्जवपरायणाः ।
दुरुक्तवाचाभिहताः प्राप्नुवन्तीह दुष्कृतम् ॥ ६६
उपदेशो न कर्तव्यः कदाचिदपि कस्यचित् ।
उपदेशाद्धि तत्पापं ब्राह्मणः समवाप्नुयात् ॥ ६७
विमृश्य तस्मात्प्राज्ञेन वक्तव्यं धर्ममिच्छता ।
सत्यानृतेन हि कृत उपदेशो हिनस्ति वै ॥ ६८
वक्तव्यमिह पृष्टेन विनिश्चित्य विपर्ययम् ।
स चोपदेशः कर्तव्यो येन धर्ममवाप्नुयात् ॥ ६९
एतत्ते सर्वमाख्यातमुपदेशे कृते सति ।
महान्क्लेशो हि भवति तस्मान्नोपदिशेत्क्वचित् ॥ ७०

इति श्रीमहाभारते अनुशासनपर्वणि दशमोऽध्यायः ॥ १० ॥

---

61 B5 Dn1 n2 T3 om (hapl) 61-62 — a) D1-3 देशयेद्, M1 वर्णे (for वर्जे) — b) V1 om, B2 damaged, D1-3 ब्राह्मणं B2 द्विज (for नृप) — d) M1 2 तत (for द्विज)

62 B5 Dn1 n2 T3 om 62 (cf. v l 61) T1 om 62ab — a) V1 B1 2 D8 10 G2 नैषितव्य (D10 G2 °व्य), Dn3 T2 G1 2 4 M नेषि (for एषि°) B4 नैषितव्यं सदाचारा — b) V1 B (B5 om) Dn3 D2 10 S (T1 3 om.) द्विजेन नृपसत्तम — c) D4 om न V1 B1-4 च (for प्र-) S (T3 om) न च प्रव क्तव्यमिह — d) G2 वर्णांतरे (for वर्णावरे) T1 G1 नरे (for जने)

63 B4 om 63 — a) D1-7 9 ब्राह्मण क्षत्रियो वैश्यस् — b) D3 द्विजोत्तमा (for द्विजातय) — d) G2 प्रदुष्यति, G4 प्रदू°, M प्रदुष्यते

64 D1 2 7 9 read 64ab after 55, D3-6 after the ref. in 56, and D8 after 56ab, repeating it here — d) D2 4-9 दुर्विज्ञेया (for दुर्ज्ञेया हि)

65 a) V1 B1 2 4 Dn D1-3 5 T1 G1 3 मौनेन (for मौनानि) T3 G1 2 4 ऋषयो (for मुनयो) — b) B1 दिक्षा (for दीक्षां) D8 वा (for च) B4 [आ]मृता, S [अ]नृते (for [आ]दृता) — d) T2 3 G M [अ]भि (for [अ]नु) V1 B Dn D10 नाभाषते च (V1 हि) किंचन, T1 नाभिभाषंत कर्हिचित्

66 b) V1 B Dn D10 -समन्विता, T G गुणान्विता, M दमान्विता (for परायणा) — c) G1 partly damaged V1 D5 T2 वाचाभिहिता, B1-3 5 °हिते, B4 -वागभिहता, Dn -वाचाभिहिते, D10 °हते (for °हता) — d) D6 7 9 दुःकृतं, S किल्बिष (for दुष्कृतम्)

67 b) V1 अस्य (for अपि) S ह्यज्ञात्वा यस्यकस्यचित् — c) D1-6 यत् (for तत्) D7 9 पात्र (for पाप) — d) D1 3 4 6 7 9 ब्राह्मण समवाप्तवान्

68 a) V1 B D1 2 विमृष्य — b) D7 कर्तव्य (for वक्तव्यं) — G1 damaged for 68cd — c) D1-6 8-10 सत्यादृतेन, T1 अविमर्शेन (for सत्यानृतेन) M3 नि (for हि) — d) V1 B Dn D10 हि (for वै)

69 T1 om 69ab — a) B1 3 4 D10 S (T1 om) अथ (for इह) D1-9 न वक्तव्यमपृष्टेन — b) V1 B Dn D10 विनिश्चय (for विपर्ययम्) — c) T1 M1, 2 सदो(T1 °द्यो)पदेश: कर्तव्यो

70 a) T1 यदेतद् (for एतत्ते) — b) D1 6-8 G2 उपदेश (for देशे) V1 B2 4 Dn3 D10 उपदेशकृतो

# ११

युधिष्ठिर उवाच ।

कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ ।
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥ १

भीष्म उवाच ।

अत्र ते वर्तयिष्यामि यथादृष्टं यथाश्रुतम् ।
रुक्मिणी देवकीपुत्रसंनिधौ पर्यपृच्छत ॥ २

नारायणस्याङ्कगतां ज्वलन्तीं
दृष्ट्वा श्रियं पद्मसमानवक्त्राम् ।
कौतूहलाद्विस्मितचारुनेत्रा
पप्रच्छ माता मकरध्वजस्य ॥ ३

कानीह भूतान्युपसेवसे त्वं
संतिष्ठती कानि न सेवसे त्वम् ।
तानि त्रिलोकेश्वरभूतकान्ते
तत्त्वेन मे ब्रूहि महर्षिकन्ये ॥ ४

एवं तदा श्रीरभिभाष्यमाणा
देव्या समक्षं गरुडध्वजस्य ।
उवाच वाक्यं मधुराभिधानं
मनोहरं चन्द्रमुखी प्रसन्ना ॥ ५

वसामि सत्ये सुभगे प्रगल्भे
दक्षे नरे कर्मणि वर्तमाने ।
नाकर्मशीले पुरुषे वसामि
न नास्तिके सांकरिके कृतघ्ने ।

---

यथा ( V1 B2 [ marg ] मया ), B1 3 5 Dn1 n2 °शकृते मया ( B1 5 यथा ) — d ) V1 Dn इह ( for क्वचित् )

Colophon — *Parvan name* B1–4 Dn3 D1 3 शांति — *Sub parvan* V1 B Dn1 n2 D1–8 10 M दानधर्म — *Adhy name* V1 B2 ( marg ) 5 Dn शूद्रमुनिसंवाद , B2 D1–9 दुरुपदिष्टं , B4 वर्णावरोपदेश , D1–3 उप- ( D3 °पा )दिष्टं , D9 ( addl ) अधर्मोपदेशदूषण , D10 दुरुक्त , T2 हीनजात्युपदेशप्रतिषेधे ब्राह्मणशूद्रसंवाद — *Adhy no* ( figures, words or both ) V1 D5 10 10 ( as in text ), B2 9 , S 32 — *Śloka no* Dn1 74

## 11

1 G2 om the ref. — a ) D7 जात ( for तात ) — b ) T1 M1–3 पुरुषर्षभ ( for भरत° ) D8 स्त्रीषु भाविषु भारत — d ) G1 partly damaged D1 6 त ( for तन् )

2 a ) V1 B Dn2 D3 8 5 10 T1 G2 वर्णयिष्यामि , D4 6–9 कथ° ( for वर्त° ) — b ) V1 B Dn D10 T2 8 G यथावृत्त ( for यथादृष्ट ) — c ) M1 3 4 -पुत्र ( for -पुत्र ) — d ) D4–9 -संनिधौ भरतर्षभ

3 a ) D6 7 9 [अ]गरतां ( for [अ]ङ्कगता ) — b ) B3 Dn1 n2 G समानवर्णां , B5 -दलायताक्षीं — c ) G1 partly damaged D1 8 -वक्त्रा , D10 M4 नेत्रां , T1 नेत्रीं ( for नेत्रा )

4 Before 4, B4 ins रुक्मिणी उवाच T1 reads 4a twice — a ) T1 ( second time ) च ( for [उ]प ) — T1 G2 om ( hapl ) 4b — b ) V1 B Dn D3 10 T2 3 G1 3 M2 संतिष्ठसे ( D8 10 °ते ) ( for °ती ) V1 B1, 3 5 Dn1 n2 T2 3 G1 3 4 च ( for न ) B D1 4–10 M च ( for त्वम् ) — c ) D4–6 T2 3 G कानि ( for तानि ) T1 G M1 4 त्रिलोकेश्वरि ( for °श्वर- ) D10 -भूरि , G4 -भूति ( for -भूत ) — d ) G1 partly damaged. D1 [अ]पि ( for मे ) D10 पयोधि ( for महर्षि ) Dn1, n2 -कल्पे ( for -कन्ये )

5 a ) Dn1 भाव्यमाणा , D2 10 G1 2 -भाप ( for -भाष्य° ) — b ) S मात्रा ( T1 °तु ) समक्ष ( G3 °क्ष्य ) मकरध्वजस्य — c ) T1 रुचिराभिधान ( for मधुरा° ) — d ) B5 मनोभव , G1 3 °मुख , G2 4 °रम ( for °हर ) Dn2 चद्रमुखि ( for °मुखी ) Dn3 प्रपन्ना , D1 3 6 प्रतीता ( for प्रसन्ना ) D2–5 7–9 मनोहर चद्रमुखीं ( D4 °खां ) प्रतीता ( D8 °ता )

6 Before 6, V1 B Dn D5 10 ins श्रीरुवाच — a ) G4 वदामि ( for वसामि ) V1 B3 3 5 Dn D1–9 T2 G4 नित्य , G सत्ये ( for सत्ये ) D5 सुभग ( for °गे ) — b ) G1 partly damaged T1 रक्षा वरे ( for दक्षे

न भिन्नवृत्ते न नृशंसवृत्ते
न चापि चौरे न गुरुष्वसूये ॥ ६
ये चाल्पतेजोबलसत्त्वमारा
हृष्यन्ति कुप्यन्ति च यत्र तत्र ।
न देवि तिष्ठामि तथाविधेषु
नरेषु संसुप्तमनोरथेषु ॥ ७
यश्चात्मनि प्रार्थयते न किंचि-
द्यश्च स्वभावोपहतान्तरात्मा ।
तेष्वल्पसंतोषरतेषु नित्यं
नरेषु नाहं निवसामि देवि ॥ ८
वसामि धर्मशीलेषु धर्मज्ञेषु महात्मसु ।
वृद्धसेविषु दान्तेषु सत्त्वज्ञेषु महात्मसु ॥ ९
स्त्रीषु क्षान्तासु दान्तासु देवद्विजपरासु च ।
वसामि सत्यशीलासु स्वभावनिरतासु च ॥ १०

---

नरे) — After 6^ab, N ins

58* अक्रोधने देवपरे कृतज्ञे
जितेन्द्रिये नित्यमुदीर्णसत्त्वे ।

[ (L 1) B1 corrupt D1-4 6 देवपरे; D7 देवरते (for परे) D4 कृतज्ञ — (L 2) D4 6 नित्येंद्रिये, D7 यतेंद्रिये (for जि°) D1 नित्यमुदीर्घे, D2 8 °मुदार- (for °मुदीर्ण) ]

— c) D1 (by corr as in text) नाकर्मशीले — d) D1 सकरिके, G4 सस° (for सांक) — a) M हीन- (for भिन्न) D4 om न नृशंसवृत्ते Dn1 n2 वर्णे (for वृत्ते) — b) Dn3 चापि चौरे, D4-9 स्तेनवृत्ते, T2 3 G चाविनीते, M चापि स्तेने (for चापि चौरे) B5 [अ]सूयौ, T2 3 G M [अ]सूयके (for [अ]सूये) D1-8 मापावने नैव गुरुष्वसूयौ (D2 ये); T1 न चापि हीने चरिते च मायया

7 a) B2 G1 partly damaged T1 वा (for च) D5 सत्त्वे बल (for -तेजोबल) V1 Dn सत्त्वमाना, T3 दर्पसारा (for सत्त्व) — b) G1 damaged Dn1 n2 क्लिश्यति, T1 कुप्यति (for हृष्यन्ति) T1 M रुष्यति, T2 G2-4 तुष्यति, T3 तप्यति (for कुप्यन्ति) D3 T2 3 G2 यत्र (for तत्र) — c) V1 B Dn D2 10 चैव (for देवि) D4 तथाविधेन, D6 विधे नरे (for विधेषु) — d) B5 om, T1 नृपेषु (for नरेषु) V1 om (hapl) ससुप्तमनोरथेषु Dn सगुप्त, D1-3 समात, D4-10 ससक्त, T1 संतुष्ट, T2 3 G1 संक्षिप्त (for ससुप्त)

8 a) D1 2 4-9 [आ]त्मन (for °नि) D9 तु (for न) — b) D4 अस्वच्छ, D7-9 अस्वस्थ (for यश्च स्व) D1 2 यो न स्वभावोपहतोंत(D1 तात)रात्मा; D5 अस्वच्छभावोपहतातरात्मनि — c) V1 ते स्वल्प (for तेष्वल्प) Dn D1-9 T1 परेषु, D10 नतेषु, T2 G2 M करेषु (for -रतेषु) T2 नाह (for नित्य) T3 G1 3.4 तेष्वप्यसतोषकरेषु नाह (G1 नित्य) — d) T1 द्विजेषु (for नरेषु) D1-9 नाह सुतु(D5 न तु)ष्टा (for नरेषु नाह) D1 2 च्याह, T3 G1 3 नित्य (for नाह) V1 B Dn D10 सम्यक् (for देवि) — After 8, D8 ins 61*

9 For the substitution in V1 B Dn D10, cf v l 10 G1 partly damaged for 9^a — b) D5 6 कृतज्ञेषु, G4 धर्मेषु (submetric) (for धर्मज्ञेषु) D2 8 धर्मनित्येषु बधुषु, D7-9 कृतज्ञेषु कृतात्मसु — D4-6 8 om (hapl) 9^cd — c) D1 [अ]दान्तेषु (sic) — d) D7 धर्मज्ञेषु (for सत्त्व°) D1-3 सर्वज्ञेषु कृतात्मसु — After 9, S ins

59* अवन्ध्यकालेषु सदा स्नानशौचरतेषु च ।
ब्रह्मचर्यतपोज्ञानगोद्विजातिप्रियेषु च ।

[ (L 1) T1 G दान- (for स्नान-) ]

10 a) G1 partly damaged D4 T2 3 G M कान्तासु, D6 T1 शान्तासु (for क्षान्तासु) — b) G4 वेद (for देव) — c) D5 नित्य- (for सत्य) — d) D1-8 विनतासु (for -निर°) — For 10^cd, S subst.

60* विशुद्धगृहभाण्डासु गोधान्याभिरतासु च ।

— V1 B Dn D10 subst. for 9-10 D8 ins after 8

61* स्वधर्मशीलेषु च धर्मवित्सु
वृद्धोपसेवानिरते च दान्ते ।
कृतात्मनि क्षान्तिपरे समर्थे
क्षान्तासु दान्तासु तथाबलासु ।
सत्यस्वभावार्जवसंयुतासु [5]
वसामि देवद्विजपूजितासु ।

[ The portion from रते च (in line 2) up to समर्थे (in line 3) is damaged in B2 — (L 3) B3 5 क्षातपरे (for क्षान्ति°) B1 D10 ससत्त्वे, D8 च सत्त्वे (for समर्थे) — (L 5) B5 नित्य (for सत्य) D8 10 -सत्य तासु — (L 6) B1 2 5 Dn पूजिकासु ]

प्रकीर्णभाण्डामनवेक्ष्यकारिणीं
सदा च भर्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जा-
मेवंविधां स्त्रीं परिवर्जयामि ॥ ११
लोलामचोक्षामवलेहिनीं च
व्यपेतधैर्यां कलहप्रियां च ।
निद्राभिभूतां सततं शयाना-
मेवंविधां स्त्रीं परिवर्जयामि ॥ १२
सत्यासु नित्यं प्रियदर्शनासु
सौभाग्ययुक्तासु गुणान्वितासु ।
वसामि नारीषु पतिव्रतासु
कल्याणशीलासु विभूषितासु ॥ १३
यानेषु कन्यासु विभूषणेषु
यज्ञेषु मेघेषु च वृष्टिमत्सु ।
वसामि फुल्लासु च पद्मिनीषु
नक्षत्रवीथीषु च शारदीषु ॥ १४
शैलेषु गोष्ठेषु तथा वनेषु
सरःसु फुल्लोत्पलपङ्कजेषु ।
नदीषु हंसस्वननादितासु
क्रौञ्चावघुष्टस्वरशोभितासु ॥ १५
विस्तीर्णकूलह्रदशोभितासु
तपस्विसिद्धद्विजसेवितासु ।

---

11 $^{a}$) D6 प्रतीक्ष्य- (for प्रकीर्ण-) V1 B3. 8 Dn3 D10 अनपेक्ष, B1 Dn1 n2 D8 T1 °पेक्ष्य-, D1. 2 4 °वेक्ष- (for °वेक्ष्य-) G3 -कारणीं (for -कारिणीं) — $^{b}$) V1 तु (for च) B8 -वासिनीं, D4 6–9 भाषिणीं, D5 -कारिणीं, T1 -चारिणीं (for वादिनीम्) — $^{c}$) G1 partly damaged B8 om. वेश्मा D2 वेश्मो च गताम् (sic) (for वेश्माभिरताम्) — $^{d}$) V1 B Dn D10 एवविधा ता, T G सदा शयाना (for एवविधा स्त्रीं)

12 Dn2 D4 6 7 9 om (hapl) 12 — $^{a}$) B2 partly damaged. B1 4 5 Dn1 D5 पापाम् (for लोलाम्) B4 अचौक्षाम्, D5 अचोद्याम्, T1 अतोषाम्, T2 G G4 अदाक्षाम्, G1 3 अद°, G2 M अताक्षाम् (for अचो°) B1 अवलेहनीं, D2 T G2 3 M °लेपिनीं, G1 °लेपनीं, G4 °लोपनीं (for °लेहिनीं) V1 Dn3 पापामचोक्षामवलेलिहाना, D8 10 लोलामभक्ष्याम (D10 °क्ष्या त्व)वलेहिनीं सदा — $^{b}$) B1 धर्मा, D1–3 -शीला, S -शौचा (for -धैर्यां) — $^{d}$) G1 partly damaged V1 B Dn1 n3 D5 8 10 T1 ता (for स्त्रीं)

13 $^{a}$) Dn3 D4–6 T1 नित्य (for नित्य) — $^{b}$) V1 B3 D6 गणान्वितासु, S बहुश्रुतासु — T1 om (hapl) 13$^{cd}$ — $^{c}$) S (T1 om) गुणान्वितासु (for पतिव्रतासु) — $^{d}$) B2 reads from सु विभूषितासु up to वसामि फु (in 14$^{c}$) on marg D4–9 सदास्मि देवि (D8 °वी) (for विभूषितासु)

14 B3 reads up to वसामि फु (in 14$^{c}$) on marg — $^{a}$) G1 partly damaged. Dn3 यामेषु, G3 यान्येषु (for यानेषु) Dn3 कल्यासु (for कन्यासु) B3 विभूषणासु, G2 षितासु (for °षणेषु) — $^{b}$) T1 2 G वस्त्रेषु (for यज्ञेषु) B1 तुष्टिमत्सु, D2 वृद्धि° (for वृष्टि°) — $^{c}$) D3 om. (hapl) from फुल्लासु up to सरःसु (in 15$^{b}$) — $^{d}$) D4 6 7–9 शारदासु, T8 °देषु (for °दीषु)

15 D8 om up to सरःसु (in 15$^{b}$) (cf v l 14) — $^{a}$) V1 B Dn D10 G2 गजेषु (for शैलेषु) M3 om from गोष्ठेषु up to सेवितासु (in 16$^{b}$) V1 B Dn1 n2 D8 10 [आ]सनेषु (for वनेषु) — $^{b}$) B1 शरत्सु, Dn1 सर स्व, D8 सर प्र, D9 सरत्सु (sic) (for सरःसु) — T1 repeats 15$^{c}$ after 16$^{cd}$ — $^{c}$) D8 गोषु च न (for हंसस्वन-) S (M3 om, T1 [first time]) स्वर( T1 °न )सेवितासु (for स्वननादि°) T1 (second time) नदीषु फुल्लार्जुनसङ्कुलतासु — G2 om (hapl) 15$^{d}$ — $^{d}$) Dn3 क्रौंचाभिघुष्ट (for °वघुष्ट) B1 D1 2 स्वन (for स्वर) B1 भूषितासु (for शोभितासु) D1 क्रौंचो( D6 °चा) पघुष्टासु च निम्नगासु, D7–9 क्रौंचोपघु( D9 °दु )ष्टास्वननादितासु, T1 क्रौंचीषु मृष्टस्वरनादितासु, T2 3 G1 3 4 M1 क्रौंचान्यपुष्ट( M1 °ष्टा )स्वरनादितासु

16 M3 om 16$^{ab}$ (cf v l 15) — $^{a}$) M1 विकीर्ण (for विस्तीर्ण) D2 -कूट (for -कूल) D1–9 द्रुमना दितासु (for ह्रदशोभि) V1 B Dn D10 विकी( Dn3 °स्ती )र्णकूलद्रुमराजितासु — D6 om (hapl) 16$^{cd}$ — $^{b}$) B3 partly damaged B5 तपस्विनीषु, Dn1 D1 °स्विसिद्धि (for °स्विसिद्ध) D1 7 8 शोभितासु (for सेवि°) — B2 reads 16$^{cd}$ on marg. — $^{c}$) B1 सत्य (for नित्य) B3 स्फुरदुदकासु, D1

वसामि नित्यं सुबहूदकासु
सिंहैर्गजैश्चाकुलितोदकासु ।
मत्ते गजे गोवृषभे नरेन्द्रे
सिंहासने सत्पुरुषे च नित्यम् ॥ १६
यस्मिन्गृहे हूयते हव्यवाहो
गोब्राह्मणश्चार्च्यते देवताश्च ।
काले च पुष्पैर्बलयः क्रियन्ते
तस्मिन्गृहे नित्यमुपैमि वासम् ॥ १७
स्वाध्यायनित्येषु द्विजेषु नित्यं
क्षत्रे च धर्माभिरते सदैव ।
वैश्ये च कृष्याभिरते वसामि
शूद्रे च शुश्रूषणनित्ययुक्ते ॥ १८
नारायणे त्वेकमना वसामि
सर्वेण भावेन शरीरभूता ।
तस्मिन्हि धर्मः सुमहान्निविष्टो
ब्रह्मण्यता चात्र तथा प्रियत्वम् ॥ १९
नाहं शरीरेण वसामि देवि
नैवं मया शक्यमिहाभिधातुम् ।
यस्मिंस्तु भावेन वसामि पुंसि
स वर्धते धर्मयशोर्थकामैः ॥ २०

इति श्रीमहाभारते अनुशासनपर्वणि एकादशोऽध्यायः ॥ ११ ॥

---

7–9 S स्व बहू, D10 सुबहूदकेषु (for °कासु) — d) G1 partly damaged B1 कुजैश् (for गजैश्) D4 7–9 [उ]त्कालितोदकासु D10 [आ]कुलितोदगासु (for कासु) — After 16cd, T1 repeats 15c — e) D4 6 गजेन्द्रे, M1–3 च नित्य (for नरेन्द्रे) — T1 om 16f — f) V1 B5 Dn1 n2 D4–6 सत्पुरुषेषु, B8 षे चापि (for °षे च)

17 D5 om 17 — a) T1 G हूयति (for °ते) D8 हव्यवाहे — b) T2 3 M गौर् (for गो) D1–8 ब्राह्मण (for °णश्) G2 4 [अ]र्चित (for [अ]र्च्यते) T2 3 G1 3 M देवता (for °ताश्) T1 यस्मिन्गृहे पूजिता ब्राह्मणाश्च — For 17ab, V1 B Dn D10 subst.

62* यस्मिञ्जनो हव्यभुजं जुहोति
गोब्राह्मणं चार्चति देवताश्च ।

[(L 2) Dn2 गोब्राह्मणांश् B4 Dn1 देवता (for °ताश्)] While D4 6–9 subst for 17ab

63* यस्मिन्यज्ञे हूयति हव्यवाहे
गोब्राह्मणाभ्यार्चितदेवतासु ।

[(L 1) D7 पक्षे (for यज्ञे) D6 हव्यवाहो. —(L 2) D6 गोब्राह्मणेष्वर्चित (for °णाभ्यर्चित)]

— c) G1 4 कालेन, M4 कालेय (for काले च) T1 क्रियते (for क्रियन्ते) — d) D10 G1 उपैति (for °मि) D1–4 6–9 तस्मिन्गृहे वासमुपैमि नित्य

18 a) D1–8 -युक्तेषु, S शीलेषु (for नित्येषु) V1 B Dn D8 10 सदा द्विजेषु, T1 द्विजोत्तमेषु (for द्विजेषु नित्य) — b) B5 स्व (for च) S (except T1) तथा (for सदा) D4–6 क्षेत्रेषु सत्याभिरतेषु नित्यं — c) D4–6 वैश्येषु (for वैश्ये च) T1 वार्ताभिरते, G3 कृष्येभि°, M कृष्याग्नि (for कृष्याभि°) — d) G1 partly damaged D4–7 शूद्रेषु (for शूद्रे च) T1 G2–4 नित्ययत्ने, T2 3 M °यत्ते (for नित्ययुक्ते)

19 b) T3 om. (hapl) from सर्वेण (in 19b) to वसामि (in 20c) D4–6 च सर्वभूते, D7–9 शरीरपू (D8 °भू)ते (for भूता) — c) D1–4 6–9 G1 3 अस्मिन् (for त) D5 om हि B4 विशिष्टो (for निविष्टो) — d) B5 ब्रह्मण्यभावोत्र, D8 ब्राह्मण्यता चात्र D5 6 ब्रह्मण्यता च प्रियवादिता च

20 T3 om up to वसामि (in 20c) (cf v 1 19) — a) D4 5 शरीरे नि (for शरीरेण) — b) D1 [ए]त, D2–9 [ए]तन् (for [ए]व) B5 [अ]भिनेतुं, D8 °धार्नं (for धातुम्) — c) V1 B1 2 4 5 Dn D10 भावेन यस्मिन्नि, B3 एवंविधे चैव (for यस्मिंस्तु भावेन) T1 यस्मिन्प्रभावेन वसामि पुंस — d) D1 T2 G4 सवर्धते; M1–3 4 (inf lin as in text) संपद्यते (for स वर्धते) D8 -यशार्थ (for यशोर्थ) D3 -काम (for कामैः)

# १२

युधिष्ठिर उवाच ।
स्त्रीपुंसयोः संप्रयोगे स्पर्शः कस्याधिको भवेत् ।
एतन्मे संशयं राजन्यथावद्वक्तुमर्हसि ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भङ्गाश्वनेन शक्रस्य यथा वैरमभूत्पुरा ॥ २
पुरा भङ्गाश्वनो नाम राजर्षिरतिधार्मिकः ।
अपुत्रः स नरव्याघ्र पुत्रार्थं यज्ञमाहरत् ॥ ३
अग्निष्टुं नाम राजर्षिरिन्द्रद्विष्टं महाबलः ।
प्रायश्चित्तेषु मर्त्यानां पुत्रकामस्य चेष्यते ॥ ४
इन्द्रो ज्ञात्वा तु तं यज्ञं महाभागः सुरेश्वरः ।
अन्तरं तस्य राजर्षेरन्विच्छन्नियतात्मनः ॥ ५
कस्यचित्त्वथ कालस्य मृगयामटतो नृप ।
इदमन्तरमित्येव शक्रो नृपमसोहयत् ॥ ६
एकाश्वेन च राजर्षिर्भ्रान्त इन्द्रेण मोहितः ।
न दिशोऽविन्दत नृपः क्षुत्पिपासार्दितस्तदा ॥ ७

---

Colophon om in D1 — *Parvan name* B1-4 Dn8 शांति — *Sub-parvan* V1 B Dn D2-7 9 10 M दान धर्म — *Adhy name* V1 B1 2 4 5 Dn D8 8 10 M4 श्री (Dn1 D10 om श्री) रुक्मि (M4 °ग्मि) णीसवाद, D4-7 9 रुक्मिणीकृष्णसंवाद, T2 रुक्मिणीलक्ष्मीसवादे श्रीस्थलकथने, T8 G रुक्मिणीलक्ष्मीसवाद — *Adhy no* (figures, words or both) B3 11 (as in text), D10 10, S 33 — *Śloka no* Dn1 21, D4 20 — After this adhy, S ins a passage given in App I (No 2)

## 12

1 [a]) B1 पुसो (submetric) (for पुंसयो) — [b]) T1 सुख (for स्पर्श) M4 [ऽ]भवत् (for भवेत्) B8 6 D10 प्रीति क (D10 °तिस्त) स्याधिका भवे (D10 °काभव) त् ❀ Cn स्पर्शो वैषयिकं सुखम् । ❀ — [c]) D1 2 T1 M4 एत (for एतन्) D3 सशयो, G1 damaged (for °य) V1 B2 4 Dn D10 एतस्मिन्संशये राजन् — [d]) D1-8 7 छेत्तुम् (for वक्तुम्)

2 [c]) B1 2 5 Dn भगास्वनेन, D1-8 10 भृ (D10 भ) गाश्वकेन, D4 6-9 भृ (D4 भ) गाश्वेन च, D5 मृगाश्वेनेन (for भङ्गाश्वनेन) — [d]) D1-3 नृप, D4-9 तदा (for पुरा)

3 [a]) B1 2 4 5 Dn भगाम्वनो, D1-3 5-10 भृ (D10 भं) गाश्वको, D4 भगाश्वगो (for °श्वनो) — [b]) D1 देवर्षिर् (for राज) D1 7 8 इति (for ऋति) D3 8 देव (D3 राज) र्षिरभिविश्रुत — [c]) V1 B Dn D10 पुत्रप (for स नर) V1 T8 व्याघ्र — [d]) D1 6 सुप्राप्यं, T1 G M1-8 पुत्रार्थे (for पुत्रार्थं) D1-6 सुप्राप्यं यज्ञ मारभत् — After 3, T2 8 G read 6[cd] for the first time, repeating it in its proper place

4 [a]) T2 8 M8 अग्निष्टुर्, G2 4 °जिन् (for °ष्टु) D1-4 6-9 नृपतिर् (for राजर्षिर्) V1 B Dn Cn अग्निष्टुत स राजर्षिर् ❀ Cn त्रिगुणितोऽग्निष्टोमोऽग्निष्टुत । तत्र ह्यग्निरेव स्तूयते । स च पुत्र ददाति दाशुषे इति मन्त्रवर्णात्पुत्रप्रद क्रतु । स चेन्द्रद्विष्ट । तत्रेन्द्रस्य प्राधान्याभावात् । ❀ — [b]) D10 T G द्विष्टो (for द्विष्ट) D1-9 महाक्रतु (D3 °म) (for °बल) — [c]) D8 प्रायश्चित्येषु, M1 2 °श्चित्तेन — [d]) V1 B Dn D10 कामेषु (for कामस्य) D4-7 9 पुत्रकाम स इज्य (D9 इश्य) ते, D8 °कामे स उच्यते, T1 °कामेषु चेष्टिते

5 [a]) D1 8 [ऽ]पि ज्ञात्वा, T8 ज्ञात्वा च, G1 damaged (for ज्ञात्वा तु) T1 कृत (for तु त) — [b]) D1 अभागश्च, D8 महाभाग, D4-9 अभ्यगात्स, M1-3 अथागम्य, T2 8 G तथा (G2 °दा) गत्य, M4 तथागम्य (for महाभाग) — [d]) M2 3 अभ्यैच्छन्, T1 अन्वै (for अन्वि°) T2 3 G प्र (for नि) M4 T1 अध्यगच्छयतात्मन — After 5, N (except D8) ins

64* न चैवास्यान्तर राजन्स ददर्श महात्मन ।

[Dn8 वै वापि, D10 [ए]व तस्य (for चैवास्य) D1 2 4-9 य (D8 जि) तात्मन (for महा°)]

6 [b]) V1 B Dn D10 मृगया (V1 B3 Dn3 °य) गतवान्नृप, D5 °यायामटन्नृप, T1 °यार्थे गतो नृप, T2 8 G1 3 4 M °यामटते नृप — T2 3 G read 6[cd] for the first time after 3 — [c]) V1 B1 [ए]व

7 [a]) B1 D10 तु, D1 4-9 स (for च) T1 एको

इतश्चेतश्च वै धावञ्श्रमतृष्णार्दितो नृपः ।
सरोऽपश्यत्सुरुचिरं पूर्णं परमवारिणा ।
सोऽवगाह्य सरस्तात पाययामास वाजिनम् ॥ ८
अथ पीतोदकं सोऽश्वं वृक्षे बद्ध्वा नृपोत्तमः ।
अवगाह्य ततः स्नातो राजा स्त्रीत्वमवाप ह ॥ ९
आत्मानं स्त्रीकृतं दृष्ट्वा व्रीडितो नृपसत्तमः ।
चिन्तानुगतसर्वात्मा व्याकुलेन्द्रियचेतनः ॥ १०
आरोहिष्ये कथं त्वश्वं कथं यास्यामि वै पुरम् ।
अग्निष्टुं नाम इष्टं मे पुत्राणां शतमौरसम् ॥ ११
जातं महाबलानां वै तान्प्रवक्ष्यामि किं त्वहम् ।
दारेषु चास्मदीयेषु पौरजानपदेषु च ॥ १२
मृदुत्वं च तनुत्वं च विक्लवत्वं तथैव च ।
स्त्रीगुणा ऋषिभिः प्रोक्ता धर्मतत्त्वार्थदर्शिभिः ।
व्यायामः कर्कशत्वं च वीर्यं च पुरुषे गुणाः ॥ १३
पौरुषं विप्रनष्टं मे स्त्रीत्वं केनापि मेऽभवत् ।
स्त्रीभावात्कथमश्वं तु पुनरारोढुमुत्सहे ॥ १४
महता त्वथ खेदेन आरुह्याश्वं नराधिपः ।
पुनरायात्पुरं तात स्त्रीभूतो नृपसत्तम ॥ १५

---

सनेथ राजर्षिर् — $^{b}$) G4 श्रात (for श्रान्त) — $^{c}$) D1 [s]शिर्मत (sic), D4–9 विंदति (for ऽविन्दत) T2 G न दीनो विंदवि नृप (T8 जल) — $^{d}$) V1 तथा; D4 5 नृप, D6 8 9 नृप, D7 नृप (for सदा)

8 $^{a}$) T1 शनैर् (for च वै) Dn1 n2 D2 9 वै राजन्, D4–6 धावन्स, G1 वै यावत् (for वै धावन्) — $^{b}$) V1 Dn3 T2 तृष्णान्वितो (for °र्दितो) D1 3 10 G3 नृप (for नृप) Dn1 n2 D4 श्रमतृष्णान्वितो नृप — $^{c}$) D4–7 स (for सु-) D2 8 विपु(D3 °म)ल (for रुचिरं) — $^{d}$) D2 8 पूर्वं परमवारिधिं — $^{e}$) D2 8 सो(D3 अ)वगाहत (hypermetric) (for गाह्य) M1–3 ततस् (for सरस्) V1 तावत्, B3 तत्र, D10 स्नात (for तात) — $^{f}$) D1, 3–9 पाययित्वा च (D1 3 8 9 °त्वाथ) वाजिनं, D10 स्नापयामास वा°

9 B2 damaged for 9$^{a}$ — $^{b}$) S transp वृक्षे and बद्ध्वा D2 7 G3, 4 नृपोत्तम — T1 om 9$^{cd}$ — $^{c}$) B4 Dn1 तात, D2 9 वारि, M त्वेकां (for स्नातो) — $^{d}$) D4 तत्र (for राजा) M च (for ह) V1 B Dn D10 तत्र स्त्रीत्वमवाप्तवान्

10 $^{a}$) G1 partly damaged D1–4 6–9 G4 ज्ञात्वा (for दृष्ट्वा) — $^{b}$) D4–9 व्रीडितो नृपतिस्तदा, S (except T1) व्रीलितो नृपसत्तम (T2 3 M4 °म·) — $^{c}$) D4–9 चिंतामन्वगमत्पापा (D5 °पं, D8 °र्थं), D10 मुपगत सोय — $^{d}$) S मानस (for -चेतन) D10 सर्वात्मा व्याकुलेंद्रिय·

11 $^{a}$) D2 8 आरोक्ष्यामि, T1 °हिष्ये (for °हिष्ये) B4 च (for तु) D1 4–9 आरोक्ष्यामि कथ ह्य(D1 त्व)श्वं — $^{b}$) D1 3 4–9 तां पुरीं, T1 तत्पुरं (for वै पुरम्) — $^{c}$) V1 B Dn D8 10 इष्टेनाग्निष्टुता चा(B1, 3 5 Dn3 चा)पि, D1 अग्निष्टुत्वा च यष्टे मे (sic); D2 8 अग्निष्टुता (D3 °ना) त्वयेष्ट्वा मे, D4–6 अग्निष्टोमेन यज्ञेन, D7 9 अश्रुताय च यष्टेन, T1 अग्निष्टुर्नाम चेष्ट मे

12 $^{a}$) V1 B Dn D10 मे; G1 damaged (for वै) — $^{b}$) G1 partly damaged D1–3 7–9 च (for प्र) D5 [अ]हं (for किं) V1 B4 T G त्वह, D5 कथ (for त्वहम्) D4 6 तान्वक्ष्यास्यहं कथ (submetric) — $^{c}$) B2 partly damaged V1 B1, 3–5 Dn D5 10 T2 3 M3 चा(Dn3 वा)त्मकीयेषु, D7 चात्मदाहेषु, D8 9 चात्मदेयेषु (for चास्मदी°) — T2 om. (hapl.) 12$^{d}$–16$^{b}$

13 T3 om 13 (cf v l 12) — $^{a}$) D1–4 6–9 तनु(D1 त्वन्न)त्व च मृदुत्व च — $^{b}$) B3 विक्रूरत्व (for विक्लवत्व) T1 3 G पराधीनत्वमेव च — After 13$^{ab}$, T3 G ins

65* हावभावादिलावण्यस्त्रीगुणाढ्या कुतूहलम् ।
[T3 G3 4 मावाभावादिलावण्य, G2 माव° (for the prior half) G2 त्रिगुणाद् (for स्त्री°)]

— $^{c}$) M ऋषिभि — $^{d}$) G1 partly damaged B1 -तत्त्वानु- (for तत्त्वार्थं-) — $^{e}$) V1 B Dn D10 व्यायामे, D4 G2 °म- (for °म·)

14 T2 om. 14 (cf v l 12) — $^{a}$) G4 पौरुष्यं D2–4 6 T1 G1 3 4 विप्रणष्ट V1 B2 4 Dn D10 वै (for मे) — $^{b}$) D3 6–9 [अ]थि (for [अ]पि) D2 3 8 भवेत् (for ऽभवत्) — After 14$^{ab}$, D4–6 read 16$^{cd}$ for the first time, repeating it in its proper place — $^{c}$) V1 B (except B2) Dn1, n2 D1 7–10 T1 पुनर् (for कथम्) V1 B Dn तं, D4–10 च, T1 मे, G4 नु (for तु) — $^{d}$) V1 B (except B2) Dn1 n2 D1, 5 7–10 कथम् (for पुनर्) T1 आरोढुं नोत्सहे पुन.

पुत्रा दाराश्च भृत्याश्च पौरजानपदाश्च ते ।
किं न्विदं त्विति विज्ञाय विस्मयं परमं गताः ॥ १६
अथोवाच स राजर्षिः स्त्रीभूतो वदतां वरः ।
मृगयामस्मि निर्यातो बलैः परिवृतो दृढम् ।
उद्भ्रान्तः प्राविशं घोरामटवीं दैवमोहितः ॥ १७
अटव्यां च सुघोरायां तृष्णार्तो नष्टचेतनः ।
सरः सुरुचिरप्रख्यमपश्यं पक्षिभिर्वृतम् ॥ १८
तत्रावगाढः स्त्रीभूतो व्यक्तं दैवान्न संशयः ।
अतृप्त इव पुत्राणां दाराणां च धनस्य च ॥ १९
उवाच पुत्रांश्च ततः स्त्रीभूतः पार्थिवोत्तमः ।
संप्रीत्या भुज्यतां राज्यं वनं यास्यामि पुत्रकाः ।
अभिषिच्य स पुत्राणां शतं राजा वनं गतः ॥ २०
तामाश्रमे स्त्रियं तात तापसोऽभ्यवपद्यत ।
तापसेनास्य पुत्राणामाश्रमेऽप्यभवच्छतम् ॥ २१
अथ सा तान्सुतान्गृह्य पूर्वपुत्रानभाषत ।
पुरुषत्वे सुता यूयं स्त्रीत्वे चेमे शतं सुताः ॥ २२

---

15 T2 om 15 (cf. v 1 12) — [a]) G1 partly damaged V1 B Dn D10 यत्नेन, D1–8 वेगेन (for खेदेन) T1 महत्त्वात्त्वथ खेदस्य — [b]) B2 partly damaged G1 8 नराधिप D2 8 सोऽश्रमारह्य भूपति — [c]) B2 damaged D8 पुरीं (for पुरं) — [d]) V1 B1 2 Dn1 n2 D10 स्त्रीकृतो (for °भूतो) V1 B1 8 Dn D1 8 6–9 T1. 8 सत्तम· (for °म)

16 T2 om 16[ab] (of v 1. 12) — [a]) Dn2 D1. 2 4 6–9 S (except G2, T2 om) पुत्रदारा( D7 °सा )श्च (for पुत्रा दाराश्च) — [b]) B1 8–5 त, T1 ये (for ते) D1–9 पौरजानपदं च तत् — D1–6 read 16[cd] for the first time after 14[ab] — [c]) B1 Dn D1 T2 G1 8 4 M8 स्विद तु, D2 8 इद तु (D8 हि), D4 (both times) न्वेतद्, D5 6 (both both times) 7–9 त्वेतद् (for न्विद तु) — [d]) G1 partly damaged V1 D1 4–6 (last three first time) गत (for गता)

17 [b]) G8 4 वर (for वर) D8 स्त्रीभूतो नृपसत्तम — [c]) V1 B2 Dn1 अह, B8 5 अथ, S चास्मि (for अस्मि) D1 नियतो (for निर्यातो) — [d]) B8 5 ह्यह (for दृढम्) T1 सुघोर प्राविश वनं — T1 om 17[ef] — [e]) D7 प्राविशद्, D8 9 प्राविशद् B2 5 D10 M1 घोरम् (for घोराम्) — [f]) T2 8 G1 8 4 परि- (for दैव-) V1 B Dn D10 -चोदित (for -मोहित)

18 B2 partly damaged for 18[ab] — [a]) G1 partly damaged D7 स (for सु) — [b]) D1. 4. 6–9 M1–8 तृषार्तो (for तृष्णा°) — [c]) D1 सुरुचिरं Dn3 सर सुरुचिर पुण्यम्, D1–9 सर शुचिजलं पुण्यम् — [d]) D8 अगमत्, G1 अपश्यत् (for °श्यं) D1. 2 T1 युतं (for वृतम्) D4–6 अद्राक्ष पक्षिसकुल, D7–9 अपश्य पक्षिसयुत

19 [a]) V1 अत्र, M1–8 4 (*inf lin*) सरो (for तत्र) D7 [अ]वगाह्य, M8 4 °गाढ (for °गाढ) — [b]) V1 B Dn D10 दैवेनाह कृत पुरा (B8 °न) — Before 19[cd], M2–4 ins भीष्म — [cd]) D9 अदस्, T1 अवृत्त (for अतृप्त) D4–8 T2 8 G M2–4 एव (for इव) T1 transp पुत्राणा and दाराणा — For 19[cd], V1 B Dn D10 subst

66* नामगोत्राणि चाभाष्य दाराणा मन्त्रिणा तथा ।

20 [a]) V1 B Dn D10 आ( Dn8 प्रा )ह पुत्रास्तत सोथ — [b]) G1 8 4 पार्थिवोत्तम — [cd]) D9 स्त्री- (for स) D1 lacuna for राज्य वन यास्यामि D2 8 युष्माभिरिह पुत्रका (for 20[d]) — For 20[ef], V1 B Dn D5 10 subst

67* एवमुक्त्वा पुत्रशतं वनमेव जगाम ह ।

While, S subst for 20[ef]

68* स पुत्राणा शत राजा अभिषिच्य वन गत ।
[ Before the above, M1–8 ins भीष्म ]

21 [a]) B2 partly damaged D3 6 आश्रमी, T1 G चाश्रमे, T2 8 M त्वा° (for आ°) V1 B Dn D5 10 गत्वा चैवाश्रम सा तु — [b]) V1 B Dn D5 10 तापस (Dn3 °से) प्रत्यपद्यत (B1 °द्य च), D1 6 8 9 सेऽभ्य (D8 9 °व)पद्यत, D7 °स्येऽव — [c]) D1 partly damaged. D2 8 तत्रापि चैव पुत्राणाम्, D1 6–9 तापसा चैव पु° — [d]) B2 Dn D6 T8 G1 आश्रमेषु, D1–4 6–9 °मेऽस्य, G2 ह्याश्रमेपि, G3 तापसेषु (for आश्रमेऽपि)

22 [a]) D2 3 सुतान्पूर्वान, G2 प्रगृह्याशु (for सुतान्गृह्य) V1 B Dn D5 10 अथ तानादाय तान्सर्वा( B1 4 D10 °न्पुत्रा )न् — [b]) D1 4 6–9 पूर्वान (for पूर्व) D2 8 गृहीत्वा वाक्यमब्रवीत् — [c]) D1 6 7 8 तथा, D8 यथा (for सुता) — [d]) Dn3 चेमे शत, D1 lacuna, D2 8 चैते हि मे (for चेमे शत)

एकत्र भुज्यतां राज्यं भ्रातृभावेन पुत्रकाः ।
सहिता भ्रातरस्तेऽथ राज्यं बुभुजिरे तदा ॥ २३
तान्दृष्ट्वा भ्रातृभावेन भुञ्जानान्राज्यमुत्तमम् ।
चिन्तयामास देवेन्द्रो मन्युनाभिपरिप्लुतः ।
उपकारोऽस्य राजर्षेः कृतो नापकृतं मया ॥ २४
ततो ब्राह्मणरूपेण देवराजः शतक्रतुः ।
भेदयामास तान्गत्वा नगरं वै नृपात्मजान् ॥ २५
भ्रातॄणां नास्ति सौभ्रात्रं येऽप्येकस्य पितुः सुताः ।
राज्यहेतोर्विवदिताः कश्यपस्य सुरासुराः ॥ २६
यूयं भङ्गाश्वनापत्यास्तापसस्येतरे सुताः ।
कश्यपस्य सुराश्चैव असुराश्च सुतास्तथा ।
युष्माकं पैतृकं राज्यं भुज्यते तापसात्मजैः ॥ २७
इन्द्रेण भेदितास्ते तु युद्धेऽन्योन्यमपातयन् ।
तच्छ्रुत्वा तापसी चापि संतप्ता प्ररुरोद ह ॥ २८
ब्राह्मणच्छद्मनाभ्येत्य तामिन्द्रोऽथान्वपृच्छत ।
केन दुःखेन संतप्ता रोदिषि त्वं वरानने ॥ २९
ब्राह्मणं तु ततो दृष्ट्वा सा स्त्री करुणमब्रवीत् ।
पुत्राणां द्वे शते ब्रह्मन्कालेन विनिपातिते ॥ ३०
अहं राजाभवं विप्र तत्र पुत्रशतं मया ।
समुत्पन्नं सुरूपाणां विक्रान्तानां द्विजोत्तम ॥ ३१
कदाचिन्मृगयां यात उद्भ्रान्तो गहने वने ।
अवगाढश्च सरसि स्त्रीभूतो ब्राह्मणोत्तम ।

---

23 a) D4 एकत्व, M एभिश्च (for एकत्र) — c) D10 तेच (for तेऽथ) — d) G2 4 तथा (for तदा)

24 a) D1 partly damaged. D2 8 तान्दृष्ट्वा तु (D2 om तु) सर्वं भ्रातॄन् — d) V1 B Dn D10 T8 [अ]थ (for [अ]भि) D2 -परिप्लुत — e) B6 उपहारो (for कारो) — f) B2 8 5 [अ]पकृतो (for कृत)

25 a) S (except G2) वेषेण (for रूपेण) — d) B8 गुरुयन्वै, D1-8 नगरे वै, T1 °रे तान्, T2 8 G रेषु, M रे तु (for र वै)

26 a) T1 [ए]व (for [अ]स्ति) B1 D4-6 सौहार्दं (B1 र्यं) (for सौभ्रात्र) — b) D1 यदि, D8 येच D4-7 9 ये तु (for येऽपि) — D2-4 8 om (hapl) $26^{c}$–$27^{b}$ — c) D1 **दित्वा, D6 7 9 विविदिता (for विव) — d) V1 B2 4 D9 कस्यपस्य, T2 8 G2-4 M काश्य°, G1 damaged (for कश्य) D1, 5-7 9 सुता पुरा, T1 पुरा सुता (for सुरासुरा)

27 D2-4 8 om $27^{ab}$ (cf v l 26) — a) Dn1 य यं (for यूयं) V1 B (except B8) Dn भगास्वनापत्यास्, D1 5-7 9 मृगाश्वतनया(D1 कसुता)स्, S भंगाश्वनो(G2 M श्वना, G4 श्विनो)पत्यं — T G om. $27^{cd}$ — c) V1 कास्यपस्य D1 2 6-9 [अ]सुराश्, D10 सुताश् (for सुराश्) D5 चैव M काश्यपस्य सुताश्चैव — d) D1-9 वि(D4 om वि)बुधाश् (for असुराश्) B4 तु (for च) V1 D10 M2-4 सुरास् (for सुतास्) D1-8 यथा, M सदा (for तथा) — e) D1 पैत्रकं, D8 पैतृकी (for °क)

28 Before 28, T1 ins भीष्म — a) D1-8 [ऽ]त्र, D4 6 वै (for तु) — b) B1 D6 9 अपातयत्, G1 damaged — c) Dn8 एतच्छ्रुत्वा (hypermetric), D4-7 9 श्रुत्वा तु, D8 श्रुत्वापि (for तच्छ्रुत्वा) Dn8 वा (for च) — d) D4 प्रारुरोद T G संतप्ता (T1 रुरोद) भृशदुःखिता

29 a) Dn8 D1 [अ]स्येत्य (for [अ]भ्येत्य) T2 8 G पुनर्ब्राह्मणवेषेण — b) D1 तम् (for ताम्) B8 [अ]न्वगच्छत, D1 4-9 [अ]नुपृच्छ(D4 च्छे)त — cd) T2 8 G संतापं करोषि (for संतप्ता रोदिषि)

30 a) G1 partly damaged D8 ब्राह्मण्य (for °ण) V1 B (except B1) Dn स, D10 om (for तु) — b) T G वचनम् (for करुणम्) — c) B1 विप्र (for ब्रह्मन्)

31 a) D1-9 पूर्वं (for विप्र) — b) T1 तद्धि (for तत्र) Dn2 पूर्वं (for पुत्र-) V1 B Dn D10 T1 मम (for मया) — c) D1-4 6-9 उत्पादित (for समुत्पन्नं) V1 B2-5 Dn1 n8 D7 T2 8 M8 4 Cn स्व, Dn1 स (for सु) ❀ Cn स्वरूपाणां स्वस्येव रूपं येषां तेषाम् । ❀ — d) T2 partly damaged G1, 8 4 M नरोत्तम, G2 नरर्षभ (for द्विजोत्तम) V1 B Dn D10 पुत्राणां ब्राह्मणोत्तम

32 D2 6 8 om (hapl) $32^{abcd}$ — a) G1 partly damaged T2 मृगयाश्रांत, T8 G2-4 °शावाक्ष (for °या

पुत्रा दाराश्च भृत्याश्च पौरजानपदाश्च ते ।
किं न्विदं त्विति विज्ञाय विस्मयं परमं गताः ॥ १६
अथोवाच स राजर्षिः स्त्रीभूतो वदतां वरः ।
मृगयामस्मि निर्यातो बलैः परिवृतो दृढम् ।
उद्भ्रान्तः प्राविशं घोरामटवीं दैवमोहितः ॥ १७
अटव्यां च सुघोरायां तृष्णार्तो नष्टचेतनः ।
सरः सुरुचिरप्रख्यमपश्यं पक्षिभिर्वृतम् ॥ १८
तत्रावगाढः स्त्रीभूतो व्यक्तं दैवान्न संशयः ।
अतृप्त इव पुत्राणां दाराणां च धनस्य च ॥ १९
उवाच पुत्रांश्च ततः स्त्रीभूतः पार्थिवोत्तमः ।
संप्रीत्या भुज्यतां राज्यं वनं यास्यामि पुत्रकाः ।
अभिषिच्य स पुत्राणां शतं राजा वनं गतः ॥ २०
तामाश्रमे स्त्रियं तात तापसोऽभ्यवपद्यत ।
तापसेनास्य पुत्राणामाश्रमेऽप्यभवच्छतम् ॥ २१
अथ सा तान्सुतान्गृह्य पूर्वपुत्रानभाषत ।
पुरुषत्वे सुता यूयं स्त्रीत्वे चेमे शतं सुताः ॥ २२

---

15 T2 om 15 (cf. v 1 12) — a) G1 partly damaged V1 B Dn D10 यत्नेन, D1–8 वेगेन (for खेदेन) T1 महत्त्वात्त्वथ खेदस्य — b) B2 partly damaged G1 8 नराधिप D2 8 सोऽश्रमारह्य भूपति — c) B2 damaged D8 पुरीं (for पुरं) — d) V1 B1. 2 Dn1 n2 D10 स्त्रीकृतो (for °भूतो) V1 B1 8 Dn D1. 8 5–9 T1 8 सत्तम· (for °म)

16 T2 om 16ab (of v 1 12) — a) Dn2 D1 2 4 6–9 S (except G2, T2 om) पुत्रदारा(D7 °सा)श्च (for पुत्रा दाराश्च) — b) B1 8–5 त, T1 ये (for ते) D1–9 पौरजानपदं च तत् — D4–8 read 16cd for the first time after 14ab — c) B1 Dn D1 T2 G1 8 4 M8 त्विद तु, D2 8 इद तु (D8 हि), D4 (both times) न्वेतद्, D5 6 (both both times) 7–9 त्वेतद् (for न्विद तु) — d) G1 partly damaged V1 D1 4–6 (last three first time) गत (for गता)

17 b) G8 4 वर (for वर) D8 स्त्रीभूतो नृपसत्तम — c) V1 B2 Dn1 अह, B8 5 अथ, S चास्मि (for अस्मि) D4 नियतो (for निर्यातो) — d) B8 5 इह (for दृढम्) T1 सुघोर प्राविश वन — T1 om 17ef — e) D7 प्रादिशद्, D8 9 प्राविशद् B2 5 D10 M1 घोरम् (for घोराम्) — f) T2 8 G1 8 4 परि- (for दैव-) V1 B Dn D10 -चोदित (for -मोहित)

18 B2 partly damaged for 18ab — a) G1 partly damaged D1 स (for सु) — b) D1. 4. 6–9 M1–8 तृषार्तो (for तृष्णा°) — c) D1 सुरुचिरं Dn8 सर सुरुचिर पुण्यम्, D1–9 सर शुचिजल पुण्यम् — d) D3 अगमत्, G2 अपश्यत् (for श्यं) D1 2 T1 युतं (for वृतम्) D4–6 अद्राक्ष पक्षिसकुल, D7–9 अपश्य पक्षिसयुत

19 a) V1 अत्र; M1–8 4 (*inf lin*) सरो (for तत्र) D7 [अ]वगाह्य, M8 4 °गाढ (for °गाढ) — b) V1 B Dn D10 दैवेनाह कृत पुरा (B8 °न) — Before 19cd, M2–4 ins भीष्म — cd) D9 अदस, T1 अवृत्त (for अतृप्त) D4–8 T2 8 G M2–4 एव (for इव) T1 transp पुत्राणा and दाराणा — For 19cd, V1 B Dn D10 subst

66* नामगोत्राणि चाभाष्य दाराणा मन्त्रिणा तथा ।

20 a) V1 B Dn D10 आ(Dn8 प्रा)ह पुत्रास्तत सोऽथ — b) G1 8 4 पार्थिवोत्तम — cd) D9 स्त्री (for स) D1 lacuna for राज्य वन यास्यामि D2 8 युष्माभिरिह पुत्रका (for 20d) — For 20ef, V1 B Dn D5 10 subst

67* एवमुक्त्वा पुत्रशत वनमेव जगाम ह ।

While, S subst for 20ef

68* स पुत्राणा शत राजा अभिषिच्य वनं गत ।
[ Before the above, M1–8 ins भीष्म ]

21 a) B2 partly damaged D4 6 आश्रमी, T1 G चाश्रमे, T2 8 M स्वा° (for आ) V1 B Dn D5 10 गत्वा चैवाश्रम सा तु — b) V1 B Dn D7 10 तापस (Dn2 °से) प्रत्यपद्यत (B1 °द्य च), D1 6 8 9 °सेऽप्यभ्य (D8 9 व)पद्यत, D7 °सेऽप्यव° — c) D1 partly damaged D2 8 तत्रापि चैव पुत्राणाम्, D1 6–9 तापसा चैव पु° — d) B2 Dn D5 T3 G1 आश्रमेषु, D1–4 6–9 °मेऽस्य, G2 ह्याश्रमेपि, G3 तापसेषु (for आश्रमेऽपि)

22 a) D2 8 सुतान्पूर्वान्, G2 प्रगृह्याशु (for सुता न्गृह्य) V1 B Dn D5 10 अथ साताय तान्सर्वा(B1 4 D10 °न्पुत्रा)न् — b) D1 4 6–9 पूर्वान् (for पूर्व) D2 8 गृहीत्वा वाक्यमब्रवीत् — c) D1 6 7 8 तथा, D8 यथा (for सुता) — d) Dn2 वेमे शत, D1 lacuna, D2 8 चैते हि मे (for चेमे शत)

प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः ।
श्मशानचारी भगवान्खचरो गोचरोऽर्दनः ॥ ३२
अभिवाद्यो महाकर्मा तपस्वी भूतभावनः ।
उन्मत्तवेशप्रच्छन्नः सर्वलोकप्रजापतिः ॥ ३३
महारूपो महाकायः सर्वरूपो महायशाः ।
महात्मा सर्वभूतश्च विरूपो वामनो मनुः ॥ ३४
लोकपालोऽन्तर्हितात्मा प्रसादो हयगर्दभिः ।
पवित्रश्च महांश्चैव नियमो नियमाश्रयः ॥ ३५
सर्वकर्मा स्वयंभूश्च आदिरादिकरो निधिः ।
सहस्राक्षो विरूपाक्षः सोमो नक्षत्रसाधकः ॥ ३६
चन्द्रसूर्यगतिः केतुर्ग्रहो ग्रहपतिर्वरः ।
अद्रिरद्र्यालयः कर्ता मृगबाणार्पणोऽनघः ॥ ३७

---

चण्डांशु ) — ( L 3 ) D10 वृषभाक्षक° M1 2 विश्वस्थो विषमक्षक ( for the post half ) — ( L 4 ) D10 पीत ( for शिव ) M1 2 जीवश्वेत- ( for शिव° श्वेत ) T1 द्विजोत्तम ( for शिवो ) — ( L 5 ) M1 2 सितकेशश्च ( for शितिकेशश्च ) D10 T1 M1 2 द्रिली( T1 °लि )पो ( for दितिपो ) — ( L 6 ) M1–3 विला( M3 °लो )पो ( for विलामो ) — ( L 7 ) G4 M3 वज्रो ( for भद्रो ) — ( L 9 ) D10 उत्तमश्री ( for °श्री ) — ( L 10 ) M1 2 सूक्ष्म ( for सूक्ष्म° ) D10 विचिंतक , T2 विभग्नक , T3 विप्रग ( for विभि ) — ( L 11 ) D10 M1 2 विभुर्, Madras ed भवो ( for भुवो ) M1 शिरशार्पित ( for °र्पित ) — ( L 12 ) T2 3 M1 2 क्रव्याद T1 कालाग्नि ( for °ग्नि ) M1 2 कालदिकाव्यकारण ( for the post half ) — ( L 13 ) D10 पद्मश्च ( for अण्डश्च ) D10 वित्तोद्भूतो ( for विराड्भूतो ) M1 2 विशेषवित् ( for °कृत् ) — ( L 14 ) M1 2 -गर्भो ( for -गर्भ ), and हितभूत ( for बहिर्भूत° ) — ( L 15 ) D10 जाग्रत्सुप्त° सुषुम्नश्च ( for the prior half ) T2 3 G4 सुषुप्तश्च तमपश्च ( for मिश्र तुरीयश्च ) D10 M1 विधूनन — ( L 16 ) T1 M1–3 चिन्तां( T1 °त्रां )त करणात्मक ( for the post half ) — ( L 17 ) D10 विषदो ( for विशदो ) D10 T1 M1–3 विश्ववि-( T1 जि )द्विश्वसग्रह ( for the post half ) — ( L 18 ) D10 खड्गरूपश्च T2 3 G4 अरूपश्च सुरूपश्च ( for the prior half ) M1 वक्त्र ( for वज्र ) — ( L 19 ) T1 -रूपश्च ( for वेदाश्च ) Madras ed जागर्ती ( for र्तिर् ) M1 विश्ववासो — ( L 20 ) D10 M1–3 अजानु ( M3 °नुर् ), T1 अनुजो ( for आजानुर् ) T1 [ आ ]विलेक्षण — ( L 21 ) M1 कश्चचरस् ( for तरस् ) D10 त्र्यक्ष कश्चचरोत्तम , T2 3 त्र्यक्षक क्षचर( T3 तक्षक )स्तम ( for the post half ) — ( L 22 ) M1 2 वृषाचो ( for द्यो ) D10 वरदो ( for वृषणो ) D10 M1 2 प्रजाकर°, T1 M3 गर ( for °हर ) ]

32 D10 transp 32[ab] and 32[cd] — [b] ) Linga P शांतात्मा ( for नियत ) — [c] ) B5 Dn1 n2 T1 श्मशान वासी, D7 9 समशानचारी — [d] ) Dn1 खेचरो D1–8 गोचरोद्भव , M रार्दन ( for रोऽर्दन ) D1–9 खेचरो गोचरोद्भव , T2 3 G2 4 खचरेश स्मरार्दन

33 [a] ) D1–8 महाकर्ता ( for कर्मा ) — [b] ) T1 M2–4 Linga P धारण ( for भावन ) — [c] ) V1 B1 4 D1 -वेश ; Dn2 n3 D8 9 G2 M1 2 4 -वेष , D4–7 10 T G4 M3 Linga P वेष ( for -वेश ) D7 प्रमत्त ( for प्रच्छन्न ) — [d] ) Dn3 D8 T2 3 G2 4 Linga P लोक ( for लोक )

34 [a] ) D1–8 महाकाल ( for काय ) — [b] ) B5 Dn1 n2 वृष ( for सर्व ) T1 भूतो ( for रूपो ) — [c] ) D4 6–9 सर्वात्मा ( for महात्मा ) V1 B Dn D10 भूतात्मा, D1–9 T2 3 G2 4 रूपश्च ( for भूतश्च ) — [d] ) D1–8 मानवो ( for वामनो ) M1 मन , Linga P नर ( for मनु ) V1 B Dn D10 विश्वरूपो महाहनु

35 [a] ) T2 3 G2 4 गृहीतात्मा ( for ऽन्तर्हि ) — [b] ) V1 गर्दभ , B2 3 5 Dn3 D10 M गार्दभि , B4 -सद्गति , D1–9 -गर्दभिः ( for भि ) T1 प्रमादो मवनो विदु , T2 3 G4 प्रमादभयकृद्विभु ( G4 °भी ), G2 प्रसादाभय-गर्दभि , Linga P प्रसादोभयदो विभु — [c] ) B2–5 Dn D10 M पवित्र V1 महायोगी ( for महांश्चैव ) — [d] ) V1 B Dn M नियमाश्रित , D1–7 9 मप्रिय , D8 मवत , D10 मास्थित , Linga P °ताश्रय ( for °माश्रय )

36 [a] ) M4 सर्वकाम ( for कर्मा ) V1 B Dn D10 T1 M स्वयभूत, G2 4 °भुश्च Linga P स्वयभू सर्व कर्मा च — [b] ) B1 om ( hapl ) रादि D1–9 आदिसृष्टि करो ( for आदिरादि ) — [c] ) V1 B Dn D10 T1 M Linga P विशालाक्ष ( for विरूपाक्ष ) — [d] ) T2 3 G4 सोम , G2 समो ( for सोमो ) T1 -दारक , T2 सायक ( for साधक° )

37 [a] ) T1 G4 शनि ( for गति ) V1 B Dn T2 3 G2 Linga P चद्र सूर्य शनि केतुर्, M चन्द्र सूर्याशन केतुर् — [b] ) Dn3 गृहो गृह ( for ग्रहो ग्रह )

महातपा घोरतपा अदीनो दीनसाधकः ।
संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ॥ ३८
योगी योज्यो महाबीजो महारेता महातपाः ।
सुवर्णरेताः सर्वज्ञः सुबीजो वृषवाहनः ॥ ३९
दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः ।
विश्वरूपः स्वयंश्रेष्ठो बलवीरो बलो गणः ॥ ४०
गणकर्ता गणपतिर्दिग्वासाः काम्य एव च ।
पवित्रं परमं मन्त्रः सर्वभावकरो हरः ॥ ४१
कमण्डलुधरो धन्वी बाणहस्तः कपालवान् ।
अशनी शतघ्नी खड्गी पट्टिशी चायुधी महान् ॥ ४२
स्रुवहस्तः सुरूपश्च तेजस्तेजस्करो निधिः ।
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ॥ ४३
दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ।
सृगालरूपः सर्वार्थो मुण्डः कुण्डी कमण्डलुः ॥ ४४

---

T3 पुरा, Linga P मत (for वर) — c) B8 T2 G4 आदिर् (for अद्रिर्) D8 केतो (for कर्ता) B1 2 अत्रिरघ्यालय कर्ता, Dn1 n2 अत्रिरघ्या नमस्कर्ता, D1–7 अदरिद्राल(D5 °द)य कर्ता, D8 9 (by corr) अदरिद्रयालय कर्ता, D10 आदिराजालय कर्ता, T1 आदिराख्योनल कर्ता, M आदिराद्यो लय कर्ता, Linga P राजा राज्योदय कर्ता — d) T1 -बाणस्तथा (for बाणार्पणो) Dn1 [ऽ]नव, D10 [ऽ]लघु, T2 3 G2 4 [ऽ]नल, Linga P घन (for ऽनघ)

38 a) D1–9 T2 3 G2 Linga P दीर्घ- (for घोर) — b) D1 देव (for दीन-) T2 3 G4 मानस (for -साधक) T1 आदर्शो नैकसाधक, G2 अधीरो धीरमानस, Linga P अदृश्यो धनसाधक — c) T1 M4 -कृतो (for करो) D1–9 मन्त्री (for मन्त्र) M1–3 Linga P सत्वत्सर कृतो मन्त्र — B1 M4 om (hapl) 38d–41c — d) Linga P प्राणायाम परतप

39 B1 M4 om 39 (cf v l 38) — a) T2 3 G4 योगो (for योगी) V1 योध्यो, Dn3 D1 3 5 7–9 याज्यो, T G2 4 M1–3 योग्यो, Linga P योगो (for योज्यो) B3 महावीर्यो, D10 °तेजा, T1 °बीजं (for °बीजो) — b) D3 om the second महा V1 B Dn D10 T1 M1–3 Linga P महाबल (for °तपा) — d) Dn3 D3 स्वबीजो, D10 सर्वज्ञो (for सुबीजो) Dn1 n2 बीज (for वृष)

40 B1 M4 om 40 (cf v l 38) — a) D9 च निमिषो (for त्वनि°) — b) T2 3 G4 ह्युमापति (avoiding hiatus) — c) Dn3 स्वयज्येष्ठो (for °श्रेष्ठो) ❀ Cn स्वय अनागन्तुक श्रेष्ठत्व प्रशस्ततमत्व यस्य । ❀ — d) B5 बलधीरो (for °वीरो) Cn [ऽ]वलो गण, Linga P बलाग्रणी (for बलो गण) D1 2 4–9 बलिवैरोचनो गण, T1 बलवीर्योतुलो गुण, T2 3 G2 4 वर्धते रो(T3 °र्धितो रो, G2 र्धिष्माश्चो)चनो गण ❀ Cn बलवीरोबलो गण । अबल नि सामर्थ्य, चेतनप्रयुक्तिं विना चलनाक्षम । गण्यते संख्यायते इति गणस्तत्त्वसमूह पञ्चविंशतिजडतत्त्वात्मा । स्वयं तु षड्विंश । ❀

41 B1 M4 om 41abc (cf v l 38) D1 6 7 9 om 41–42 — b) V1 Dn D5 काम (for काम्य) — c) D1 परमो (for परम) D1 2 मन्त्र V1 B Dn D6 8 10 T1 M Linga P मंत्रविस्परमो मंत्र (D8 °त्र) — d) D1 2 G2 4 भावहरो, D8 °वरो, M1 2 पापहरो (for भावकरो)

42 D1 6 7 9 om 42 (cf v l 41) — a) D5 करो (for -धरो) D8 हत्वा (sic) (for धन्वी) — b) B2 partly damaged D1–8 T2 3 G2 4 प्रतापवान्, M4 कलाप° (for कपाल°) — c) V1 Dn3 मुशली, B3 4 5 मुषली (for अशनी) D8 खड्गी च (hypermetric) D1 3 5 T1 अशनी (D5 मुसली) च शतघ्नी च, T2 3 G2 4 अशनीश शतघ्नीश, M अशनि शतघ्नि (M4 °घ्नी) खड्गी च (hypermetric), Linga P शरी शतघ्नी खड्गी च — d) T1 M पट्टसी (for पट्टिशी) B3 चामरी (for चायुधी) D1 पट्टिसीरायुधो महान्, D2 8 पट्टिसी सायुधो म°, T2 3 G2 4 खड्गी चापायुधो म° — After 42, T1 reads 45a

43 T1 om 43a — a) D6 8 स्रुचहस्त, T2 3 G2 4 शिव° (for स्रुव) B1 D1 3 5 T2 3 G4 स्व (for सु) M Linga P अजश्च मृगरूपश्च — b) D6 om (hapl) तेजस् D9 G2 तेजकरो (for °स्करो) M4 तिथि, Linga P विधि (for निधि) — c) T2 3 G4 उष्णीषश्च (for °षी) D10 सुचक्रश्च, T1 सुवर्चश्च (for °क्त्रश्च) D8 उष्णीषश्च सुवर्णश्च — d) Dn3 उदयो (for °ग्रो) D8 विततस्, T1 विदि°, T2 3 G2 4 वितनुस्, M4 विरतस् (for विन°) D1 तदा (for तथा) D10 उदग्रावनतस्तथा

44 a) G2 दिव्यश्च (for दीर्घश्च) V1 करिकेशश्च, Dn3 हरिरेकश्च, D1–9 G2 4 °नेत्रश्च (for °केशश्च) D1–3

अजश्च मृगरूपश्च गन्धधारी कपर्द्यपि ।
ऊर्ध्वरेता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभस्तलः ॥ ४५
त्रिजटश्चीरवासाश्च रुद्रः सेनापतिर्विभुः ।
अहश्चरोऽथ नक्तं च तिग्ममन्युः सुवर्चसः ॥ ४६
गजहा दैत्यहा लोको लोकधाता गुणाकरः ।
सिंहशार्दूलरूपश्च आर्द्रचर्माम्बरावृतः ॥ ४७

कालयोगी महानादः सर्ववासश्चतुष्पथः ।
निशाचरः प्रेतचारी भूतचारी महेश्वरः ॥ ४८
बहुभूतो बहुधनः सर्वाधारोऽमितो गतिः ।
नृत्यप्रियो नित्यनर्तो नर्तकः सर्वलासकः ॥ ४९
घोरो महातपाः पाशो नित्यो गिरिचरो नभः ।
सहस्रहस्तो विजयो व्यवसायो ह्यनिन्दितः ॥ ५०

---

दीर्घश्चारुविनीता च — $^{b}$) G2 स्व, G4 स्व (for सु) ꣼ Cn कृष्ण -

कृषिर्भूवाचक शब्दो णश्च निर्वृतिवाचक ।
तयोरैक्य पर ब्रह्म कृष्ण इत्यभिधीयते ॥

इति श्रुतेरानन्दसन्मात्र इत्यर्थ । ब्रह्मोत्तरखण्डे वा गोपशिशु प्रति महादेवेन तवान्वमे सहमोऽह भविष्यामीति वरदानान्महादेवस्यैवावतार कृष्ण इत्यवगमात् । ꣼ — $^{c}$) Some MSS शृगाल, T1 damaged (for सृगाल) V1 B Dn D10 सिद्धार्था (for सर्वार्थो) — $^{d}$) D7 मुडी (for मुण्ड) V1 B Dn D10 T1 M Linga P मुड सर्वशुभ( B1 वें भय, M4 वें शुभ )कर

45 M om (hapl) 45$^{a}$–47$^{b}$ T1 reads 45$^{a}$ after 42 — $^{a}$) V1 B Dn D10 बहु (for मृग) Linga P सिंहशार्दूलरूपश्च (= 47$^{c}$) — T1 om (hapl) 45$^{b}$–47$^{b}$ — $^{b}$) D1–3 गधमाली, D4–9 चारी, Linga P कारी (for °धारी) D10 कपर्दिन (for र्द्यपि) G2 गडे चातीतयस्यपि (sic) — $^{c}$) T2 3 सुजालिंगी, G3 4 गजालिंगी (for ऊर्ध्वलिङ्ग) Linga P ऊर्ध्वरेतोर्ध्वलिंगी च — $^{d}$) Dn1 n2 D5 T2 3 G2 4 नभस्थल (for नभस्तल)

46 T1 M om 46 (cf v l 45) — $^{a}$) B2 damaged V1 Dn2 D9 त्रिजटीश्, Bom ed, Kumbh ed and Linga P त्रिजटी (for टश्) D4–9 चीरवासी च — $^{b}$) D3 प्रभु (for विभु) — After 46$^{ab}$, Dn8 reads 47$^{cd}$ and 48$^{c}$–49$^{b}$ for the first time, repeating them in their proper places — $^{c}$) T2 3 G2 4 च (for ऽथ) V1 B Dn D10 नक्तंचरस् (for ऽथ नक्त च) Linga P अहोरात्र च नक्त च

47 For the repetition in Dn3, cf v l 46 T1 M om 47$^{ab}$ (cf v l 45) — $^{a}$) Dn1 D9 जगहा (by metathesis) (for गजहा) V1 B Dn D10 G2 कालो, D1–9 चैव (for लोको) — $^{b}$) T2 3 G1 गणाधिप (for गुणाकर) — $^{c}$) Dn3 (both times) पिंड (for सिंह) Linga P रूपाणाम् (for रूपश्च) — $^{d}$) Dn3 (first time) आर्द्रचर्मचरी नर, (second time) °धर्माबरावृत, D2 आर्द्रचर्मा चराचर, D4–9 आर्द्रचर्माबरोव-( D8 °ध )र, T1 आर्द्रश्चर्मवतां वर T2 3 G3 4 रुद्रश्च ( G2 रुरुच )र्माबरच्छद, M आर्द्रचर्मा वरांबर, M4 (inf lin) Linga P °मांबरोधर

48 For the repetition in Dn3, cf v l 46 T1 M om 48$^{ab}$ — $^{a}$) D10 कालो (for काल-) — $^{b}$) V1 B Dn D10 सर्वकामश्, D1–8 Linga P सर्वागासश्, D4–9 सर्ववासाश् (for °वासश्) G2 चतुष्पद — T2 3 G4 om 48$^{cd}$ — $^{c}$) Dn3 (first time) प्रेतधानी; D2 3 प्रेतचरो (for चारी) — $^{d}$) T1 G2 M भूतधारी, Linga P सर्वदर्शी (for भूतचारी) Dn3 (first time) भूतधानी महाश्वर·

49 For the repetition in Dn3, cf v l 46 G4 om 49–62 — $^{a}$) D1–9 T1 बहुरूपो, G2 °श्रुतो (for °भूतो) V1 Dn1 n2 बहुधर (for धन) Dn3 (second time) बहुभृतो बहुधर — $^{b}$) V1 B Dn (Dn3 second time) स्वर्भानुर् (for सर्वाधारो) Dn3 (first time) सितो, D1–6 मनो, T2 3 G2 [ऽ]मतो (for ऽमितो) T1 स्नातो ह्यार्यो मृति हवि (sic), M सर्वहायमृता हर, Linga P सर्वसारोमृतेश्वर — $^{c}$) B3 D1–6 8–10 नित्यप्रियो, B4 Dn3 भृत्य°, D2 3 T2 3 G2 M1 2 नृत्त° (for नृत्य) V1 B3–5 Linga P नित्य नृत्यो, B1 नृत्यनित्यो, B2 Dn3 नृत्यवृत्तो, Dn1 नृत्यवर्तो, D1 नृत्यतृप्तो D2 3 नृत्ततुष्टो, D4–6 8 10 नित्यतृप्तो, D7 9 नृत्यहृष्टो, T1 नृत्यनर्तो, T2 3 G2 M नित्यनृत्तो (for °नर्तो) — $^{d}$) Dn3 D4–9 नृत्यक, T1 M2 नर्तन (for °क) B1 2 नाशक, Dn1 n2 D3 10 लालस°, Dn3 नासक, Dn3 (marg) D1–6 -लास्यक, T1 नाशन, T2 3 -लालक (for -लासक) M1 3 4 Linga P नर्तन सर्वसाधक — After 49, Linga P ins

156* सकार्मुको महाबाहुर्महाघोरो महातपा ।

50 G1 om 50 (cf v l 49) — $^{a}$) Dn3 योगे,

अमर्षणो मर्षणात्मा यज्ञहा कामनाशनः ।
दक्षयज्ञापहारी च सुसहो मध्यमस्तथा ॥ ५१
तेजोपहारी बलहा मुदितोऽर्थो जितो वरः ।
गम्भीरघोषो गम्भीरो गम्भीरबलवाहनः ॥ ५२
न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः ।
तीक्ष्णतापश्च हर्यश्वः सहायः कर्मकालवित् ॥ ५३

विष्णुप्रसादितो यज्ञः समुद्रो वडवामुखः ।
हुताशनसहायश्च प्रशान्तात्मा हुताशनः ॥ ५४
उग्रतेजा महातेजा जयो विजयकालवित् ।
ज्योतिषामयनं सिद्धिः संधिर्विग्रह एव च ॥ ५५
शिखी दण्डी जटी ज्वाली मूर्तिजो मूर्धगो बली ।
वैणवी पणवी ताली कालः कालकटंकटः ॥ ५६

---

D4 5 8 9 घोषो (for घोरो) T2 3 G2 महायशा (for °तपा) D1 पाशी, D2 3 5–9 ईशो (for पाशो) Linga P महाशरो महापाशो — b) D1 नित्य V1 B Dn गिरिरुहो, D10 °गुहो (for °चरो) T2 नग, T3 [s]नघ, Linga P मत (for नभ) G2 निशयो निचरो नभ — c) D2 विजयी — d) Bom ed and Kumbh ed [अ]तोद्रित, Cnp [अ]निन्दित (as in text) D1 व्यवसायी ह्यनिंदक

51 G4 om 51 (cf v l 49) T1 om 51a–53b — a) D8 मर्षणश्च (for मर्षणात्मा) V1 B Dn M1–3 अधर्षणो धर्षणात्मा — b) V1 Dn D10 -नाशक (for °न) T2 3 यज्ञभागामनाशक (T3 °न) (sic), G2 यज्ञभागमनाशय — c) V1 B1 2 4 5 Dn M दक्षया-(M °भा)गापहारी च, Linga P दक्षया परिचारी च — d) Dn1 सुमहो, D1–3 सुवर्णो, D4–9 सुखदो, M असह्यो (M4 °ह्यो), Linga P प्रसहो (for सु°) D4 G2 मध्यगस् (for °मस्)

52 G4 om 52 (cf v l 49) T1 om 52 (cf v l 51) — a) T3 G2 तेजोहारी च (for °पहारी) D1–7 9 बलिहा, D8 बळहा, M Linga P बलवान् (for °हा) — b) B1 मुदितात्मोर्जितोवर, D1 10 °तोर्थोजितोद्भव, D2–9 °तोथा(D2 3 °थो)र्जितो भव, T2 3 G2 °तोर्था(G2 °र्थे)जितावह, M मु(M4 उ)-दितोभ्युदितोवह, Linga P विदितोभ्युदितो बहु — After 52ab, Linga P ins

157* गम्भीरघोषो योगात्मा यज्ञहा कामनाशन ।

— c) Dn3 D7–9 घोषी, Linga P रोषो (for घोषो) D4 गभीर, D9 om (hapl) (for गम्भीरो) — d) D6 गभीर, T2 3 श्वेतश्च (for गम्भीर) G2 श्वेतश्च गिरिवाहन — After 52, B5 ins 158*

53 G4 om 53 (cf v l 49) T1 om 53ab (cf v l 51) B5 om 53ab — a) D1 न्यग्रोधी (for °धो) — b) D2 वृष (for वृक्ष) V1 पत्रस्थितिर्, B2 (marg) Cnp कटास्थितिर्, B3 D1 10 -कर्णस्थिमिर्, B4 Dn8 पर्णस्थितिर्, D4–9 -कर्णस्थिवृद्, T2 G2 °स्तुतिर्, T3 कठस्तुतिर् (for -कर्णास्थितिर्) M1–3 वृषगस्थिनयन गत (hypermetric), M4 वृक्षगस्थिनय गत, Linga P विश्वकर्मा च विश्वभुक् — V1 B1–4 Dn D5 8 10 ins. after 53ab B5 after 52

158* सुतीक्ष्णदशनश्चैव महाकायो महानन ।
विष्वक्सेनो हरिर्यज्ञ सयुगापीडवाहन ।

[(L 1) B4 D8 महाबल°, D5 °वन (for °नन) — (L 2) Dn3 D5 8 10 हविर् (for हरिर्) B1 सयुगापीनवाहन, B3 सयज्ञोपीत°, Dn1 सयुग्मापीड° (for the post half) ]

— D5 reads 53cd twice — c) B1 3 5 तीक्ष्णचापश्च, B4 °वीर्यश्च, D1 °बाहुश्च, D2 3 °हासश्च, D5 (first time) तीर्णतापश्च, Linga P तीक्ष्णोपायश्च (for तीक्ष्णतापश्च) B1 हर्यक्ष, D2 हर्षश्च (for हर्यश्व) D4 5 (second time) 6–9 तीक्ष्णबाहुश्च हर्षश्च, T1 M तीक्ष्णोपायो वरेण्यश्च, T2 3 G2 दीक्षावाहनहर्यश्च — d) M1 सहायं D5 (second time) 7 10 सर्वकालवित्, T2 3 G कालधर्म (for कर्मकाल°) D2 3 सहास कालकर्मवित्

54 G4 om 54 (cf v l 49) — a) B4 5 D1–4 Linga P विष्णु (for विष्णु) V1 विष्णु (for यज्ञ°) — b) T1 सामुद्रो — After 54ab, V1 reads from विमोचन (in 58a) up to बलचारी (in 58c) for the first time, repeating the portion in its proper place — c) D2 3 हुताशन (for °शन) G2 -सहस्रश्च (for सहायश्च)

55 G4 om 55 (cf v l 49) — b) B2 damaged Dn1 n3 जन्यो, M1–3 नयो (for जयो) D6–9 -कालजित् (for °वित्) T1 श्रेयो विनयकालवित्, M4 महा तेजा जयोजय — c) D1 2 M अयन (for °न) G2 सधि (for सिद्धि) — d) V1 B2–5 Dn1 n2 मत्रं, B1 D4 7 T मधि (for सधिर्)

56 G4 om 56 (cf v l 49) — a) Dn1 n3 Cn शिखी मुडी, T1 खड्गी दडी, M खड्गी दडी, Linga P खड्गी शम्भी (for शिखी दण्डी) D5 om जटी

नक्षत्रविग्रहविधिर्गुणवृद्धिर्लयोऽगमः ।
प्रजापतिर्दिशाबाहुर्विभागः सर्वतोमुखः ॥ ५७
विमोचनः सुरगणो हिरण्यकवचोद्भवः ।
मेढ्रजो बलचारी च महाचारी स्तुतस्तथा ॥ ५८
सर्वतूर्यनिनादी च सर्ववाद्यपरिग्रहः ।
व्यालरूपो विलावासी हेममाली तरंगवित् ॥ ५९
त्रिदशस्त्रिकालधृक्कर्म सर्वबन्धविमोचनः ।
बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ॥ ६०
सांख्यप्रसादो दुर्वासाः सर्वसाधुनिषेवितः ।
प्रस्कन्दनो विभागश्च अतुल्यो यज्ञभागवित् ॥ ६१

---

D4 काली, G3 बालो (for ज्वाली) — b) D1-8 दुर्धलो, D4 6-9 T2 3 दुर्धरो, D10 धूर्व्वगो (for मूर्धगो) Cnp वली (for बली) V1 Dn3 मूर्तिगो धूर्धगो बली, B1 मृत्तिजो धूर्धकी बली, D5 मूर्तिज्यो दुर्धरो बली, T1 वर्तनोत्थु*तो बली, M मूर्ध( M4 °र्ति ) जोत्युद्धतो बली, Linga P खचरो धुचरो बली ❀ Cn बलीति पाठे बलिमान् वृद्ध । ❀ — c) T1 corrupt S ताळी, Linga P काल (for ताली) M4 (inf lin as in text) वीणी पणवी ताळी च — d) V1 B Dn1 n2 D10 खली, Dn3 स्वना (sic) (for काल°) T2 काल, Cnp शाल (for काल) T1 M बली सालकटकट, Linga P कालकठ कटकट ❀ Cn शालेति पाठे वृक्षा णामावरको वायुस्तस्याप्यावरको व्योमरूपी । ❀

57 G4 om 57 (cf v l 49) — a) V1 B2 4 5 Dn1 n2 मतिर्, B1 3 Dn3 D10 गतिर्, Cnp गम (for विधिर्) T2 3 नक्षत्रविग्रहावीर्यिर्, Linga P °विग्रहो भावो — Linga P om 57bc — b) B2-5 Dn1 n2 D8 3 10 T2 3 बुद्धिर्, D1 3 5 वृद्धि (for -वृद्धिर्) V1 B1 2 Cnp लयो यम, B5 लयोपम, Dn3 नयोनय (for लयोऽगम) T1 गुणवान्विलयोगम, G3 गणवृद्धिर्लयोलय — c) G2 प्रजोत्पत्तिर् (for प्रजा पतिर्) V1 B Dn D5 10 विश्व, D1 4 6-9 दिशा (for दिशा) — d) D10 विवाह, G2 विभास, M1 4 °व; Linga P निभाव (for विभाग) Dn1 n3 Cn सर्वगो (for सर्वतो) ❀ Cn सर्वंग समष्टिकार्य रूप°, अत एव अमुख भोगसाधनहीन । ❀

58 G4 om 58 (cf v l 49) — a) V1 reads from विमोचन up to बलचारी (in 58c) for the first time after 54ab B1 D1-8 विरोचन, D1-9 वैरोचन (for विमो°) V1 (both times) B5 Dn1 n2 D10 Cn सुसरणो, B1-4 Dn3 T1 M Cnp सुशरणो, Linga P तु शरणो (for सुरगणो) — b) V1 (both times) B1 हिरण्यकपचोत्तर; T1 °वचनोद्भव — G2 om 58cd — c) T2 मेघजो (for मेढ्रजो) B1 5 जल चारी, B1 Dn3 वन°, D2 3 बाल (for बल) D1-9 अप्रजो बालचारी च, T1 मेखलाजिनचारी च; M मेघणो विश्वरूपश्च, Linga P मेखलाकृतिरूपश्च — d) V1 B1 3 5 D10 महीचारी, B2 T2 3 महीचार°, B4 महाधारी, D5 महामारी, M जलचार°, Linga P जलाचार (for महाचारी) Dn म( Dn1 ग्र )हीचारी स्तुतस्तथा, D4 8 9 महाचारी( D4 °मारी )सुतस्तथा, D6 7 महामारी ( D7 ब्रह्मचारी ) स्तुतस्तथा, T1 महीचार सुत सदा — After 58, Linga P ins

159* वीणी च पणवी ताली नाली कटिकटुस्तथा ।
[ Cf 56cd ]

59 G4 om 59 (cf v l 49) — ab) D2 3 -भूत (for -तूर्य) D7 om दी च सर्ववा B5 -विलासी (for निनादी) G2 सर्वतूर्यानुनादीश° (for 59a) V1 B2-5 D5 10 सर्वतोद्य, B1 Dn T3 सर्वातोद्य, T1 सर्वतूर्य; T3 G2 विद्या-, M4 Linga P व्याप्य- (for °वाद्य) — c) D1 2 Linga P व्या( D1 बा )लरूपी, D8 बाल-रूपो, T2 G2 M व्याळ° (for व्याल°) V1 B Dn D10 गुहावासी, G2 [s]खिला° (for बिला°) — d) V1 B3 Dn T3 गुहो माली, M1 गुहावाली, M2 3 गुहापाली, Linga P गुहावासी (for हेममाली) D1-8 10 हंसमाली सुरगवित्, T1 M4 गुहावा( M4 inf lin °पा )लस्तरगवि( T1 °भि )त्

60 G4 om 60 (cf v l 49) — a) Hyper-metric D1-8 त्रिपदस्त्रिमलाधिच, D1-9 त्रिदशस्त्रिदशा वास, D10 विशक कालस्त्रिकर्म, T1 दशास्त्रिमूलधृक्कर्मा, T2 G2 त्रिदशास्त्रिदशाक्षश्च; M दशास्त्रिमालधृक्कर्ता, Linga P वृक्ष श्रीमालकर्मा च — b) T2 G2 ममतावधमोचक (G2 °न) — T1 om 60cd — c) D2 3 च (for तु) Linga P सुरेंद्राणां (for [अ]सु°) — d) D1 युधि शक्र-, T2 युधि क्षीर, G2 युधिष्ठिर (for युधि शत्रु)

61 G4 om 61 (cf v l 49) — a) D1 संख्या, D4 मोक्ष-, M4 सख्य- (for सांख्य) M4 (sup lin) -प्रवासो (for प्रसादो) D8 सांख्ये प्रसादो निर्वासा, Linga P सखा प्रयासो दुर्वाप° ❀ Cn सांख्यप्रसाद आत्मानात्मविवेक सांख्यम्, तेनैव प्रसीदति । ज्ञानैकलभ्य इत्यर्थ । अथ वा, सांख्यज्ञानप्रदो दत्तात्रेय इत्यर्थ । ❀ — b) B3 om सर्व and नि — c) B2 damaged from प्रस्कन्दनो up to हेमकरो (in 62a) D1

सर्वावासः सर्वचारी दुर्वासा वासवोऽमरः ।
हैमो हैमकरो यज्ञः सर्वधारी धरोत्तमः ॥ ६२
लोहिताक्षो महाक्षश्च विजयाक्षो विशारदः ।
संग्रहो निग्रहः कर्ता सर्पचीरनिवासनः ॥ ६३
मुख्योऽमुख्यश्च देहश्च देहर्द्धिः सर्वकामदः ।
सर्वकालप्रसादश्च सुबलो बलरूपधृक् ॥ ६४
आकाशनिधिरूपश्च निपाती उरगः खगः ।
रौद्ररूपोंऽशुरादित्यो वसुरश्मिः सुवर्चसी ॥ ६५
वसुवेगो महावेगो मनोवेगो निशाचरः ।
सर्वावासी श्रियावासी उपदेशकरो हरः ॥ ६६

---

प्रस्कंधनो, D2 °दन V1 B1.4 विभावश्गो, B3 5 Dn T3 °गज्ञो, T2 G2 विशाखश्च ( for विभागश्च ) — d ) Dn3 ह्यतुल्यो, D1 [अ]प्यतुल्यो, T1 M अतुलो ( for °ल्यो ) —For 61cd, Linga P subst

160* प्रस्कन्दोऽप्यविभावश्च तुल्यो यज्ञविभागवित् ।

62 G4 om 62 ( cf. v l 49 ) B2 damaged up to हेमकरो ( in 62a ) — a ) V1 B1 3 5 Dn1 n2 D2 10 M1 3 सर्ववास T1 सर्वचरो ( for °चारी ) D4–9 सर्व चारी सर्ववासो — b ) T1 M4 सुवासा ( for दुर्वासा ) Linga P मत ( for ऽमर ) D1 3 7 T3 G2 दुर्वासा वासवोपम, D4–6 °सा वाख्ययो भव, D8 9 °सा वाग्भवो यम — c ) B5 Dn1 n2 D10 T3 Linga P हैमो ( for हेमो ) T1 यज्ञकरो, M4 हैम° ( for हेम° ) D1–3 [ऽ]ज्ञेय ( for यज्ञ ) T2 M1–3 होमो होमकरो यज्ञ — d ) D1 3 T1 सर्वाधारी, D7 सर्ववीरो ( for °धारी ) B5 वरोत्तम, D2 3 धनो°, T1 हरो° ( for धरो° ) D4–6 8 9 सर्ववीरो नरोत्तम — After 62, T1 ins 162*

63 G4 om. 63 ( cf v l 49 ) M om 63–64 T1 reads 63 after 71 — a ) D5 लोहिताख्यो, T2 3 G2 रोहिताक्षो ( for लोहि° ) — b ) D4 6 ( also in the text ) 9 विजयाख्यो, T1 विरूपाक्षो ( for विजयाक्षो ) — c ) D1–9 G2 सं( G2 सु )ग्रहो वि( D1 °होनु )ग्रह कर्म, T1 °हो विग्रह कूर्मो — d ) B1 3 D2 3 7–9 G2 सर्पचर्म, D1 मृगचर्म, D4 6 सदासर्प, D5 सर्वधर्म ( for सर्पचीर- ) Dn2 T2 3 G2 निवासिन ( T2 °त ) ( for °सन ) T1 देहादिर्देहधारण

64 G4 om 64 ( cf v l 49 ) M om 64 ( cf v l 63 ) T1 om 64a–65b — a ) Dn1 D2 मुख्वो ( for मुख्यो ) D1–3 मुकुंदो, D4–7 9 मुक्तश्च ( for ऽमुख्यश्च ) T2 3 G2 मुक्तश्च मुक्तदेह( G2 °काम )श्च — b ) V1 B Dn D10 काद्दलि, T2 3 G2 देहारि ( for देहर्द्धि ) B1 कामल ( for °द ) — c ) B1 T2 3 G2 काम ( for -काल ) — d ) D1 3 वहु ( for बल- ) D4–6 सयलो रूपद्दनस्वधृक्, D7 9 सवलो वलरूपकृत्, D8 सूवलो वलरूपदृक्, T2 3 G2 सुवालो वालरूप° — After 64, V1 B Dn D8 10 ins

161* सर्वकामवरश्चैव सर्वदा सर्वतोमुख ।

[ V1 B1 2 D8 -कामचरश्, B3 4 Dn3 °भरश् ( for °वरश् ) Dn1 n2 सर्वद ( for °दा ) ]

65 T1 om 65ab ( cf v l 64 ) — a ) V1 B Dn T2 3 G2 4 -निर्विरूपश्, D1 -निधिशायी ( for रूपश् ) M Linga P आकाशो निर्विरूपश्च — b ) D2 3 निपात, D4–9 निखा( D5 षा )दी, Linga P विवासा ( for निपाती ) V1 B Dn3 D10 ह्युरग, Dn1 n2 ह्यवश ( for उरग ) — M Linga P ins after 65ab T1 after 62

162* भिक्षुश्च भिक्षुरूपश्च रौद्ररूपोऽङ्गिरा खग ।

[ The prior half = 69c T1 आकाशो ( for भिक्षुश्च ) Linga P रूपी ( for -रूपश् ) Linga P सुरूपवान् ( for ऽङ्गिरा खग ) T1 रौद्ररूपचरोंगिरा ( for the post half ) ]

— For the substitution in T1 M Linga P, cf 66 — c ) D1 T3 G2 4 रूपांशुर् ( for रूपोंऽशुर् ) B3 रौद्ररूपी शवादित्यो, B4 रुद्ररूपोसुरादित्यो, D6–9 रौद्ररूपी पाशुरादिर् — d ) V1 B2–5 Dn D5 10 बहुरश्मि, B1 बहुरूप, D1–3 6–9 वसुरग्नि ( for °रश्मि ) B4 D10 T2 3 G2 4 सुवर्चस ( for °र्चसी )

66 a ) B1–4 वायुवेगो, D10 T2 3 G2 4 बहुवेगो ( for वसु ) D8 महादेवो ( for वेगो ) — b ) D1–9 महायज्ञो निशाकर — For 65c–66b, T1 M Linga P subst

163* वसुरश्मि सुवर्चस्वी वसुवेगो महाबल ।
मनोवेगो निशाचार सर्वलोकसुखप्रद ।

[ ( L 1 ) Linga P वसुरेता ( for °रश्मि ) T1 om the post halves of lines 1 and 2 ]

— D5 om 66c–68b — c ) B1 3 6 Dn1 n2 ( before corr as in text ) D10 T2 G2 4 M4 सर्वयामी ( G2 4 °म ) ( for सर्वावासी ) T1 सर्ववास, T3 प्रियावासी, Linga P त्रयी ( for श्रिया° ) D1–3 सर्वावास श्रियावासो, D4–5 सर्वभाव प्रियावास — d )

मुनिरात्मपतिर्लोके संभोज्यश्च सहस्रदः ।
पक्षी च पक्षिरूपी च अतिदीप्तो विशां पतिः ॥ ६७
उन्मादो मदनाकारो अर्थार्थकररोमशः ।
वामदेवश्च वामश्च प्राग्दक्षिण्यश्च वामनः ॥ ६८
सिद्धयोगापहारी च सिद्धः सर्वार्थसाधकः ।
भिक्षुश्च भिक्षुरूपश्च विषाणी मृदुरव्ययः ॥ ६९

महासेनो विशाखश्च षष्टिभागो गवां पतिः ।
वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च ॥ ७०
ऋतुर्ऋतुकरः कालो मधुर्मधुकरोऽचलः ।
वानस्पत्यो वाजसेनो नित्यमाश्रमपूजितः ॥ ७१
ब्रह्मचारी लोकचारी सर्वचारी सुचारवित् ।
ईशान ईश्वरः कालो निशाचारी पिनाकधृक् ॥ ७२

---

V1 B2 4 Dn D10 G4 [ऽ]कर, Linga P धर (for हर) D1-8 छ(D1 [ऽ]ध्य)पदेशहरो हर, T1 M1-8 स्वर्ग(T1 सर्व)लोकसुखप्रद, M4 सूपदेशकरोकर

67 D9 om 67 (cf v l 66) T1 om. 67 —[a]) D4 मनुरात्म, D7 मुनिरात्मा (for °रात्म) V1 B2 8 5 Dn D8 निरालोक, T2 8 G2 4 -मतिर्लोक, M मुनिर्लोक (for पतिर्लोके) B1 4 D10 मुनिरात्मा निरालोक, D5 6 8 मनुरात्मपतेर्लोक, Linga P मुनिरात्मा मुनिर्लोक —[b]) V1 B Dn D10 संभग्नश् (for समाज्यश्) D1 3 4 सहस्रश, T2 8 G2 4 स्रभुक् (for स्रद) M Linga P सहाय(Linga P मान्य)श्च सहस्रभुक् —[c]) V1 B5 Dn Linga P पक्षरूपश्, B1-8 D10 पक्षिरूपश्, B4 पक्षिदीप्तश्, D2 4 7 पक्षरूपी (for पक्षि) M पक्षिहा पक्षिरूपश्च —[d]) D1 ह्यति (for अति) D5 दिशा पति, Linga P निशाकर (for विशां पति)

68 D9 om 68[ab] (cf v l 66) —[a]) T2 8 G2 4 उन्माद (for दो) V1 B Dn D10 M4 उन्मादो मदन कामो (M4 रो), T1 M1-8 उन्मादनोतिदीप्त(T1 पीन) श्च —[b]) D1 युक्तार्थ, D8 ह्यपार्थ (for अर्थार्थ) V1 B Dn D10 ह्य(Dn3 अ)नर्थोर्थकरो यश, D4-8 अर्थानर्थकरो नर, T1 M नर्थकर सम —[c]) T1 प्रदाक्षिण्यो वामदेव —T1 om 68[d]-69[a] —[d]) V1 B2 8 5 Dn D2 4 5 T2 8 G2 4 प्राग्दक्षिणश्, D6 9 प्राग्दाक्षिण्यश्, M प्रदाक्षिण्यश् (for प्राग्द) B4 प्राग्दक्षिणश्च वासव — For 68, Linga P subst

164* समीरो दमनाकारो ह्यर्थो ह्यर्थकरो वश ।
वासुदेवश्च देवश्च वामदेवश्च वामन ।

69 T1 om 69[a] (cf. v l 68) —[a]) Linga P सिद्धि (for सिद्ध) V1 B Dn D10 सिद्धयोगी महर्षिश्च, T2 8 G2 4 M °योगापचा(G4 M °गोपहा)री च —[b]) T1 M सिद्धि (for सिद्ध) D5 7-9 सिद्धार्थ (for सर्वार्थ) D4 6 -सिद्धिद (for साधक) V1 B Dn D10 सिद्धार्थ सिद्ध(B3 °द्धि)साधक —T1 om 69[cd] —[c]) B4 भिक्षु कश् (hypermetric) (for भिक्षुश्) D1-9 T2 8 G2 4 रूपी (for रूपश्) Linga P क्षुण्ण क्षुण्णरूपश्च —[d]) V1 B2 (marg) 4 Dn D8 विपणो (D8 °णी), B1 पाषाणो, B2 8 D10 धिषणो, B5 विषाणो, M Linga P वृषणो (for विषाणी) D4-9 M4 मृत्युर् (for मृदुर्) T2 8 G2 4 नृ(T2 कृ)पाणी नृ(G2 4 °णिर्नृ)परोऽव्यय

70 [a]) D4 6 8 विषाणश् (for विशाखश्) —[b]) B4 वृष्टिभागो, D5 यष्टिनागो, D6 7 9 षष्टिर्भागो, T2 G4 °भोगो (for °भागो) D1-8 विशा (for गवा) G2 अपि (for पति) —[c]) M चन्द्र- (for वज्र) B2 Dn3 च विस्क(Dn3 स्त)भी, D1-9 प्रविष्टभी, G2 प्रविष्टमी (for च विष्कम्भी) T G4 शूलहस्तो वेदहस्तश्, Linga P चमहस्तस्तु विष्टभी —[d]) B4 वज्र, D6 वसु, T2 8 G4 चक्र, Linga P मूल (for चमू) G2 चमूरस्तन एव च (sic)

71 G2 om (hapl) 71[a]-77[b] T1 om 71[ab] —[a]) D1-8 ऋतुवृत्त, D5 ऋभुर्ऋतु (for ऋतुर्ऋतु-) T2 8 क्रम स्तेनो, M2 4 Linga P -कर स्तेनो (for -कर कालो) V1 B Dn Cnp ऋता(Dn1 n2 Cn वृत्ता)वृत्त करस्कालो, G4 ऋषिर्ऋतुक्रम स्तेनो, M1 8 ऋतुर्मधुकर स्तेनो —[b]) B5 D4-7 9 बल°, Dn3 [ऽ]चन, D8 बळ, T2 8 G4 M मन, Linga P वर (for ऽचल) B8 D1 मधुर्मधुकरोर्चन, Dn1 n2 D10 °कलोचन° —[c]) Dn3 T1 M2 8 Linga P वाजसनो, D1 3 4 6-9 वाजिसे-(D3 स)नो (for वाजसेनो) V1 B Dn1 n2 D7 10 T2 8 G4 वाच(B8 ज)स्पत्यो वाज(D7 °जि)सनो —[d]) D8 नित्यमाश्रम *** — After 71, T1 reads 63

72 G2 om 72 (of v l 71) T1 om 72 —[a]) B3 om the second चारी D4 6 लोकबन्धु (for चारी) —[b]) V1 B Dn D10 विचारविद्, M1-8 सुसा° (for सुचा°) —[d]) Dn1 पिनाकवान्, D1 7 9 T2 8 G4 Linga P ह्यनेकधृक्, D2 8 6 अनेकरक्, D8 ह्यनेकश, M अनेकधृक् (for पिनाक°) D5 निशाचारीश्वनेकधृक् — After 72, N Linga P ins

नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्धनः ।
भगस्याक्षिनिहन्ता च कालो ब्रह्मविदां वरः ॥ ७३
चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ।
लिङ्गाध्यक्षः सुराध्यक्षो लोकाध्यक्षो युगावहः ॥ ७४
बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः ।
इतिहासकरः कल्पो गौतमोऽथ जलेश्वरः ॥ ७५
दम्भो ह्यदम्भो वैदम्भो वश्यो वश्यकरः कविः ।
लोककर्ता पशुपतिर्महाकर्ता महौषधिः ॥ ७६
अक्षरं परमं ब्रह्म बलवाञ्शक्र एव च ।
नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यो मनोगतिः ॥ ७७
बहुप्रसादः स्वपनो दर्पणोऽथ त्वमित्रजित् ।
वेदकारः सूत्रकारो विद्वान्समरमर्दनः ॥ ७८

---

165* निमित्तस्थो निमित्त च नन्दिर्नन्दिकरो हरि ।
[ D1-4 6-9 निमित्तश् ( for °त ) D1-3 5-9 नदि ( for नन्दिर् ) B1 D1, 3 5-7 9 Linga P हर् , D2 रुद्र ( for हरि° ) ]

73 G2 om 73 ( cf v l 71 ) M om 73^a–74^b — ^a ) T2 3 G4 नदीश्वरी ( for °श्वरश् ) B3 [ऽ]थ, Linga P सु ( for च ) — ^b ) V1 D1-4 6-10 नदिनो ( for नन्दनो ) Dn1 D7 नद , T1 मन्त्रि , T2 3 G4 मंत्र- ( for नन्दि ) Linga P नदनो विषमर्दन — ^c ) V1 B Dn भगहारी, D4 भगाक्षिहा ( for भगस्याक्षि ) T G4 भगवानरिहता च , Linga P भगहारी नियता च — ^d ) V1 B Dn D10 T2 3 G4 Linga P कालो ब्रह्मा पि( B1 Dn1 G4 ब्रह्मपि , Linga P लोकपि )तामह , T1 लोकब्रह्मा पितामह

74 G2 om 74 ( cf v l. 71 ) M om 74^ab ( cf v l 73 ) D2 om 74^a–75^b — ^b ) D1 त्रिलोचन ( for तथैव च ) T G4 ऊर्ध्वलिंगो लयोलय — ^d ) V1 B Dn D10 T1 3 यो( V1 यु )गाध्यक्षो , Linga P काला° ( for लोका° ) T1 सुरावह , M4 युगापह ( for °वह )

75 G2 om 75 ( cf v l 71 ) D2 om 75^ab ( cf v l 74 ) — ^b ) B1 युगात्मानु- ( for अध्या° ) D7 -गणो ( for -गतो ) D8 [ऽ]चर , D7-9 [ऽ]चल ( D8 °ळ ), T2 3 G4 [ऽ]मल ( for बल ) D1 ह्यध्यात्मानुगतश्चर , T1 आत्माध्यात्मगतोमल — ^c ) T1 -कर कर्ता, T2 3 G4 M -कर्ता कलश्च ( hypermetric ) ( for -कर कल्पो ) V1 B Dn D10 Linga P इतिहास सक( Linga P °सश्च क )ल्पश्च — ^d ) D1 om ऽथ V1 B Dn D10 Cn निशाक( B5 °च )र , D1-9 जनेश्वर ( for जले° ) T G4 M Linga P तमोहा ( Linga P दमनो ) जगदीश्वर

76 G2 om 76 ( cf v l 71 ) — ^a ) D4 6-9 [ऽ]थ दभो ( for ह्यदम्भो ) T G4 दभो दंभकरो दभो, M1-3 दभो ह्यदभो वैदभो, Linga P दंभो दभकरो दाता — ^b ) D1-4 6-9 वश्या ( for वश्यो ) T2 वशाकर M कलि ( for कवि ) V1 B Dn D5 व( V1 वै )श्यो वशाकर कलि , D10 Linga P वशो वशकर कलि — ^d ) G4 लोकहर्ता ( for महाकर्ता ) V1 B2 Dn ह्यनौषध , B1 3-5 D10 ह्यनौषधि , D4-7 9 महौषधं ( D7 9 °ध ), T G4 M Linga P ह्य( M अ )धोक्षज ( for महौषधि )

77 G2 om 77^ab ( cf v l 71 ) — ^a ) B1 3 D1-3 प्राहुर् ( for ब्रह्म ) T1 अक्षर ब्रह्म परमो — ^b ) Dn1 n2 बलवत्, M1-3 ब्रह्मवान् ( for बल° ) B1 5 शुक्र, B2 शुक्र, B3 4 D4-10 M1 2 Linga P शुक्र ( for शक्र ) — After 77^ab, T2 3 G4 ins

166* वज्रहस्त प्रतिष्टम्भी चमूरु स्तेन एव च ।
[ Cf 70^cd ]

— ^c ) D1 विश्वात्मा, T2 G2 4 हृद्वात्मा ( for शुद्धात्मा ) — ^d ) D2 3 7 8 शुध्यमानो , D4-6 9 शुद्धमा( D5 °मौ ) नो, G2 युध्यमानो ( for शुद्धो मान्यो ) D4 om मनो V1 B Dn3 D10 गतागति , Dn1 n2 गतागत ( for मनोगति ) D1 शुद्धमानो महागति — For 77^cd, Linga P subst

167* नियो ह्यनीश शुद्धात्मा शुद्धो मानो गतिर्हवि ।

78 ^a ) V1 B ( except B3 ) Dn D2 10 सुस्वमो, D4 6-9 स्वमोथ, G2 स्तुवतो ( for स्वपनो ) T2 3 G4 बुद्धिप्रसादस्तपनो, M बहुप्रसादसपत्नो, Linga P प्रासादस्तु बलो दर्पो — ^b ) D1 3 5 शत्रु( D1 क्र )मित्रजित्, D2 [ऽ]थ हि शत्रु°, D6 7 9 M1 [ऽ]थ अ( M1 ह्य )मित्र , T G2 4 [ऽ]थाप्यमित्र , Linga P ह्रव्य ह्रव्य° ( for ऽथ त्वमित्र° ) — ^c ) T1 वेदाकर ( for वेदकार ) V1 B Dn मन्त्रकारो, D5 तत्र° ( for सूत्र ) — ^d ) B5 विद्वान्समवदर्शन D1-3 5 °नक परतप , D4 6-9 विद्वांश्चैव परतप , T G4 Linga P विद्वांश्च परमर्दन , G2 विद्वान् परम तप

79 ^a ) D1 T2 3 G2 4 नियादश्, D2-9 निनादी ( for निवासी ) — ^b ) D2 3 महाघोषो, T1 °घोर ( for °घोरो ) T2 3 G2 4 महामेघवशाकरो — ^c ) D1-3

महामेघनिवासी च महाघोरो वशीकरः ।
अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हविः ॥ ७९
वृषणः शंकरो नित्यो वर्चस्वी धूमकेतनः ।
नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः ॥ ८०
स्वस्तिदः स्वस्तिभावश्च भागी भागकरो लघुः ।
उत्सङ्गश्च महाङ्गश्च महागर्भः परो युवा ॥ ८१
कृष्णवर्णः सुवर्णश्च इन्द्रियः सर्वदेहिनाम् ।
महापादो महाहस्तो महाकायो महायशाः ॥ ८२
महामूर्धा महामात्रो महानेत्रो दिगालयः ।
महादन्तो महाकर्णो महामेढ्रो महाहनुः ॥ ८३
महानासो महाकम्बुर्महाग्रीवः श्मशानधृक् ।
महावक्षा महोरस्को अन्तरात्मा मृगालयः ॥ ८४
लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः ।
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ॥ ८५

अग्निज्वालो, T1 M अणुज्वालो (for अग्नि°) T2 3 G2 4 अग्निज्वाला महाज्वाला —$^{d}$) D3 8 स्तुतिर्धूमो (D2 °त्रो), D4-6 स्वतिधूमो (D6 7 °त्रो), D10 अतिधूमो, M4 ह्यतिधूत्रो (for अति°) B5 हुतिर् (for हुतो) D1 स्तुतो धूम्रो हुतं हवि, T1 ह्यादिधूमो हरो हवि, T2 3 G2 4 अतिधूमोद्भतायन, Linga P परिधूम्रावृतो रवि

80 $^{a}$) D5 विषादी, T1 M4 विषण्ण, M1-3 धिषण (for वृ) B2 3 Dn1 n2 D1 4-9 नित्यं T2 3 G2 4 वृषण शस्ननित्यश्च —$^{b}$) V1 Linga P धूम्रलोचन, V1 (marg) B2 3 M1-3 धूम्रकेतन —$^{c}$) D1-8 सर्वांग; T2 3 G2 4 लब्धश्च (for थाङ्ग) Linga P लुब्धश्च (for लुब्धश्च) D10 नील स्तब्धांगरुद्धश्च, T1 नीचस्तथाव लिसश्च —$^{d}$) V1 लोमनो, D1-8 तेजस्वी, D4 शोधनो (for शोभनो) D6 7 9 [s]रिवग्रह, Linga P नरवि (for निरव°)

81 For the sequence and the repetition in D6, of v l 83 —$^{a}$) D1 5 10 भागश्च, D2 3 भोगश्च (for भावश्च) D4 6-9 स्वस्तिद स्वस्तिमान्स्वस्ति, Linga P स्वस्ति स्वस्तिस्वभावश्च —$^{b}$) T1 भागहरो, M1 भावकरो (for भाग°) Linga P भोगी भोगकरो लघु — T1 om 81$^{cd}$ —$^{c}$) Some unused MSS उत्सांगश्च or उन्मार्गश्च (for उत्सङ्गश्च) —$^{d}$) T G पुरो युवा, M परायवान्, Linga P प्रतापवान् (for परो युवा) V1 B Dn महागर्भप(B8 र्भ प)रायण, D2 3 भागकरो युवा

82 For the sequence and the repetition in D6, of v l 83 —$^{a}$) D9 om सुवर्ण T1 महाभाग सवर्णश्च, M4 कृष्णपर्ण सुपर्णश्च —$^{b}$) V1 B Dn D3 4 6 (both times) 7-9 इन्द्रिय, D1 स्विंद्रिय D5 पाणिग, T1 पायक, T2 जीवन, T3 G2 4 प्राणद, M पालक, Linga P वार्णिक (for देहिनाम्) —$^{c}$) T1 महाहदो (for °पादो) —$^{d}$) T1 महाकवि, M °कटि (for °यशा)

83 $^{ab}$) D2 transp महामात्रो and महानेत्रो D1 महागात्रो, T1 M °वक्त्रो (for मात्रो) D4 om (hapl) महानेत्रो V1 B1-3 Dn D10 T2 निशालय°, B4 निशामय, B5 D4 6 (both times) 7-9 T1 महायक, D5 महालय, T3 G2 [s]निलाशय, G4 निशानिल, M नगालय (for दिगा°) Linga P महामिश्रो नगालय (for 83$^{b}$) —After 83$^{ab}$, the sequence in D6 is 82$^{c}$ (r), 81$^{d}$-82$^{b}$ (r), 82$^{c}$ (third time), 82$^{d}$-83$^{b}$ (r) —$^{c}$) V1 B1 4 Dn D10 महांतको, M महाटको, Linga P °स्कंधो (for °दन्तो) D8 om महा. D5 महामेढो, T1 महानासो (for महाकर्णो) B5 महाकर्णो महोष्ठश्च —$^{d}$) V1 B1-3 Dn M Linga P महोष्ठश्च; B4 महौघश्च, B5 महौजाश्च, D5 महाकर्णो, D10 G2 महेघुश्च, T2 3 G4 महादंष्ट्रो (for महामेढ्रो) D1 महातनु (for °हनु) T1 महाकंबुर्महानख

84 T1 om. 84$^{a}$-86$^{b}$ —$^{a}$) V1 B3 4 D2 महानाशो, B5 °वासो, D8 °सनो, D4 6-9 °नाथो (for °नासो) D1 Linga P महाकंठो, G2 °घस्र (for कम्बुर्) —$^{b}$) V1 B Dn D3 10 श्मशानभाक्; D1 °भृत्; D2 8 5 °धृत्; D9 स्मशानधृक्, T2 3 G2 4 पिनाक°, M Linga P श्मशानवान् —$^{c}$) V1 D4 6-9 T2 3 G1 3 4 महाव(D7 °क)क्षो, Cnp °रक्षो (for °वक्षा) B1.3 महारक्षो, D1-3 महौजस्कस् (for महोरस्को) D6 महावक्षो महौजाश्च, G2 °वृक्षो महाजवू, Linga P °बलो महातेजा, —$^{d}$) V1 B1 3 4 Dn D2 3 10 ह्यतरात्मा; D1 4 6-9 स्वत° (for अन्त°) B5 निरालय, T2 3 G2 4 स्नगा° (for मृगा°) —After 84, D4-7 9 G2 4 ins

168* महाकटिर्महाग्रीवो महाबाहुर्महाकर ।
[ G2 4 महार्भक° (for °कर) ]

85 T1 om 85 (cf v l 84) M1 om. 85-86 —$^{a}$) D1. 4-9 लंबितो (for लम्बनो) V1 B Dn3 D1. 2 लम्बितौष्ठश्च (for °तोष्ठश्च) Linga P लम्बितोष्ठश्च निष्ठश्च —$^{b}$) D4 7 9 बहुमाय (for महा°) V1 परो निधिः

महानखो महारोमा महाकेशो महाजटः ।
असपत्नः प्रसादश्च प्रत्ययो गिरिसाधनः ॥ ८६
स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः ।
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ॥ ८७
मण्डली मेरुधामा च देवदानवदर्पहा ।
अथर्वशीर्षः सामास्य ऋक्सहस्रामितेक्षणः ॥ ८८

यजुःपादभुजो गुह्यः प्रकाशो जङ्गमस्तथा ।
अमोघार्थः प्रसादश्च अभिगम्यः सुदर्शनः ॥ ८९
उपहारप्रियः शर्वः कनकः काञ्चनः स्थिरः ।
नाभिर्नन्दिकरो भाव्यः पुष्करस्थपतिः स्थिरः ॥ ९०
द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः ।
नक्तं कलिश्च कालश्च मकरः कालपूजितः ॥ ९१

---

( for पयोनिधि ) — For 85$^{ab}$, T2 3 G2 4 subst

169* लम्बमानो लम्बितोष्ठश्चलद्दामी यशोनिधि ।

— $^{cd}$ ) D1-9 महांगश्च ( for महादन्तो ) B5 transp महादंष्ट्रो and महाजिह्वो

86 T1 om 86$^{ab}$ ( cf v l 84 ) M1 om 86 ( cf. v l 85 ) — $^{a}$ ) V1 B2 4 5 Dn प्रसन्नश्च, B1 3 D4 6-10 अ( B1 सु )प्रसन्न , T2 3 G2 4 असपन्न ( for असपत्न ) — $^{d}$ ) D4 9 प्रत्यग्रो ( for °यो ) V1 B1 3 5 Dn3 गौरिसाधन , B4 गौरिमाधव , Linga P गीत साधक ( for गिरिसाधन ) T2 3 G3 4 Madras ed प्रौढयोनिरसाध( Madras ed °य )क

87 D2 om 87-88 — $^{a}$ ) B1 स्नेहोथ ( for स्नेहनो ) Dn3 [ऽ]स्नेहलश्च ( for °नश्च ) T2 3 G2 4 स्नेहकोस्नेहकश्चैव, Linga P प्रस्वेदनोस्वेदनश्च — B5 om 87$^{b}$ — $^{b}$ ) D1 3-9 अ( D1 द्य )जितोथ, T2 3 G3 4 अती तोपि, M अदितिश्च, Linga P आदिकश्च ( for अजितश्च ) — $^{c}$ ) V1 B1 3 4 Dn3 D10 T1 वृक्षकारो ( for वृक्षा° ) D1 3 महाकेतुर् ( for वृक्ष° ) D1-9 वृक्षका ( D5 °क्षाक )रो महाकेतुर्, M Linga P वृषको वृषकेतुश्च, some unused MSS ब्रह्मकारो ब्रह्मकेतुर् — $^{d}$ ) B3 partly damaged D10 अचलो, T1 G2 अनिलो, M अनयो ( for °लो ) B4 om ( hapl ) वायु

88 D3 om 88 ( cf v l 87 ) — $^{a}$ ) Linga P मेरुवासश्च ( for °धामा ) — $^{b}$ ) V1 B Dn D10 देवाधिपतिरेव च, T1 M Linga P देववाहन ए( T1 °नमे )व च — $^{c}$ ) D1 4 6-9 अथर्वशीर्षा D7 T1 सामान्यो ( for °स्य ) — $^{d}$ ) D4 6-8 ऋक्सहस्रासितेक्षण , D5 ऋग्यजुःसामवेक्षण , T1 Linga P ऋक्सहस्रोमि( Linga P °र्जि )तेक्षण , T2 3 G2 4 °स्राक्षि( G2 °क्षि )तेक्षण

89 $^{a}$ ) B3 अजर पाद ( hypermetric ), B5 चतुष्पाद-, T G4 यजुर्वेद ( for यजु पाद ) D1-9 यजु साममयो गुह्य — $^{b}$ ) T2 3 G4 [ऽ]प्रकाशो T1 M प्रकाशौजा विभावसु , Linga P प्रकाशौजास्तथैव च — $^{c}$ ) V1 अमोघास्म , D3 4 6-9 T2 3 G3 4 Linga P °घार्य ( for °घार्थ ) T1 अमोघश्च प्रमादश्च, M °घार्थप्रवादश्च — $^{d}$ ) D1 स्वभिगम्य , D2 अनि° , G4 अरि° , Linga P अतर्भाव्य ( for अभिगम्य )

90 $^{a}$ ) V1 B3 5 Dn उपकार , B3 4 D1-10 T2 3 G4 Linga P °हार- ( for °हार- ) T1 अपहार प्रिय प्राण — T1 om 90$^{b}$ — $^{b}$ ) V1 B1 Dn3 D1 3 5 10 काचनस्थिर , Dn1 °नच्छवि , Dn2 Linga P °नस्थित ; T2 3 G3 4 °नच्छद , M °नप्रभ ( for °न स्थिर ) B5 D4 6-9 जनक ( B5 काचन ) काचनस्थिर — D1 om 90$^{c}$-91$^{b}$ D10 om ( hapl ) 90$^{cd}$ T1 reads 90$^{c}$-109$^{d}$ after 130 — $^{c}$ ) D1-8 नदी नंदि- ( for नाभिर्नन्दि ) V1 B1 2 3 5 Dn भाव , Linga P हर्म्य ( for भाव्य ) D5-9 नदीनदकरो भाव्य , T1 M नाभि ( T1 विभु ) शंभुस्तथा हव्य , T2 3 G2 4 नदीनदीकरोतव्य — $^{d}$ ) B2 4 5 Dn3 D7 9 पुष्कर ( for °र ) Dn1 D5 M1 स्थपति ( for °ति ) V1 B1 Linga P पुष्कर स्थपति स्थिति ( V1 °र , Linga P °त ), B3 D5 T1 °र स्थपतिस्थिर , D1-8 पुष्करस्थ पतिस्थि( D2 °ति स्थि )र , D5 पुष्कर स्थावर स्थिर , T2 3 G3 4 पुष्परात पतिं( T2 °त )हित

91 For the sequence in T1, cf v l 90 D1 om 91$^{ab}$ ( cf v l 90 ) — $^{a}$ ) D6-10 डामरस ; M द्वापरस् ( for द्वादशस् ) B5 दस्वा शास्त्रशनश्चाद्यो ( sic ), D1-3 द्वापरश्चयनश्चाद्यो, D5 द्वादशाक्षो धनाशाद्यो, T G4 द्वापरश्च कलि कालो, G2 द्वापरस्थान संज्ञाद्यो ; Linga P सर्वशास्त्रो धनश्चाद्यो — $^{b}$ ) B3 यज्ञो यज्ञ , D1-3 5 घृणी धर्म-, D6-9 घृणी यज्ञ ( D1 °ज्ञ ), T2 3 G2 4 घृणी वज्र , Linga P यज्ञो यज्वा ( for यज्ञो यज्ञ ) — T G2 4 om 91$^{cd}$ — $^{c}$ ) D1-8 -चरश्च ( for कलिश्च ) Dn1 कामश्च ( for कालश्च ) B2 4 D10 M रक्तनी( M नक्त नी )ल कलि कालो, Linga P नगो नील कवि कालो — $^{d}$ ) B5 प्रपूजित ( hypermetric ) ( for पूजित )

92 For the sequence in T1, cf v l 90 — $^{a}$ ) D1 6-9 सुगणो ( for स° ) D10 गणकाक्षश्च ; T1

सगणो गणकारश्च भूतभावनसारथिः ।
भस्मशायी भस्मगोप्ता भस्मभूतस्तरुर्गणः ॥ ९२
अगणश्चैव लोपश्च महात्मा सर्वपूजितः ।
शङ्कुस्त्रिशङ्कुः संपन्नः शुचिर्भूतनिषेवितः ॥ ९३
आश्रमस्थः कपोतस्थो विश्वकर्मा पतिर्वरः ।
शाखो विशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चयः ॥ ९४
कपिलोऽकपिलः शूर आयुश्चैव परोऽपरः ।
गन्धर्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुसारथिः ॥ ९५
परश्वधायुधो देव अर्थकारी सुबान्धवः ।
तुम्बवीणी महाकोप ऊर्ध्वरेता जलेशयः ॥ ९६
उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः ।
सर्वाङ्गरूपो मायावी सुहृदो ह्यनिलोऽनलः ॥ ९७
बन्धनो बन्धकर्ता च सुबन्धनविमोचनः ।
स यज्ञारिः स कामारिर्महादंष्ट्रो महायुधः ॥ ९८

कार्यश् (for °कारश्) D1-3 5 सुगणो गणकार्यश्च, D7 सुगणो गुणकारश्च, T2 3 G2 4 अगुणो गुणकार्यश्च —$^{b}$) V1 B Dn -वाहन (for -भावन) M1-3 पूतवाहन सारथि —$^{c}$) V1 B2 Dn भस्मशयो (for °शायी) —$^{d}$) D1 3 5 भस्मरूपस् (for भूतस्) B3 भस्मसारो गुरुर्गण, B4 Linga P °भूतगुरु( Linga P तनु )र्गण, D4 6-9 रूपांगभूषण, T1 M °भू( M1 पू )तत( T1 घ ) नुर्गुण, T2 3 G2 4 रूपस्तटिद्गुण

93 For the sequence in T1, cf v 1 90 —$^{a}$) D4-9 G3 सु( D4 5 स्व )गुणश्, T1 M आगमश्, T2 3 G4 सगुणश् (for अगणश्) D1 3 (also as in text) [ए]क (for [ए]व) D2 T1 लोकश्, D3 रोमाश् (for लोपश्) V1 B Dn D10 लोकपालस्तथा लोको, Linga P आगमश्च विलोपश्च —$^{b}$) T1 विश्वात्मा (for महात्मा) T2 3 G2 4 मन्त्र (for सर्व) —$^{c}$) V1 B Dn D10 T1 शुक्रस्त्रिशुक्र सपन्न, M शुक्रस्त्रिशुक्रस, Linga P शुक्र श्रीरूपस —$^{d}$) T1 सर्वशुक्र- (for शुचिर्भूत) ❀ Cn मूले पूर्वाचार्यैर्निषेवित भूतनिषेवित । ❀

94 For the sequence in T1, cf. v 1 90 —$^{a}$) V1 B Dn D10 क्रियावस्थो, T2 3 G4 कपोलस्थो, G2 लक्ष (for तस्थो) —$^{b}$) B4 रतिर् (for पतिर्) T1 Linga P विराट् (for वर) V1 B1-3, 5 Dn D1 2 विश्वकर्मम( D1 2 प )तिर्वर —$^{c}$) D1, 2 7 9 ताम्रौष्ठस् (for ताम्रोष्ठो) V1 B Dn1 n3 D10 T1 M Linga P विशालशाख( D10 जानु )स्ताम्रोष्ठो ( B1 2 Dn3 म्रौष्ठो, M1-3 म्राक्षो ) —$^{d}$) V1 अबुजाल°, D1-3 स्वबु°, D4-9 सबु, T1 ह्यबुजात, T2 3 G2 4 तरुकाल (for ह्यम्बुजाल°) V1 B1 2 Dn D1 2 T2 G3 सुनिश्चल°, G4 Linga P श्रित (for श्चय)

95 For the sequence in T1, cf v 1 90 —$^{a}$) B3 शुक्र, G3 चैव (for शूर) V1 B1, 3 4 5 Dn D10 कपिल कपिश शुक्र ( Dn3 क ), T1 M Linga P °क कलश शूल ( Linga P स्थूल ) — T1 om 95$^{bc}$ —$^{b}$) D2 3 [अ]मरोवर, D4 6 7 9 T2 3 G4 परावर, M1-3 परोमर, M4 परो मम (for परोऽपर) D1 ह्यायुश्चैवापरोवर, G3 आयुधश्च परापर, Linga P धश्चैव रोमश —$^{c}$) B1 T2 3 [ऽ]दितिजस्, G2 ह्यतिथिस् (for ह्यदितिस्) —$^{d}$) D5 स्वविज्ञेय (for सु°) V1 B1-3 5 Dn M सुशारद, B4 सुरासद, T1 सुदर्शन (for सुसारथि) D3 स्वविज्ञेय स्वसारथि, T2 3 G2 4 [ऽ]भिज्ञेय सुरसारथि, Linga P ह्यविज्ञेय सुशारद

96 For the sequence in T1, cf v 1. 90 T2 3 G2 4 om 96$^{a}$-100$^{b}$ —$^{a}$) Some MSS परस्वधायुधो B3 धीरो, D2 3 धीरो (for देव) —$^{b}$) V1 B2-5 Dn3 T1 अघकारी, B1 आत्म°, Dn1 n2 अनु°, D1-3 5 ह्यर्थकार, D4 6-9 अर्थकार, D10 Linga P ह्यर्थकारी (for अर्थ) B3 स- (for सु) —$^{c}$) D1 4 6 7 9 तुंबवेणी, T1 तुरुवेणी, Linga P तुबवीणो (for °वीणी) V1 B Dn D3 10 तुंबवीणो ( B1 °बरीशो ) महाक्रोध —$^{d}$) B4 D4-6 M जलाशय (for जले°)

97 For the sequence in T1, of v 1. 90 T2 3 G2 4 om 97 (cf v 1 96) —$^{a}$) D2-4 9 T1 उग्र- (for उग्रो) B1 वशधरो (for करो) D1 वशी D5 उग्रहांतकरो वशो —$^{b}$) B1 5 T1 वशघादो ( T1 °घो ), D1 विलाघासी; D2 5 वश( D2 शा )वासो, D10 घशवाद्यो, M Linga P °वादी (for नादो) B5 om हि —$^{c}$) B4 रूपी (for रूपो) —$^{d}$) B3 partly damaged. V1 B3, 4 Dn3 D2 [अ]नलोनिल (by transp), D7 3 [अ]निलो( D3 °लो )निल, D7 °लोचन (sic), Linga P °लो बल D1 सुहृदप्यनलोनिल, D5 दो ह्यदिलोचन, D10 घो ह्यनलोनल°

98 For the sequence in T1, cf v 1 90 T2 3 G2 4 om 98 (cf v 1 96) D5 om (hapl) 98$^{ab}$ —$^{a}$) D10 मधु (for बन्ध) D1-4 6-9 बाधवो बधुकर्ता (D1-3 र्ता) च —$^{b}$) D1 स्व- (for सु-) D6 7 9

बाहुस्त्वनिन्दितः शर्वः शंकरः शंकरोऽधनः ।
अमरेशो महादेवो विश्वदेवः सुरारिहा ॥ ९९
अहिर्बुध्नो निर्ऋतिश्च चेकितानो हरिस्तथा ।
अजैकपाच्च कापाली त्रिशङ्कुरजितः शिवः ॥ १००
धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा ।
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ॥ १०१

प्रभावः सर्वगो वायुरर्यमा सविता रविः ।
उदग्रश्च विधाता च मान्धाता भूतभावनः ॥ १०२
रतितीर्थश्च वाग्मी च सर्वकामगुणावहः ।
पद्मगर्भो महागर्भश्चन्द्रवक्त्रो मनोरमः ॥ १०३
बलवांश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी ।
कुरुकर्ता कालरूपी कुरुभूतो महेश्वरः ॥ १०४

---

सुबंधुरविमोचन — $^c$) D4 6–9 भेषजारि (for स यज्ञारि) D4 6 सु- (for स) D5 स यक्ष्मारिश्च कामारिर्, T1 यज्ञारिरसुरारिश्च, Linga P राक्षसघ्नोथ कामारिर् — After $98^{abc}$, T1 ins

170* मायावी सर्वकामकृत् ।
महादयालुर्मन्तव्यो

— $^d$) D5 समोग्रध (sic), D7 T1 M [ऽ]समो युधि (for महायुध) D1 4 6 8 9 महादंष्ट्रसमो युधि

99 For the sequence in T1, cf. v l 90 T2 3 G2 4 om 99 (cf. v l 96) — $^a$) D4 6–9 [अ]निर्मित (for °न्दित) D2 8 शंभु (for शर्व) V1 B Dn D10 बहुधानिंदित शर्व (B2 8 शंभु) — $^b$) D4 om. (hapl) शंकरो D4 6–9 वर (for ऽधन) D1–3 5 शंकर शंबरोधर, T1 M Linga P °रोयाप्य(T1 °रो हय्य)कोपन — $^c$) M महामेघो; Linga P °घोरो (for °देवो) T1 आश्रमेशो महामेधा — $^d$) D1–3 5 विश्वरूप (D1 पी), T1 °मेध, M1 °देह (for °देव)

100 For the sequence in T1, cf v l 90 T2 3 G2 4 om $100^{ab}$ (cf v l 96) — $^a$) Linga P अहिर्बुध्न्यो D2 8 च निवृत्तिश्च (for निर्ऋतिश्च) V1 Dn D10 अहिर्बुध्न्यो (D10 °ध्नो) निलाभश्च, D1 4–9 निर्ऋतिश्चाहिर्बुध( D5 °ध्न्य )श्च, T1 M अहिर्बुध्न्योदि( T1 °ध्न्यो र )तिश्चैव — D4 6 om (hapl) $100^b$–$101^c$ — $^b$) V1 B Dn हविस्तथा, D8 तथैव च, Linga P हली तथा (for हरिस्तथा) — $^c$) M अज एकपाच् (hypermetric) (for अजैकपाच्) D2 3 7 9 T2 3 G2 4 कपाली च (for च कापाली) B4 अजैकपाद कापाली; T1 अजेकपादहिर्बुध्नस् — $^d$) T1 M त्रिशंकुरणिमा गिर (T1 गुरु), Linga P शकुमारो महागिरि

101 For the sequence in T1, cf v l. 90 D4 6 om $101^{abc}$ (cf v l 100) — $^a$) D10 धर्मकेतु (for धूम°) — $^b$) T1 M धन्यो, Linga P सूर्यो (for स्कन्दो) T2 3 G2 4 यम (for तथा) — $^c$) T1 M Linga P धाता विष्णुश्च शक्रश्च — $^d$) D1 वसुध्रुव; D2–9 ध्रुवो वसु, D10 ध्रुवोध्रुव, T1 नरो ध्रुव, Linga P धरो ध्रुव (by transp) T2 3 G2 4 मित्रस्त्वष्टा ध्रुवो धर (T2 G2 °वोध्रुव)

102 For the sequence in T1, cf v l 90 — $^a$) D3 8 प्रभव, D7 प्रधान, T1 M1.4 प्रभास (for प्रभाव) Linga P प्रभास पर्वतो वायुर् — $^b$) D1–3 अजित (for अर्यमा) — $^c$) V1 B1 3–5 उषद्गुश्च, B2 Dn1 n2 उषगुश्च, T1 विधूतिश्च, M वि( M4 स )धृतिश्च, Linga P धृतिश्चैव (for उदग्रश्च) ꕥ Cn उषगुर्नृप विशेष मान्धातृसाहचर्यात् । ꕥ

103 For the sequence in T1, cf v l 90 T1 om $103^{ab}$ — $^a$) D1–3 5 अतितीक्ष्णश्च, T2 3 G2 4 भयस्तीर्थ (for रतितीर्थश्च) D4 om, D5 सु (for the second च) V1 B1–3 5 Dn1 n2 विभुर्वर्णवि( V1 °र्णम, B3 °रतर, Dn1 °र्णावि )भावी च, B4 Dn3 विभुरर्णवचारी च, M Linga P ती( Linga P नी )रस्तीर्थश्च भीमश्च — $^b$) M सर्वकर्मगुणोवह, Linga P °कर्मा गुणोद्वह — $^c$) V1 B5 Dn पद्मनाभो (for °गर्भो) D1–7 9 10 T2 3 G2 4 पद्मवक्त्रो महावक्त्रश्च, D8 °चक्रो महाचक्रश्च — $^d$) T1 चंद्रगर्भो (for °वक्त्रो) V1 B Dn [ऽ]निलो नल, D10 [ऽ]तिलोचन, T2 3 G2 4 मनोनव, T1 M2 4 नभो घन, M1 नमोगत, Linga P नभोनघ (for मनोरम)

104 For the sequence in T1, cf v l 90 — $^a$) B3 D1–3 T2 3 G2 4 [ध्रु]व (for [उ]प) M1–3 -तापश्च (for -शान्तश्च) — $^b$) D5 प्राण- (for पुण्य) Dn3 -सवर, D1 2 -चतुर, T2 3 G2 4 सचरी; M Linga P कृत्तम (for -चञ्चुरी) D10 पुण्यवानथ चतुरी, T1 पुराणपुरुषोत्तम — T1 om $104^c$–$105^d$ — $^c$) D5 T2 3 G2 4 क्रूरकर्ता, D10 कुंभ° (for कुरु°) V1 B Dn D8 कुरुवासी, D4 कोलरूपी (for काल°) M Linga P क्रूरकर्ता क्रूरहारी (Linga P °वासी) — $^d$) D8 क्रूरभूतो, D10 पुरुहूतो, T2 3 G2 4 कुरुभूत (for °भूतो) V1 B1–3. 5 Dn गुणौषध, B4 गुणोपाधि (for महेश्वर) M क्रूरभूतो गुहौषध; Linga P तनुरात्मा महौषध

सर्वाशयो दर्भशायी सर्वेषां प्राणिनां पतिः ।
देवदेवमुखोऽसक्तः सदसत्सर्वरत्नवित् ॥ १०५
कैलासशिखरावासी हिमवद्गिरिसंश्रयः ।
कूलहारी कूलकर्ता बहुविद्यो बहुप्रदः ॥ १०६
वणिजो वर्धनो वृक्षो नकुलश्चन्दनश्छदः ।
सारग्रीवो महाजत्रुरलोलश्च महौषधः ॥ १०७
सिद्धार्थकारी सिद्धार्थश्छन्दोव्याकरणोत्तरः ।
सिंहनादः सिंहदंष्ट्रः सिंहगः सिंहवाहनः ॥ १०८
प्रभावात्मा जगत्कालस्तालो लोकहितस्तरुः ।
सारङ्गो नवचक्राङ्गः केतुमाली सभावनः ॥ १०९
भूतालयो भूतपतिरहोरात्रमनिन्दितः ।
वाहिता सर्वभूतानां निलयश्च विभुर्भवः ॥ ११०

---

105 $T_1$ om 105 (cf v l 104) —$^a$) $D_{1-3.5}$ सर्वेशानो (for सर्वाशयो) $V_1$ B Dn दर्भचा($B_2$ धा)री, $T_{2.3}$ $G_4$ सर्वशायी; M Linga P सर्वचारी (for दर्भशायी) $D_{4.6.7.9}$ सवासवो दर्पशायी ($D_6$ °चारी), $G_3$ सर्वासन सर्वशायी —$^b$) M Linga P प्राणेश (for सर्वेषां) $B_{1.4}$ $D_{2.3}$ $T_{2.3}$ $G_{2.4}$ गति (for पति) —$^c$) $M_{1-3}$ देवो (for देव) $D_2$ [ऽ]शक्त (for ऽसक्त°) $V_1$ B Dn $D_{10}$ Linga P देवदेव सुखास ($V_1$ °खाश; $D_{10}$ °खि(श, Linga P खोऽसि)क्त, $D_5$ $T_{2.3}$ $G_{2.4}$ $M_4$ Madras ed देवो देवमुखो भक्त ($M_4$ °खोत्सक्त°, Madras ed. °खो भर्ता) —$^d$) M -मन्त्रवित् (for -रत्न°)

106 For the sequence in $T_1$, cf. v l 90 —$^a$) $V_1$ B Dn $D_{10}$ $T_1$ M कैलासगिरि($T_1$ °गृह, M °गुह) वासी च, Linga P कैलासस्थो गुहावासी —$^b$) $T_1$ -संश्रित (for -संश्रय) — $T_1$ $M_4$ om 106$^c$–107$^b$ —$^c$) $D_3$ कूटहारी, $D_{4.6.8}$ कुलहारी (for कूल) $T_{2.3}$ $G_4$ कुल° कर्ता, $M_1$ कूलहर्ता (for °कर्ता) $B_{1.4}$ $D_{5.7.9}$ कुलहारी कुलकर्ता; $D_1$ कुलकर्ता कूलकारी —$^d$) $D_2$ बहुजीवो, $D_{3.5-9}$ °बीजो, $D_4$ om, $T_{2.3}$ $G_{2.4}$ बहुयशो (for °विद्यो) $M_{1-3}$ बहुप्रज (for प्रद) $D_1$ बहुबीजो बहुप्रज, Linga P वित्तो बहुप्रज

107 For the sequence in $T_1$, cf v l 90 $T_1$ $M_4$ om 107$^{ab}$ (cf v l. 106) —$^a$) $V_1$ $B_{1-4}$ $Dn_1$ $n_2$ बधकी, $Dn_3$ बधकी (for वर्धनो) $B_5$ $M_{1.2}$ वाणिदो ($B_5$ °लजो) वर्धकी वृक्षो, $M_3$ पाणिजो वार्धकी वृक्षो —$^b$) $V_1$ $B_{2.5}$ $Dn_1$ बहुलश्; $B_4$ $Dn_2$ $n_3$ $D_{3.8.10}$ बकु (for नकु) $D_8$ om. श्छद° $M_1$ छद्मसारद°, $M_{2.3}$ छद्म सच्छद° (for चन्दनश्छद) —$^c$) $B_4$ महाग्रीवो, $G_3$ $M_1$ दश°; $M_{2.3}$ साल° (for सार°) $B_1$ $D_{4.6-10}$ महाजत्रुर; $D_{1-3.5}$ °राजिर् (for °जत्रुर्) $T_1$ $M_4$ नीलग्रीवो ह्यलोलश्च, $T_{2.3}$ $G_4$ दशग्रीवो महायज्ञ —$^d$) $T_1$ $M_4$ सालग्रीवो (for ह्यलोलश्च) $D_{1-3.5}$ महौषधि $D_{4.6.7.9}$ $G_3$ मलक($G_3$ सुलभ)श्च महौषधि; $T_{2.3}$ $G_4$ सुलोहश्च महोदधि — For 107, Linga P subst.

171* प्राणेशो बन्धकी वृक्षो नकुलश्चाद्रिकस्तथा ।
ह्रस्वग्रीवो महाजानुरलोलश्च महौषधि ।

108 For the sequence in $T_1$, cf v l 90 —$^a$) $D_6$ om (hapl), $T_1$ Linga P सिद्धांतकारी $D_5$ सर्वार्थश् (for सिद्धा) —$^b$) $D_{1-7.9}$ $T_{2.3}$ $G_{2.4}$ छदोव्याकरणांतर ($D_{1-3.5}$ °ग), $T_1$ [ऽ]नतो व्याकरणोत्तम°, $M_4$ चद्रो व्याकरणोत्तर, Linga P छदोव्याकरणोत्तव —$^c$) $B_{2.4}$ सिंहदष्ट्र सिंहनाद —$^d$) $T_1$ सितांग, $T_{2.3}$ $G_{2.4}$ सिंहकृत्, Linga P सिंहास्य (for सिंहग) $D_{10}$ -पातन, $T_2$ $M_{2.3}$ भावन (for वाहन) $M_4$ सिंहद सिंहभावन

109 For the sequence in $T_1$, cf v l 90 —$^a$) $D_1$ स्वभावात्मा (for प्र) $D_{1-3}$ $G_3$ जगत्सालस्, $D_{6.7.9}$ जरत्तालस्, $D_8$ जरत्कालस् (for जगत्कालस्) T $G_4$ $M_4$ प्रभवात्मा जगत्पा($T_1$ ज्वलत्का)ल —$^b$) $Dn_1$ $n_2$ स्थानो, $D_{1.2.4.7-9}$ तारो (for तालो) $T_1$ M कौपनी च ($M_3$ तु) कपीतनु, $T_{2.3}$ $G_{2.4}$ चालो लोकपितामह, Linga P काल कपी तरुस्तनु —$^c$) M -चक्रांग (for -च) $D_1$ सुरगो नवरक्तांग, $D_{5-9}$ सारंगो सुखचक्रांग, $T_{2.3}$ $G_4$ °गो मधुवक्त्रांग, $G_2$ गोरगवक्त्रांग, Linga P गो भूतचक्रांक —$^d$) M केतुमाल° $B_5$ प्रभावन, $D_{1-3.5.8}$ $T_{2.3}$ $G_{2.4}$ स्वभा, $D_{4.6.7.9}$ स्वभावत, Linga P सुवेधक° (for सभावन) $T_1$ सर्वश्लाघो गुहाशय

110 $D_9$ om 110-111 $T_1$ om 110$^a$–111$^c$ —$^a$) $D_{1-3.5}$ भूताशयो, $D_{4.6.7}$ श्रयो, $T_{2.3}$ $G_{2.4}$ भूतशब्दो (for भूतालयो) —$^b$) $T_{2.3}$ $G_{2.4}$ श्चार्चितन — $T_{2.3}$ $G_{2.4}$ om 110$^c$–112$^b$ —$^c$) $D_{1.5}$ वामन, $D_2$ वासव, $D_{6-8}$ श्रासन, M पावन (for वाहिता) $D_{2.3}$ -लोकाना (for भूताना) —$^d$) $D_2$ निश्चयश्, M निर्मलश् (for निलयश्) $D_{1.5}$ भुव — For 110, Linga P subst

172* भूतालयो भूतपतिरहोरात्रो मलोऽमल ।
वसुभृत्सर्वभूतात्मा निश्चल सुविदुर्बुध ।

अमोघः संयतो ह्यश्वो भोजनः प्राणधारणः ।
धृतिमान्मतिमान्दक्षः सत्कृतश्च युगाधिपः ॥ १११
गोपालिर्गोपतिर्ग्रामो गोचर्मवसनो हरः ।
हिरण्यबाहुश्च तथा गुहापालः प्रवेशिनाम् ॥ ११२
प्रतिष्ठायी महाहर्षो जितकामो जितेन्द्रियः ।
गन्धारश्च सुरालश्च तपःकर्मरतिर्धनुः ॥ ११३
महागीतो महानृत्तो ह्यप्सरोगणसेवितः ।
महाकेतुर्धनुर्धातुर्नैकसानुचरश्चलः ॥ ११४
आवेदनीय आवेशः सर्वगन्धसुखावहः ।
तोरणस्तारणो वायुः परिधावति चैकतः ॥ ११५
संयोगो वर्धनो वृद्धो महावृद्धो गणाधिपः ।
नित्य आत्मसहायश्च देवासुरपतिः पतिः ॥ ११६

---

असुहृत्सर्वभूताना निश्चलश्चलविद्रुध ।

111 D9 T2 3 G3 4 om 111, T1 om 111^abc (for all, cf v l 110) —^a) B8 सर्वतो (for संयतो) D3 8 [s]श्च (for हि) D1 4 6 8 अमोघ संयमो-थास्यो, D5 Linga P °मो हृष्टो, D7 मोपास्यो —^b) D1-8 योजन (for भो°) D4 6-8 याजन प्राणहारण —^c) D5 Linga P त्र्यक्ष (for दक्ष) —^d) T1 प्रजापति, M युधां पति (for युगाधिप) Linga P सुकृतस्तु युधां पति

112 T2 3 G3 4 om 112^ab (cf v l 110) —^a) Linga P गोपालो (for °लिर्) D10 गोप्ता (for ग्रामो) D1-3 5 गोपालो गोयुधिग्रामो, D4 6-9 °लो गोपतिर्गोप्ता, T1 गोचारी गोपरो ग्रामो, M गोपाली गोपियुग्रामो —^b) V1 B Dn D7 10 हरि (for हर) —^c) T1 श्वेताङ्गो (for च तथा) D4 6 हरितश्च तथा गुह्यो, T2 3 G2 4 हिरण्यवासा स विभुर् —^d) B1 D1-3 प्रवेशिता, D5 M °शन, D10 °शित (for °शिनाम्) D4 6-9 गुह्यकालप्रवेशित (D4 9 °शक), T1 महापाल प्रचेतन, T2 3 G2 4 Linga P गुहावास प्रवेशित (Linga P °शन)

113 ^a) V1 B3 5 Dn D10 प्रकृष्टारिर्, B1.3 4 प्रहृष्टारिर्, T1 प्रसिद्धात्मा, T2 3 प्रतिष्ठाधिर्, M प्रहृष्टाङ्गो (for प्रतिष्ठायी) Linga P महामना महाकामो —^b) D5 जितारातिर्, D9 यतकामो (for जित°) —^c) B5 गंधकार, D3 T2 3 G3 4 गोधारश्च (for गन्धा°) V1 B4 सुनाभश्च, B1-3.5 सुबा(B2 5 °वा)लश्च, Dn1 n2 सुवासश्च, Dn3 सुनालश्च, T1 M स्वराल(T1 °ल)श्च, G2 धुरालश्च, Linga P सुरापश्च (for °लश्च) D5 आधारश्च सुरालश्च —^d) V1 B1 4 D10 तप शक्तो, B2 3 5 Dn3 तप सक्तो (for तप कर्म-) D1-8 रतिर्वर, D4 6-9 T2 3 G2 4 °र्धन, D5 विवर्धन, M -करो हि स (for रतिर्धनु) Dn1 तप सक्तो रतिर्नर, T1 कोपो धर्मकरो हिम, Linga P तापकर्मरतो हित, Madras ed. पति कामी रतिर्धन

114 T1 om (hapl) 114^ab. —^a) T2 3 महाशीलो, G2 °धीतो (for °गीतो) V1 B Dn D5 7 10 महानृत्तो D4 6 8 9 °वृत्तो, M भूतनृत्तो (for महा°) Linga P महाभूतो भूतवृत्तो —^b) T2 3 गुण- (for गण) —^c) B5 महाबाहुर्, D4 6 धर्मधाता, D1-9 T2 3 G2 4 धनु(D9 om धनु)र्धाता, T1 धनो दाता, M धनो धातुर्; Linga P धराधाता (for धनुर्धातुर्) —^d) D1-5 7-9 नैकताल(D4 7-9 °न)श्चराचर, D6 °तान श्चरश्चल, D10 एकतालश्चरश्चर, T1 M नैकधा (T1 °दा) जगदीश्वर; T2 3 G3 4 नैकतानचराचर, Linga P नैकतानरत स्वर

115 ^a) Dn3 T G4 अवेदनीय Dn1 n2 आवेश, D1 ह्यावेश, D5 आद्येश (for आवेश) Linga P अवेदनीय आवेश —^b) B2 (marg as in text) 3 4 -सत्त्व, D3 T1 -गंध (for -गन्ध) Dn3 सर्वगन्धसुखा वह, T2 3 G2 4 °गन्धर्वतापह, Linga P °गन्ध सुखा वह —T1 om 115^cd —^c) D5 7 T2 3 G2 4 तारणस् (for तो°) D1-2 तू(D2 तु)रणो, D7 T2 तरणो (for ता°) V1 B Dn D4 10 वात (for वायु) M तोरणस्तु रणे जात, Linga P तारणश्चरणो धाता —^d) G2 नैर्ऋति, M वैकर (for चैकत) V1 B1.2 (marg) 4 Dn परिधीपतिखेचर, B2 3.5 वार्यति खेचर, D10 °धावश्च चैकत, T2 3 G4 °वश्च नैर्ऋति (G4 °त), Linga P परिधा परिपूजित

116 ^a) Linga P सयोगी D4 om from वर्धनो up to युक्तश्च (in 117^a) —^b) B1 चातिवृद्धो, Linga P गणिकोथ (for महावृद्धो) M गुणाधिप (for गणा°) V1 B2-5 Dn D10 अ(D10 ह्य)तिवृद्धो गुणाधिक, T1 गुणवृद्धो गुणाधिप —^c) D1 5 नित्यधर्म- (D5 °र्म), D3 8 नित्यं धर्म-, D6-9 नित्यो धर्म (D7 °र्म), D10 नित्यमात्म-, T1 M नित्यात्मा सु, T2 3 G2 4 धन्यो धर्म-, Linga P नित्यो धाता, some unused MSS नित्य आत्मा —^d) G2 देवेश्वर-, G4 वेदेश्वर (for देवासुर-)

117 D4 om युक्तश्च (in 117^a) (cf v l 116) —^a) D4 मुक्त- (for युक्त) V1 Dn3 T2.3 G2.4

युक्तश्च युक्तबाहुश्च द्विविधश्च सुपर्वणः ।
आषाढश्च सुषाढश्च ध्रुवो हरिहणो हरः ॥ ११७
वपुरावर्तमानेभ्यो वसुश्रेष्ठो महापथः ।
शिरोहारी विमर्षश्च सर्वलक्षणभूषितः ॥ ११८
अक्षश्च रथयोगी च सर्वयोगी महाबलः ।
समाम्नायोऽसमाम्नायस्तीर्थदेवो महारथः ॥ ११९

निर्जीवो जीवनो मन्त्रः शुभाक्षो बहुकर्कशः ।
रत्नप्रभूतो रक्ताङ्गो महार्णवनिपानवित् ॥ १२०
मूलो विशालो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः ।
आरोहणो निरोहश्च शैलहारी महातपाः ॥ १२१
सेनाकल्पो महाकल्पो युगायुगकरो हरिः ।
युगरूपो महारूपः पवनो गहनो नगः ॥ १२२

---

मुक्तश्च मुक्तबाहु( V1 °स )श्च, B8 D10 T1 M मुक्तश्च मुक्तबाहु( T1 हस्त )श्च, D1-3. 5 श्च( D1. 2 श्च )युक्तो यु( D5 मु )क्तबाहुश्च; D6-9 आमुक्तो मुक्तबाहुश्च — b) V1 B2 ( by corr ) 3-5 Dn D10 देवो दिवि ( B2 [ before corr ] निधि ), B1 देवो विधि, D1 त्रिविधश्च, T1 M महो दधि, Linga P सुदेवोपि ( for द्विविधश्च ) — c) Dn8 om, T2. 3 G2. 4 महाषाढो ( for सुषाढश्च ) — d) B5 D1-3 T2 G3 हरिहरो, T3 हयो; G4 हरो ( for °हणो ) T1 M हरि° ( for हर° ) V1 B1. 3. 4 Dn D10 ध्रुवोथ हरिणो हर, D6-9 ध्रुवो हरिहरो हरि, Linga P स्कंधदो हरितो हर°

118 B2 partly damaged — a) B1 पुनर्, B4 Cnp वसुर् ( for वपुर् ) B8 वपुरावर्तनो मान्यो; D1-4. 6-9 वसुरावर्तमाश्चि( D1 °नो नि, D2. 3 वाश्चि )स्यो, D5 वायुरावर्तवासियो; T1 M1-3 वपुरावर्तमानाचो ( T1 °श्यो ), T2. 3 G2. 4 °नी च; Linga P °नोन्यो — b) T2. 3 G3 Madras ed सर्वश्रेष्ठ, G1 damaged ( for वसुश्रेष्ठो ) B3 महायशा, D5 °बल, M2. 3 रथ ( for पथ ) M1. 4 Linga P वपु श्रेष्ठो महारथ ( Linga P वपु ) — c) B5 Dn3 विमर्शश्च; D1 विपक्षी च, D2. 3. 7 विमर्षी ( D2 °र्शी ) च, D4. 6. 9 च वर्षी च, D8 च मा नित्य, T2. 3 G2. 4 विंशसी च ( for विमर्षश्च ) D5 हिमांशुधारी च शिव; T1 शिवो हलाहलो भीम, M1-3. 4 ( sup lin ) शिरोहारो विमर्शन, M4 शिरोहारो हिम शात°, Linga P शिरोविमर्शन° सर्व — d) Linga P °लक्ष्य ( for सर्व ) V1 B Dn D1-3. 5. 10 लक्षित, D8 °पूजित ( for भूषित )

119 a) V1 Dn1 रथयोधी, M4 रसयोगी ( for रथ ) D1. 5 T2. 3 G2. 4 अक्षरश्चा( D5 °स्त्व )क्षरो योगी ( T2. 3 G2. 4 ग ), D2. 3. 10 रश्च क्षरो योगी, D4. 6-9 °रश्चाक्षयो योगी, M1-3 °रश्चाय योगी च, Linga P यो रथगीतश्च — b) T2. 3 G2. 4 सर्वयोगो; Linga P भोगी ( for °योगी ) — c) T1 महादेवस् ( for ऽसमाम्नायस् ) T2. 3 G2. 4 समाहूय समाम्नायस्; Linga P साम्नायोथ महा — d) D1. 4. 6-9 महाद्युति; D5 °मुनि; M °पथ, Linga P °यशा ( for °रथ ) D2. 3 तीर्थदेशो महाद्युति, T2. 3 G2. 4 वेदमहामति ( G2 द्युति )

120 a) T1 M विजीवो ( for निर्जीवो ) — b) D1-3. 5 ह्यनिंद्यो ( D1. 2 °द्यो ), D6-9 अनिंद्यो, T1 सुभार्यो, T2. 3 G2. 4 अभियो, Linga P सुभगो ( for शुभाक्षो ) D5 वज्र ( for बहु ) M1. 2. 4 सुतार्यो गहनो नग — M4 om ( hapl ) 120c-122c — c) B3 D1-3. 5-9 रक्त- ( for रत्न ) T2. 3 G2. 4 Linga P -भूतोथ ( for प्रभूतो ) — d) B1 Linga P -निपातवित्, D1-4. 6-9 निनादभृत्, D5 निनादवान्, T1 निपानकृत्, T2. 3 G2. 4 निनादवित्, M1-3 निधान ( for निपान )

121 M4 om 121 ( cf v l 120 ) — a) V1 B Dn D7. 10 M3 मूल, T1 मौलिर्, M1. 2 मौली ( for मूलो ) D1-6. 8. 9 T2. 3 G2. 4 विशाखो ( for °लो ) T2. 3 G2. 4 [ s ]पि ( for हि ) Linga P मूलं विशालो ह्यमृतं — b) Dn3 व्यक्तोऽव्यक्तस् D4. 6-8 व्यक्तोऽव्यक्त सनातन, T2. 3 G2. 4 व्यक्ताव्यक्तभवो निधि — c) V1 B2-5 Dn D10 M1 Linga P [ s ]धिरोहश्च, B1 [ s ]धिरोधिश्च, D4. 6 [ s ]ति, M2. 3 विरोहश्च ( for नि ) — d) T1 M Linga P शीलधारी ( for शैलहारी ) V1 B Dn D10 शीलधा( D10 °चा )री महायशा

122 M4 om 122 ( cf v l 120 ) — a) T2. 3 G4 शुक्लकल्पो ( for सेना ) Linga P महाकंठो महायोगी — b) V1 D6-8 Linga P युगो युग, B1. 4 योगो योग, B2. 3. 5 Dn D4 योगो युग- ( for युगायुग ) D1. 3. 5 -हरो हर ( D3 °रि ) ( for -करो हरि ) D2 युगो युग हरो हरि, D10 योगो युगहरो हर, T2. 3 G2. 4 युगो हरिहरो हर — c) T1 om महारूप — d) T1 वह्नि सु, G2 वनानां, Linga P वहनो ( for पवनो ) D2 om गहनो V1 B Dn महानागहनो ( V1 करो, B1. 2 Dn3 हरो ) वध ( B1 वर ), D4. 6 विरूपपवनो नग, T2. 3 G4 वनानां गहनोरग, M1-3 ततनागहनो नग ( sic )

123 a) T2. 3 G2. 4 न्यायो ( for न्याय ) V1 Dn

न्यायनिर्वापणः पादः पण्डितो ह्यचलोपमः ।
बहुमालो महामालः सुमालो बहुलोचनः ॥ १२३
विस्तारो लवणः कूपः कुसुमः सफलोदयः ।
वृषभो वृषभाङ्काङ्गो मणिबिल्वो जटाधरः ॥ १२४
इन्दुर्विसर्गः सुमुखः सुरः सर्वायुधः सहः ।
निवेदनः सुधाजातः सुगन्धारो महाधनुः ॥ १२५

गन्धमाली च भगवानुत्थानः सर्वकर्मणाम् ।
मन्थानो बहुलो बाहुः सकलः सर्वलोचनः ॥ १२६
तरस्ताली करस्ताली ऊर्ध्वसंहननो वहः ।
छत्रं सुच्छत्रो विख्यातः सर्वलोकाश्रयो महान् ॥ १२७
मुण्डो विरूपो विकृतो दण्डिमुण्डो विकुर्वणः ।
हर्यक्षः ककुभो वज्री दीप्तजिह्वः सहस्रपात् ॥ १२८

---

D2 निर्वपण (for -निर्वा°) D1 शूली, D4 6–9 नाद (for पाद) D5 क्षापनिर्वापण पूर्ण, Linga P न्यायो निर्वापणोपाद — b) D5 [अ]चलोमल, T2 3 G2 4 [अ]च(G2 °च)लो यम (for [अ]चलोपम) T1 पंडितो हरिलोचन — c) Dn3 रत्नमालो, G2 बाहु (for बहु°) D4 6 7 महाव्याल, D3 9 °बाल (D3 °ळ), T1 मूल (for °माल) B बहुमानो महामान — d) V1 B1–3 5 शशी हरसुलोचन, B4 शशिहार सुलो°, T1 Linga P शिपिविष्ट सुलो, M सविलिंगी विलो°

124 a) M4 (sup lin as in text) वपन (for लवण) D1–4 6–10 क्रूर (for कूप) D5 विस्तरो लवण क्रूर, T1 विस्तरो लवकूपश्च, M1–3 विस्तरो वपन कूप — b) V1 B Dn त्रियुग, T1 कुमुद (for कुसुम) T2 3 G2 4 शु(G2 श)क्रमस्तफलोदन, Linga P कुसुमाग फलोदय — c) V1 B2–5 Dn त्रिनेत्रश्च वि(B2 4 Dn3 °श्चावि)षण्णागो, B1 त्रिनेत्रश्चाविपन्नांगो, D4–10 वृषभो वृषभागागो, T1 भो विषपो भंगो, T2 3 G1 Madras ed वृषभो (G1 damaged) वृषभारूढो, G2 corrupt, M Linga P वृ(Linga P ऋ)षभो वृषभो भगो, Bom Kumbh ed त्रिलोचनो विषण्णागो — d) V1 B3 5 Dn1 n2 D2 3 मणिविद्धो, B1 2 Dn3 माल विल्वो, B4 मणिरिंद्रो, D4 6–9 °बिंबो, T2 °बिल्व-, T3 पर्णो बिल्व, G2 फणिबिल्व, G4 क्षणी बिल्व, Linga P मणिबिंब (for °बिल्वो)

125 a) B2 4 5 Dn1 n2 T1 बिंदुर्, D1–9 इन्द्रो (for इन्दुर्) Dn3 विमर्द, M1–3 विमर्गि (for °र्गं) — b) V1 Dn3 सर, B3 Dn1 n2 शर, B4 Linga P शूर (for सुर) D3 प्रभ (for सह) D5 सुर पर्णायुध सह, T2 3 G1 दूरस्थ परम सह, G2 शूरस्तु धरदु सह — c) V1 B2 3 5 Dn सुखाजात, T1 सदा ज्ञात (for सुधाजात) D1–9 निवे(D4 6 °दे)शन (D5 °शाना) सुधन्वा (D7 °न्वी) च, T2 3 G2 4 निवे(T3 G2 °वें)दन सुधन्वा च — d) D10 सगाधारो, G3 M4 सुगां°, Linga P स्वर्गद्वारो (for सुगन्धारो) V1 B2 5 महाहनु (for °धनु) B4 सुगाधारो महाबल, D1–9 युगं-(D1–3 5 °गा)धारो महाहनु, T1 स्वर्गद्वारो महाचल, T2 3 G4 सगधारो महद्धनु — After 125, T1 M ins

173* शिरोधरोऽभिमर्शन सर्वलक्षणभूषित ।
[T1 मर्शश्च, M4 -मर्शेन (for मर्शन)]

While Linga P ins after 125

174* गिरावासो विसर्गश्च सर्वलक्षणलक्षवित् ।

126 a) V1 B1–4 Dn D10 गंधपाली (for माली) — b) T2 3 G2 4 प्रस्थान (for उत्थान) D5 Linga P नर्तन (Linga P अनंत) सर्वलक्षण — c) Dn1 M मंथनो, D5 Linga P सतानो, T2 3 G2 4 पथाना (sic) (for मन्थानो) V1 B1–4 Dn D10 वायु (for बाहु) B5 बहुलोबहुलो वायु — D7 om 126d–127c — d) B4 -मोचन (for -लोचन).

127 D7 om 127abc (cf v l 126) — a) V1 M तलस्ताली, B1–3 Dn3 तल(B1 3 °र)स्ताल, B4 भवस्ताल, B5 corrupt, D1–3 नरस्ताली, D5 बल°; T3 G4 नम° (for तर°) Dn1 n2 D10 तल(Dn1 °र)-स्ताल करस्थाली, T1 ततस्ताली करस्थाली, T3 G2 नम स्ताली चिरस्ताली, Linga P करस्थाली कपाली च — b) D1 corrupt Dn2 T1 ऊर्ध्व, D5 ऊर्ध्वं (for ऊर्ध्व) T2 3 G2 4 संवहनो (for -संहननो) V1 B Dn D5 10 महान्, D4 6 8 9 भव, Linga P युवा (for वह) D2 3 रूढसंवहनो वहन्, M ऊर्ध्वसहननो द्रढ (M4 °पग) — c) B1 2 5 छत्र D10 सुपत्रो (for सुच्छत्रो) D1–3 छत्रपत्र सुविख्यात, D4 6 8 9 छत्रपत्र सुवि°, D5 यत्रमत्रेपु वि°, T1 M यत्र तत्र स वि°, T2 3 G2 4 चित्रपुत्र सवि, Linga P यत्रतत्र सुवि° — d) D2 3 सह (for सर्व) T1 M हि स°, T2 3 G2 4 मनु (for महान्) V1 B Dn D10 Linga P लोक सर्वाश्रय क्रम (Linga P यो मृदु), D7 सर्व लोकमयो महान्

128 a) D1 9 बहुलो, D3 (also) सकलो (for विकृतो) — b) V1 B Dn D10 Linga P दक्षी कुडी; D1 दक्षमुंडो, D5 दंडी डिंडं, T1 दक्षी मुडी, T2 3

सहस्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः ।
सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोककृत् ॥ १२९
पवित्रं त्रिमधुर्मन्त्रः कनिष्ठः कृष्णपिङ्गलः ।
ब्रह्मदण्डविनिर्माता शतघ्नी शतपाशधृक् ॥ १३०
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ।
गभस्तिर्ब्रह्मकृद्ब्रह्मा ब्रह्मविद्ब्राह्मणो गतिः ॥ १३१
अनन्तरूपो नैकात्मा तिग्मतेजाः स्वयंभुवः ।
ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः ॥ १३२
चन्दनी पद्ममालाग्र्यः सुरभ्युत्तरणो नरः ।
कर्णिकारमहास्रग्वी नीलमौलिः पिनाकधृक् ॥ १३३
उमापतिरुमाकान्तो जाह्नवीधृगुमाधवः ।
वरो वराहो वरदो वरेशः सुमहास्वनः ॥ १३४
महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ।
प्रीतात्मा प्रयतात्मा च संयतात्मा प्रधानधृक् ॥ १३५

---

G2 4 हिंडिश्चद्रो, M दंडी मुडो (for दण्डिमुण्डो) D4 6–9 विकुडल (for विकुर्वण) — B3 damaged for $128^{cd}$ — $^{c}$) Linga P वार्यक्ष (for ह्°) B1 D10 ककुदो (for °भो) T2 3 G2 4 वृक्षो (for वज्री) T1 हरीक्षण सहस्राक्ष — $^{d}$) V1 B (B3 damaged) Dn D10 शतजिह्व, D4 6–9 दीप्तवक्त्र, T1 सहस्राक्ष, T2 3 G2 4 दीर्घजिह्व, M Linga P दीप्ततेजा (for जिह्व)

129 T1 om (hapl) $129^{ab}$ — $^{a}$) T2 3 G2 4 विप्रेंद्र (for देवेन्द्र) V1 सहस्रमूर्धा च देवेंद्र — $^{b}$) D2 3 5 -गुरू, D4 6–9 T2 3 G2 4 भूत (for देव) D7 गुह, M1 3 4 गिरि (for गुरु) — $^{c}$) D1 2 सूर्पांग (for सर्वाङ्ग) T1 सहस्रबाहुरूपश्च — $^{d}$) D1–8 स्वशरण्य (for श°) D1 लोकधृत्, D4 6 8 9 -कर्मकृत्

130 $^{a}$) D1 has partial lacuna D2 3 विमन्त्रस्त्रि, D4–9 पवित्रस्त्रि, T2 3 G2 4 °त्रस्त्वं (for °त्रं त्रि) V1 B Dn D10 ककुन्मत्र, T1 -गतिमंत्र (for मधु) — $^{b}$) T2 3 G1 निविष्ट ; G2 विशिष्ट (for कनिष्ठ) Some MSS पिंगळ ❀ Cn कृष्णपिङ्गल हरिहरमूर्ति । ❀ — $^{c}$) D1–9 विनिर्मात, T1 °र्मुक्त, T2 3 G2 4 दांत (for र्माता) M ब्रह्मदंडी विनिर्मोक्ता — $^{d}$) Linga P शतघ्न D2 3 T1 पाशधृत्; T2 3 G4 सर्वधृक्, G2 पर्व (for पाश°) V1 B Dn D10 शतघ्नी पाशशक्तिमान्; D1 घ्न शतपाशभृत्, D4, 6 8 9 शर(D9 त)घ्न शरपातधृक्, D7 शतघ्न पाशशक्तिधृक् — After 130, T1 reads $90^{c}$–$109^{d}$

131 M Linga P om $131^{a}$–$138^{b}$ T1 om $131^{ab}$ — $^{b}$) D1–3 5 वज्रगर्भो (D3 om गर्भो) (for ब्रह्म°) — D4 om $131^{c}$–$132^{b}$ — $^{c}$) D1 3 5 8 9 गभस्ती, D7 तेजस्वी, T2 3 G4 गतश्रीर् (for गभस्तिर्) D1 ब्रह्मविद्, T1 ब्रह्मगो (for कृद्) B3 D3 G2 ब्रह्म, Dn1 n2 T2 3 G4 ब्रह्मी (for ब्रह्मा) — $^{d}$) B3 partly damaged T1 ब्रह्मकृद् (for विद्)

132 M Linga P om 132 (cf v l 131) B3 partly damaged — $^{a}$) T2 3 G2 4 भूतो (for रूपो) T1 [ऽ]नतश्च (for नैकात्मा) — T2 3 G2 4 om $132^{bc}$ — $^{b}$) B2 D2 3 स्वसभव, B5 समुद्भव, D5 स्वयभव D1 6–9 तिग्मतेजा (D1 °ग्मौजा भा) स्मर्सभव, T1 तिग्मात्मा तिग्मसभव — $^{d}$) T2 3 G2 4 महाजव (for मनो)

133 M Linga P om 133 (cf v l 131) — $^{a}$) B4 D4 5 वदनी (for चन्दनी) V1 B2 3 5 Dn नालाग्र (B3 ग्र्य), B4 D10 मालाग्र, D4 6 मालास्य; T1 माल (submetric), G2 मालाढ्यस् — T1 om $133^{b}$ — $^{b}$) B4 सुपुण्यस्तारणो वच, D1 5 स्वग(D5 गु)- ण्योत्तरगोत्त(D5 °च)र, D2 3 स्वगण्योत्तरगोत्तम (D3 °गोंतक), D4 6–8 स्वगुण्योत्तरणोत्तर, D10 सुरभ्युत्तार णोत्तर, T2 3 G4 स्थाणुसहरकोद्भव (G4 °णो भव), G2 तगणाभरतो भव (sic) — T2 3 G2 4 om $133^{cd}$ — $^{c}$) B4 D4 6–9 कर्णिकारो D1 कर्णिकारी महामुग्धी (sic), T1 °कोथ महास्त्रज — T1 om $133^{d}$ — $^{d}$) D5 8 9 नीलमौली (for लि) D1–8 पिनाकभृत् (for °धृक्)

134 M Linga P om 134 (cf. v l 131) B1 D4 6 om (hapl) 134–135 — $^{b}$) T1 उमावर (for °धव) D1–8 जाह्नवीभृद्नवर°, D5 वदनो वर, D7–9 हृदयगम, D10 घृतमस्तक, T2 3 G2 4 जागलीधृदिग° वर — $^{c}$) D3 9 वराहौ (for °हो) — $^{d}$) V1 B Dn वरेण्य (for श) D7 च (for सु) B3 महा स्मन, T2 3 वर, G2 तप (for °स्वन) D3 9 वरेशश्च महामना, D10 °ण्य सहसोस्तवप (sic), T1 वरसाहाय्यदोनघ

135 M Linga P om 135 (cf. v l 131) B1 D4 6 om 135 (cf v l. 134) T1 om $135^{ab}$ — $^{a}$) B5 मदन, D1–3 5 7–9 त्व(D1 स्व)नघ (for दमन) T2 3 G2 4 महाप्रभाव स्मृ(G2 भावस्त्रि-, G4 °वाह स्मृ)तय — $^{b}$) D1 7 शक्रहा (for शत्रुहा) T2 3 G2 4

सर्वपार्श्वसुतस्तार्क्ष्यो धर्मसाधारणो वरः ।
चराचरात्मा सूक्ष्मात्मा सुवृषो गोवृषेश्वरः ॥ १३६
साध्यर्षिर्वसुरादित्यो विवस्वान्सविता मृडः ।
व्यासः सर्वस्य संक्षेपो विस्तरः पर्ययो नयः ॥ १३७
ऋतुः संवत्सरो मासः पक्षः संख्यासमापनः ।
कला काष्ठा लवो मात्रा मुहूर्तोऽहः क्षपाः क्षणाः ॥१३८
विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्त्वनिन्दितः ।
सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ॥ १३९

स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ।
निर्वाणं ह्लादनं चैव ब्रह्मलोकः परा गतिः ॥ १४०
देवासुरविनिर्माता देवासुरपरायणः ।
देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥ १४१
देवासुरमहामात्रो देवासुरगणाश्रयः ।
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ॥ १४२
देवातिदेवो देवर्षिर्देवासुरवरप्रदः ।
देवासुरेश्वरो देवो देवासुरमहेश्वरः ॥ १४३

---

शम्भुभ्यश्चेति पिंगल ❀ Cn श्वेतपिङ्गल अर्धनारीनटेश्वरो दक्षिणार्धे कर्पूरगौरो वामार्धे कनकपिङ्गल । ये तु श्वेतपिङ्गल-पदस्यार्थं कृष्णपिङ्गलपदेन ब्रुवते, ते श्वेतमपि कृष्णीकर्तुं प्रभवन्तीति महान्तो भवन्ति । ❀ — c) B2 damaged T2 3 G4 भूतात्मा, G2 वृ° (for प्र°) B3 4 Dn3 D3 T1 परमात्मा (for प्रयतात्मा) V1 B5 Dn1 n3 पीतात्मा परमात्मा च — d) V1 B Dn D8 10 T1 प्रयतात्मा, D7 सजि° (for सय°) D1 प्रधानधृत्, D2 3 °भृत्, T1 °कृत् (for °धृक्)

136 M Linga P om 136 (cf v l 131) — a) B2 partly damaged V1 B1 3-5 Dn D10 -सुखरूयक्षो (for सुतस्तार्क्ष्यो) T1 अर्धनारीतनुर्जिष्णु, T2 3 G2 4 सर्वभाग्वस्तरुस्तार — b) B1 T1 G4 सर्व- (for धर्म) B3 D1 3 5 धर (for वर) — c) D7 परावरात्मा Dn3 om सूक्ष्मात्मा — d) V1 B1-3 5 Dn D10 अमृतो, D4 6 8 9 गोवृषो (for सु°) T1 भृगुरात्मा वृषध्वज

137 M Linga P om 137 (cf v l 131) — a) D5 शावाक्षा (for साध्यर्षिर्) T1 साध्यकश्चार्षिरादित्यो — b) B3 4 Dn3 n3 D2 4 6-10 T1 G2 [अ]मृत, D1 3 5 [अ]मृतं (for मृड) T2 3 G1 विवस्वान्सुमहाबल — D6 reads 137c–138b twice — c) V1 B Dn सर्गं सु, D10 T2 3 G2 4 सर्वसु (for सर्वस्य) T2 3 G3 -सक्षेसा (for सक्षेपो) — d) D7 विस्तार V1 B1 4 Dn नर, B2 3 5 [ऽ]नत्र (for नय) D1-3 विस्तार परमोक्षर

138 For the repetition of 138ab in D6, cf v l 137 M Linga P om 138ab (cf v l 131) — a) T1 ऋतु सवत्सरात्मा च — b) D5 G3 पक्ष (for पक्ष) D2 3 -समापक, T2 3 G2 4 °गत (for °पन) T1 पक्ष साध्य सनातन — c) B2 partly damaged V1 B Dn D2 3 5 8-10 लवा (for लवो) Dn3 मासा (for मात्रा) D1 कला काष्ठा लवा मासा — d) B Dn D1-3 6-9 T2 3 G4 मुहूर्ताह V1 गण, B5 T2 3 G4 क्षण G3 मुहुर्तो सक्षमापण

139 a) T1 G3 विश्वक्षेत्र D5 (after corr) तदा बीज, T1 प्रजाबीजो (for °बीज) D5 (before corr) Linga P विश्वक्षेत्रसमो (Linga P °प्रदो) बीज — b) V1 B D10 निर्गम, Dn1 n3 निर्मम, Linga P निर्मुख (for [अ]निन्दित) Dn2 लिंगमाद्य सुनिर्मम, D1 °साध्यस्तु निर्मित, D7 °मास्वाद्य निंदित, T1 °माप्य सुनिर्मल, M °माद्य (M2 3 °न्य) स्तुतिर्मख — c) T2 3 G2 4 अव्यक्त

140 b) D4 6 त्रिविष्टप — c) D5 M4 निर्वाण Dn1 n2 D3 ह्लादनश्, Linga P हृदयश् (for ह्लादनं) M1-3 निर्वाणाह्लादन चैव — d) V1 Dn1 D4 6 8 9 T2 3 G2 4 ब्रह्मलोक, D7 ब्रह्म एक (for ब्रह्मलोक)

141 b) D2 3 परायण, T2 3 G4 °वर (for °यण) — D6 om (hapl) 141c–142a

142 D6 om 142a (cf v l 141) D1 om (hapl) 142ab — a) T2 3 G2 4 महात्मानो (for °मात्रो) — b) D2 3 5 T2 3 G2 4 महाश्रय, D1 6-9 -समा° (for -गणा°) — c) D2 3 महाध्यक्षो (for -गणा°) — d) Dn3 गणाग्रधी, D4 6 8 9 °यन

143 a) D7 Linga P देवाधिदेवो, T2 3 G2 4 M देवादि (for देवाति°) — b) D1-3 देवासुरसुपूजित — c) V1 B Dn D4 5 10 विश्वो, Linga P विष्णुर् (for देवो) T1 देवासुराश्रयो मर्त्यो, T2 3 G2 4 °सुर वरो देवो — d) T1 वासुदेवो (for देवासुर-)

144 b) D6 M देवानामात्मसभव; Linga P देवतात्मा स्वसंभव — c) D1 उद्भवस्, D4 6 7 9 उद्भिजस्,

सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसंभवः ।
उद्भिदस्त्रिक्रमो वैद्यो विरजो विरजोम्बरः ॥ १४४
ईड्यो हस्ती सुरव्याघ्रो देवसिंहो नरर्षभः ।
विबुधाग्रवरः श्रेष्ठः सर्वदेवोत्तमोत्तमः ॥ १४५
प्रयुक्तः शोभनो वज्र ईशानः प्रभुरव्ययः ।
गुरुः कान्तो निजः सर्गः पवित्रः सर्ववाहनः ॥ १४६
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ।
अभिरामः सुरगणो विरामः सर्वसाधनः ॥ १४७
ललाटाक्षो विश्वदेहो हरिणो ब्रह्मवर्चसः ।
स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः ॥ १४८
सिद्धार्थः सर्वभूतार्थोऽचिन्त्यः सत्यव्रतः शुचिः ।
व्रताधिपः परं ब्रह्म मुक्तानां परमा गतिः ॥ १४९
विमुक्तो मुक्ततेजाश्च श्रीमाञ्श्रीवर्धनो जगत् ।
यथाप्रधानं भगवानिति भक्त्या स्तुतो मया ॥ १५०

---

D5 उद्भमस्, Linga P उद्भवस् ( for उद्भिदस् ) V1 B Dn उद्भिचिविक्रमो वैद्यो; D2 8 उद्भवस्त्रिक्रमो वेद्यो, D3 10 उद्भिजो विक्रमो वैद्यो; T1 उद्गतिस्त्रिक्रमो वैन्यो, T2 3 G3 4 उद्भिन्नस्त्रिक्रमो वेद्यो — $^{b}$) D1. 2 विरजा, D3 6 om (hapl) (for विरजो) D8 विरजांबर, T1 नीरजोंबर, G2 विरजेश्वर (for °जोम्बर) V1 B Dn D10 विरजो ( B1. 3 विरजा, B4 वीरुजो ) नी( B5 नि ) रजोमर, D4 7-9 विराजो विरजा( D7 °रुधो )वर, T2 2 G1 विरजो विरजेश्वर, Linga P वरदो वरजोंबर

145 $^{a}$) B4 इष्टो, Dn1 D2 ईज्यो, D10 वेद्यो ( for ईड्यो ) V1 B3 8 Dn1 n2 हस्तीश्वरो, B5 हस्ती सुरो, D4 6-9 हस्तिमुख, T1 हस्तिपरो, M हस्ती नर ( for हस्ती सुर ) D5 corrupt, T2 3 G3 4 उग्रो हस्तिमुखो व्याघ्रो, Linga P ईज्यो हस्ती तथा व्याघ्रो — $^{b}$) T1 दीप्तरूपो, T2 3 G2 4 हस्तिसिंहो ( for देव ) Linga P महर्षभ ( for नर° ) — T1 om 145$^{c}$–146$^{b}$ — $^{c}$) D4. 6 विबुधाग्र्यो ( for धाग्र ) D2 8 T2 3 G2 4 -चर ( for -वर ) V1 B1. 3. 4 Dn1 n2 विबुधोग्रव( B1 च )र· सूक्ष्म, B2 5 Dn3 D10 °धाग्रच( Dn3 °ग्र्यो व )र सूक्ष्म, Linga P धाग्र्य सुर श्रेष्ठः — $^{d}$) T2 3 G2 4 स च ( for सर्व ) V1 B Dn D10 M Linga P सर्वदेवस्तपोमय ( M °पोत्तम, Linga P तोत्तम )

146 T1 om. 146$^{ab}$ ( cf v l 145 ) D1-9 T2 3 G2 4 transp 146$^{ab}$ and 146$^{cd}$ — $^{a}$) M अयुक्त ( for प्र ) D1 वज्री ( for वज्र ) V1 B Dn D10 सुयु( B1 4 Dn3 °यु )क्त शोभनो वज्री, T2 3 G2 4 प्रवृत्त शोभनो वृत्त ( G2 त्त ), Linga P सयुक्त शोभनो वक्ता — $^{b}$) D1 हीशान ( for ई ) V1 B Dn प्रासा( B1 4 णा )नां प्रभवोऽव्यय, D10 M Linga P प्राशाना प्रभवोऽव्यय — $^{c}$) V1 B Dn D10 गुह, D2-5 गुरु ( for गुरु ) D3 4 6 8 9 सर्व, D7 शर्व, D10 M स्वर्ग ( for सर्ग ) T1 गुरुकान्तो विसर्गश्च; T2 3 G2 4 गुरु( G4 शुक्रा )कांतो जितस्वर्ग — $^{d}$) D1 प्रयुक्त, T2 3 G2 4 पवित्र ( for °त्र ) M पावन ( for -वाहन ) V1 B Dn D10 पवित्र सर्वपावन, T1 प्राशाना प्रभवोऽव्यय ( of 146$^{b}$ )

147 T1 om 147 M4 om 147$^{ab}$ — $^{a}$) M1-3 भूत ( for शृङ्ग ) D1 3 5 -प्रदो ( for प्रियो ) Some unused MSS बधू ( for बभ्रू ) — $^{c}$) D6 M1-3 Linga P सुशरणो ( for सुरगणो ) D2-5 7-9 M4 अविराम सुशरगो, T2 3 G2 4 आपत्सहायो धीरोपि — $^{d}$) T2 3 G2 4 श्रीराम, Linga P नि° ( for वि° ) B1 साधक ( for °न ) D5 विराग सर्वमात्मन

148 D8 om ( hapl ) 148 — $^{a}$) V1 B Dn D1 विश्वदेवो, T2 3 G2 4 °रेतो; M वहो ( for °देहो ) T1 विश्वावहो विश्वदेवो — $^{b}$) T2 वरुणो ( for हरिणो ) D1 2 4-10 -वर्चसी ( for °स ) — $^{d}$) B4 वर्चस ( for -वर्धन )

149 $^{a}$) T1 om. from सिद्धार्थ up to चिन्त्य ( in 149$^{b}$ ) V1 B Dn D10 सिद्ध- ( for सर्व- ) D4 6 सिद्धार्थ सर्वसिद्धार्थो, T2 3 G2 4 निधाव्य सर्वभूतादि ( G2 नि ) — $^{b}$) D1-4 6 नित्य, D7-9 नित्य, T2 3 G4 भूत्य, G2 मृत्यु ( for ऽचिन्त्य ) D8 om सत्य D5 नित्यव्रतशुचिव्रत, M4 [ऽ]चिंत्य सत्य प्रभु· शुचि, Linga P °त्य· सत्य शुचिव्रत — $^{c}$) T1 om व्रताधिप पर B1 ब्रह्माधिप, D4-9 व्रतादिर्यं, M4 प्रेताधिप ( for व्रता ) T3 पर ( for परं ) T1 ब्रह्मा D1-3 व्रतादिपरम ब्रह्म — $^{d}$) V1 B2 ( marg ) 3-5 Dn D2 भक्तानां, D1 यु° ( for मु° )

150 G4 om 150-151 — $^{a}$) D1-3 5 G2 दीप्त, D4 6-9 दीर्घ ( for मुक्त ) T1 M1-3 Linga P केशश् ( for तेजाश् ) B1 वियुक्तो युक्ततेजाश्च, M4 एवमुक्तो मुक्तिभाजा — $^{b}$) D1-3 [ऽ]प्रज, T2 3 गज ( for जगत् ) T1 ह्रीमाञ्श्रीमान्सदागति — T1 om 150$^{cd}$ Before 150$^{cd}$, B5 ins ॐ — $^{c}$) D ( except Dn ) T2 3 G2 प्रसादो ( D1 2 °द ) ( for -प्रधान ) — $^{d}$) D1-3 नित्यं ( for इति )

यं न ब्रह्मादयो देवा विदुर्यं न महर्षयः ।
तं स्तव्यमर्च्यं वन्द्यं च कः स्तोष्यति जगत्पतिम् ॥ १५१
भक्तिमेव पुरस्कृत्य मया यज्ञपतिर्वसुः ।
ततोऽभ्यनुज्ञां प्राप्यैव स्तुतो मतिमतां वरः ॥ १५२
शिवमेभिः स्तुवन्देवं नामभिः पुष्टिवर्धनैः ।
नित्ययुक्तः शुचिर्भूत्वा प्राप्नोत्यात्मानमात्मना ॥ १५३
एतद्धि परमं ब्रह्म स्वयं गीतं स्वयंभुवा ।
ऋषयश्चैव देवाश्च स्तुवन्त्येतेन तत्परम् ॥ १५४
स्तूयमानो महादेवः प्रीयते चात्मनामभिः ।
भक्तानुकम्पी भगवानात्मसंस्थान्करोति तान् ॥ १५५
तथैव च मनुष्येषु ये मनुष्याः प्रधानतः ।
आस्तिकाः श्रद्दधानाश्च बहुभिर्जन्मभिः स्तवैः ॥ १५६
जाग्रतश्च स्वपन्तश्च व्रजन्तः पथि संस्थिताः ।
स्तुवन्ति स्तूयमानाश्च तुष्यन्ति च रमन्ति च ।

---

151 $G_4$ om 151 (cf v l 150) —$^a$) $D_{n1}$ तं न, $D_{n2}$ मनु, $D_4$ यत्र, $D_5$ M यत्तद्, $D_8$ येन, $T_{2\,3}$ $G_2$ ततो (for य न) —$^b$) $D_8$ transp विदु and य $B_4$ तत्त्वे, $D_5$ $T_{2\,3}$ सम्न, M तत्त्व (for य न) $V_1$ $B_{1-3\,5}$ Dn विदुस्तत्त्वेन नर्षय — $D_{10}$ ins after 151$^{ab}$ $T_1$ cont after 176*

175* इदममृतमनन्तमप्रमेयं
सकलजनार्तिहर समस्तवेद्यम् ।
जपत बहुभिरीरित विशेष्य
शिवपदमन्त्रविघट्टनेन तीव्रम् ।

[(L 3) $T_1$ दुरितनाशसपद् (for बहुभिरीरित विशेष्य) —(L 4) $T_1$ करशिव- (for शिवपद-) ]

—$^c$) $V_1$ B Dn $D_{10}$ स्तोतव्यम्, $D_5$ क स्तव्यम् (for त स्त°) $G_2$ अत्याधर्मा (sic) (for अर्च्यं वन्द्य) —$^d$) $B_5$ जगत्पति, $D_{1-3\,5}$ °द्गुरु (for त्पतिम्) — For 151, $T_1$ subst

176* नम शिवायेति सदा प्रदान भगवानिति ।
भक्त्या स्तुतो मया यत्तद्विदुस्तत्त्व सुरर्षभा ।

152 $T_1$ om 152–162 —$^a$) $V_1$ B Dn $D_{10}$ भक्त्या स्तवं $D_1$ भक्तिमेव, $D_{4-9}$ $G_4$ भक्ति स्तेव ($D_{5\,6}$ °व), $T_{2\,3}$ $G_2$ M भक्तिं चैव (for भक्तिमेव) —$^b$) $V_1$ B Dn विभु, $D_{8\,10}$ प्रभु (for वसु) —$^c$) $V_1$ B Dn $D_{10}$ सप्राप्य (for प्राप्यैव) $D_{4\,6-9}$ ततोनुज्ञामवाप्यैव —$^d$) $D_{1\,2}$ स्तुति, $D_{8\,9}$ om (for मति) $D_{4,\,6-9}$ गति (for वर) $T_{2\,3}$ $G_{2\,4}$ स्तुतोत्पत्तिमतां गति, M स्तुतो गतिमता गति — After 152, $M_2$ reads शिवसहस्रनाम समाप्त on marg

153 $T_1$ om 153 (cf v l 152) M om 153–162 —$^a$) $D_{1-4\,6-9}$ एवं (for एभि) $D_{n3}$ $D_{7\,10}$ स्तुत (for स्तुवन्) $B_1$ एव (for देव) $D_5$ स्तुवन्नेव शिव देव —$^b$) $D_{n3}$ पुण्य, $D_5$ तुष्टि (for पुष्टि-) $T_{2\,3}$ $G_{2\,4}$ वर्धन —$^c$) $B_1$ $D_5$ नित्यभुक्त, $B_3$ नित्य युक्त $V_1$ $B_{1-3,\,5}$ Dn $D_{10}$ भक्त, $B_4$ वत्स (for भूत्वा) —$^d$) $T_{2\,3}$ $G_{2\,4}$ प्राप्नोति परमात्मना

154 $T_1$ om 154 (cf v l 152) M om 154 (cf v l 153) —$^a$) $D_{n3}$ एतद्धि ब्रह्म परमं —$^b$) Dn परं ब्रह्माधिगच्छति —$^c$) $B_4$ [अ]पि (for [ए]व) —$^d$) $T_{2\,3}$ $G_2$ [ए]न च (for [ए]तेन) $B_4$ $D_5$ तत्परा

155 $T_1$ om 155 (cf v l 152) M om 155 (cf v l 153) —$^a$) $D_{n1}$ $D_8$ स्तवमानो; $G_4$ ज्ञाय° (for स्तूय°) —$^b$) $V_1$ B Dn $D_{10}$ तुष्यते नियतात्मभि° —$^d$) $D_{10}$ यान् (for तान्) $V_1$ B Dn आत्मसंस्थाकरो विभु, $T_{2\,3}$ $G_{2\,4}$ °संस्थ करोति त

156 $T_1$ om 156 (cf. v l 152) M om 156 (cf v l 153) —$^b$) $T_{2\,3}$ $G_4$ य (for ये) —$^c$) $D_{7\,9}$ आश्रिता (for आस्तिका) —$^d$) $D_8$ om जन्मभि° $T_2$ तदा, $T_3$ $G_{2\,4}$ तथा (for स्तवै) — After 156, $V_1$ B Dn $D_{8\,10}$ ins

177* भक्त्या ह्यनन्यमीशान पर देवं सनातनम् ।
कर्मणा मनसा वाचा भावेनामिततेजस ।
स्वपन्तो जाग्रमाणाश्च व्रजन्नुपविशंस्तथा ।
उन्मिषन्निमिषंश्चैव चिन्तयन्त पुन पुन ।

[(L 1) $B_{2\,5}$ भक्त्या त्वनन्ययेशानं (for the prior half) —(L 2) $V_1$ *corrupt* $D_{8\,10}$ स्तवेन (for भा°) $B_4$ -तेजसा — $D_8$ om lines 3–4 —(L 3) $D_{n1}$ $n_2$ शयाना (for स्वपन्तो) $B_3$ जायमाणाश्च; $D_{n1}$ जाग्रमाणश्च —(L 4) $B_3$ निमिषतश्च (for °श्चैव) ]

157 $T_1$ om 157 (cf v l 152) M om 157 (cf v l 153) —$^a$) $D_{6-9}$ [ऽ]थ, $T_{2\,3}$ $G_4$ ये (for च) $D_{4\,5}$ $G_2$ व्रजतोपि (for स्वपन्तश्च) —$^b$) $D_{4\,5}$ $G_2$ स्वपत (for व्रजन्त) $D_{6-9}$ गतिसं-, $T_{2\,3}$ $G_4$ [ऽ]पि शिवं (for पथि स-) — For 157$^{ab}$, $V_1$ B Dn $D_{10}$ subst

जन्मकोटिसहस्रेषु नानासंसारयोनिषु ॥ १५७
जन्तोर्विशुद्धपापस्य भवे भक्तिः प्रजायते ।
उत्पन्ना च भवे भक्तिरनन्या सर्वभावतः ॥ १५८
कारणं भावितं तस्य सर्वमुक्तस्य सर्वतः ।
एतद्देवेषु दुष्प्रापं मनुष्येषु न लभ्यते ॥ १५९
निर्विघ्ना निश्चला रुद्रे भक्तिरव्यभिचारिणी ।
तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणाम् ।
यया यान्ति परां सिद्धिं तद्भावगतचेतसः ॥ १६०
ये सर्वभावोपगताः परत्वेनाभवन्नराः ।
प्रपन्नवत्सलो देवः संसारात्तान्समुद्धरेत् ॥ १६१
एवमन्ये न कुर्वन्ति देवाः संसारमोचनम् ।
मनुष्याणां महादेवादन्यत्रापि तपोबलात् ॥ १६२
इति तेनेन्द्रकल्पेन भगवान्सदसत्पतिः ।
कृत्तिवासाः स्तुतः कृष्ण तण्डिना शुद्धबुद्धिना ॥ १६३
स्तवमेतं भगवतो ब्रह्मा स्वयमधारयत् ।
ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे ॥ १६४

---

178* शृण्वन्त श्रावयन्तश्च कथयन्तश्च ते भवम् ।
— $^{c}$) V1 B Dn D2 8 8 10 स्तुवत D4 6-9 T2 8 G2 4 स्तूयमाने (for मानाश्च) — $^{d}$) D1 2 स्तोष्यति (for सु) — $^{e}$) D4 6 7 9 जन्मकोटी

158 T1 om 158 (cf v l 152) M om. 158 (cf. v l 153) — $^{a}$) V1 B Dn D10 विगत (for विशुद्ध) — $^{b}$) V1 B1-4 Dn8 अजायत (for प्रजायते) — $^{c}$) B8 उत्पन्नवि (for °न्ना च) D7 भवेद्, T2 8 G2 4 शिवे (for भवे) — $^{d}$) T2 8 G4 सर्वि (for सर्व)

159 T1 om 159 (cf. v l 152) M om 159 (cf v l 153) D4 6 7 8 om (hapl) 159$^{ab}$ — $^{a}$) D5 भाविनस् (for त) V1 B Dn भावित (B6 Dn1. n2 न) कारणे चास्य; D8 10 भाविता कारण चास्य — $^{b}$) D1 सर्वदा (for त) V1 B Dn D8 10 सर्वयु(B1 4 °मु)क्तस्य सर्वथा; D5 सर्वत सिद्धि मेष्यति — $^{c}$) Some MSS दुःप्राप, B4 D10 दुष्प्राप्य — $^{d}$) Dn3 न मनुष्येषु (by transp), D7 9 मानुषेषु न

160 T1 om 160 (cf v l 152) M om 160 (cf. v l 153) — $^{ab}$) D7 लोके रुद्रे (for रुद्रे भक्तिर्) — $^{c}$) D10 तु (for च) — $^{d}$) D6 संपद्यते, T2 8 G4 उत्पत्स्यते (for द्यते) — $^{e}$) V1 B Dn D10 येन, D1 5 T2 8 G2 4 यथा (for यया) — $^{f}$) B2 8 5 Dn1 n2 D4 5 9 10 तद्भागवत, T2 8 G2 4 सद्भावेन वि (for तद्भावगत) D (except Dn) मानसा (for -चेतस)

161 T1 om 161 (cf v l 152) M om 161 (cf. v l 153) — $^{a}$) V1 B Dn D10 भावानु (for भावोप) D2 रता (for गता) D5 ये सर्वभावन गता — $^{b}$) D5 प्रभुत्वेन, T2 8 G2 4 भव° (for पर) D4 6-9 भवेन्न (for [अ]भवन्) V1 B Dn D10 प्रपद्यते महेश्वरं — $^{c}$) D7-9 T2 8 G2 4 प्रसन्न (for प्रपन्न) — $^{d}$) Dn8 ससारार्णवात् (for °रात्तान्)

162 T1 om 162 (cf v l 152) M om 162 (cf v l 153) — $^{a}$) V1 B2 (marg) Dn वि (for न) — D1 om 162$^{cd}$ — $^{c}$) V1 B Dn D10 ऋते देव (for महादेवाद्) — $^{d}$) V1 B Dn D10 नान्या शक्तिस्तपोबल; D8 सदसस्पतिरीश्वरात्

163 B2 partly damaged — $^{b}$) D5 G2 सदसस्पति (for °त्पति) — $^{c}$) T2 8 G2 4 मत (for स्तुत) D4 6-9 पूर्व (for कृष्ण) T1 कृत्तिवासा सुसंतुष्टस् — $^{d}$) V1 B (except B4) Dn1. n2 D10 शुभ (for शुद्ध-)

164 $^{a}$) B4 Dn8 D10 T1 एव, D5 9 M4 एनं (for एत) — $^{b}$) Dn8 अधीयत (for अधारयत्) — For 164$^{ab}$, T2 8 G2 4 Madras ed subst

179* स्तवमेतद्भतो ब्रह्मा स्वयमाराधयन्प्रजा ।
[T2 8 G4 अ(G4 आ)धारयन् (for आराध°)]

— After 164$^{ab}$, V1 B (except B8) Dn D8 ins

180* गीयते च स बुध्येत ब्रह्मा शंकरसंनिधौ ।
इदं पुण्य पवित्र च सर्वदा पापनाशनम् ।
योगद मोक्षद चैव स्वर्गदं तोषदं तथा ।
एवमेतत्पठन्ते य एकभक्त्या तु शंकरे ।
या गति साख्ययोगानां व्रजन्त्येतां गतिं तदा । [5]
स्तवमेत प्रयत्नेन सदा रुद्रस्य सनिधौ ।
अब्दमेक चरेद्भक्त प्र प्नुयादीप्सितं फलम् ।
एतद्रहस्य परमं ब्रह्मणो हृदि संस्थितम् ।

[(L 1) V1 B5 transp च and स B4 तुष्येत (for बुद्ध्येत) B1 5 भक्त्या (for ब्रह्मा) — (L 2) B8 इम (for इद), Dn8 om च B1 Dn8 सर्वपापप्रणा(Dn8

19

मृत्युः प्रोवाच रुद्राणां रुद्रेभ्यस्तण्डिमागमत् ।
महता तपसा प्राप्तस्तण्डिना ब्रह्मसद्मनि ॥ १६५
तण्डिः प्रोवाच शुक्राय गौतमायाह भार्गवः ।
वैवस्वताय मनवे गौतमः प्राह माधव ॥ १६६
नारायणाय साध्याय मनुरिष्टाय धीमते ।
यमाय प्राह भगवान्साध्यो नारायणोऽच्युतः ॥ १६७
नाचिकेताय भगवानाह वैवस्वतो यमः ।
मार्कण्डेयाय वार्ष्णेय नाचिकेतोऽभ्यभाषत ॥ १६८
मार्कण्डेयान्मया प्राप्तं नियमेन जनार्दन ।
तवाप्यहममित्रघ्न स्तवं दद्म्यद्य विश्रुतम् ।
स्वर्ग्यमारोग्यमायुष्यं धन्यं बल्यं तथैव च ॥ १६९
न तस्य विघ्नं कुर्वन्ति दानवा यक्षराक्षसाः ।
पिशाचा यातुधानाश्च गुह्यका भुजगा अपि ॥ १७०
यः पठेत शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः ।
अभग्नयोगो वर्षं तु सोऽश्वमेधफलं लभेत् ॥ १७१

इति श्रीमहाभारते अनुशासनपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

---

°प्यापना )शन (for the post half) — (L 3) B6 स्वर्गम (for स्वर्गद) — (L 4) Dn1 n8 तु (for तु) Dn1 n2 शकर — (L 5) Dn8 साख्ययोगेन B4 तथा, B5 D8 सदा (for तदा) — (L 6) B6 परम् (for स्तवम्) — (L 8) B2 partly damaged ]

— T1 om 164c–165b — c) D4 6 शुक्राय, D7 शक्रस्य (for शक्राय) T2 3 G2 4 ब्रह्मोवाच च शक्रस्य — d) D4 6 शुक्र (for शक्र)

165 T1 om 165ab (cf v l 164) — a) V1 B Dn D10 रुद्रेभ्यो (for रुद्राणां) — b) D2 8 रुद्रेभ्य-स्तण्डिरासवान्, T2 3 G2 4 रुद्रात्तत्तंडिलोगमत्, Madras ed रुद्रात्तण्डिरथालभत् — D5 om 165cd — c) B1 2 4 D4 6–9 प्राप्त (for प्राप्तस्) T2 3 G2 4 महादेव-प्रसादात्तु (G2 °च)

166 T1 om 166 — a) V1 B2 शक्राय — b) V1 B1–3 5 Dn च, B4 [श्र]थ (for [आ]ह) T2 3 G3 4 योगेश्वरमयाय च (G2 तु) — d) T2 3 G4 साधन (sic) (for माधव) G2 गौतम प्राप्तसाधन

167 a) T1 सोप्याह (for साध्याय) — b) B8 5 Dn1 n2 समाधिष्टाय धीमते, D8 वरिष्ठायाह धी, T1 यज्ञायाह हरि प्रभु — T1 om 167cd

168 b) D8 आह वैवस्वताय च — B8 om 168c–171b D1 3 om (hapl) 168cd — c) T2 3 G2 भगवान् (for वार्ष्णेय)

169 B8 om 169 (cf v l 168) — a) V1 B (B3 om) Dn D1–10 प्राप्तो. — c) D10 [श्र]यम् (for [अ]हम्) D5 स्तवाद्योयमसूत्युघ्न — d) D5 corrupt. B5 दस्वाद्य, D1 8 वच्म्यद्य, T1 M दास्येद्य, T2 3 G2 4 त देव (for दद्म्यद्य) Dn D7–9 स्तव दद्यां ह (D8 सु )विश्रुत — e) D2 G2 स्वर्गम्, T1 M स्वर्ग्य मायुष्यमारोग्यं — f) D4 6 7 9 धर्म्यं बल्यं, T1 M बल धन्य (for धन्य बल्यं) V1 B (B3 om) Dn D10 धर्म्यं वेदेन संमित

170 B8 om 170 (cf. v l 168) T1 transp 170ab and 170cd — a) D2–9 T2 3 G2 4 चास्य (for तस्य) D1 विघ्ना V1 B1 2 5 Dn D10 नास्य विघ्न विकु( D10 तु कु )र्वन्ति — c) V1 B1 2 5 Dn1 n2 M वा (for च) B4 यातुधाना पिशाचाश्च, T2 3 G2 4 सया तुधाना भूताश्च — d) B4 च ये, D2–9 T2 3 G2 4 तथा (for अपि) D1 गुह्यका भुजगादय, T1 नैर्ऋता गुह्यका अपि

171 B3 om 171ab (cf v l 168) — a) D1 पठेत्तु, T2 3 G4 पठन्स, G2 पठेत्स (for पठेत) V1 B (B8 om.) Dn D10 M पार्थ (for भूत्वा) T1 य पठेत्तु शुचि कृष्ण — b) D2 7 यतेंद्रिय (for जितेन्द्रिय) — c) D1 वर्षं च, T1 जसा य (for वर्षं तु) T2 3 G2 4 अभय योगसिद्धिं च — d) D2 3 5 7–9 T2 3 G2 4 सोम मेधमवाप्नुयात्

Colophon — *Parvan name* B1 3 4 Dn3 D1 2 शाति — *Sub parvan* V1 B D1–3 10 M दानधर्म — *Adhy name* V1 Dn3 महादेवनामसहस्र, B1 Dn1 n2 महादेवसहस्रनाम, B3 5 महादेवस्य नामसहस्र; B4 महादेवसहस्रनामस्तव, D1–8 भगवत, शिवस्य नामसहस्र,

# १८

**वैशंपायन उवाच ।**

महायोगी ततः प्राह कृष्णद्वैपायनो मुनिः ।
पठस्व पुत्र भद्रं ते प्रीयतां ते महेश्वरः ॥ १
पुरा पुत्र मया मेरौ तप्यता परमं तपः ।
पुत्रहेतोर्महाराज स्तव एषोऽनुकीर्तितः ॥ २
लब्धवानस्मि तान्कामानहं वै पाण्डुनन्दन ।
तथा त्वमपि शर्वाद्धि सर्वान्कामानवाप्स्यसि ॥ ३
चतुःशीर्षस्ततः प्राह शक्रस्य दयितः सखा ।
आलम्बायन इत्येव विश्रुतः करुणात्मकः ॥ ४
मया गोकर्णमासाद्य तपस्तप्त्वा शतं समाः ।
अयोनिजानां दान्तानां धर्मज्ञानां सुवर्चसाम् ॥ ५
अजराणामदुःखानां शतवर्षसहस्रिणाम् ।
लब्धं पुत्रशतं शर्वात्पुरा पाण्डुनृपात्मज ॥ ६
वाल्मीकिश्चापि भगवान्युधिष्ठिरमभाषत ।
विवादे साम्नि मुनिभिर्ब्रह्मघ्नो वै भवानिति ।
उक्तः क्षणेन चाविष्टस्तेनाधर्मेण भारत ॥ ७
सोऽहमीशानमनघमस्तौषं शरणं गतः ।
मुक्तश्चास्म्यवशः पापात्ततो दुःखविनाशनः ।

---

D4 6–9 शार्वं नामसहस्रं, D5 मेघवाहनपर्वणि शिवसहस्र नाम; D10 शिवसहस्रनाम; T2 उपमन्युकृष्णसंवादे शिव सहस्रनामस्तोत्रं — *Adhy no* (figures, words or both) V1 Dn1 17 (as in text), D6 15, D10 14, T1 240, T2 3 G2 4 49, M 38 — *Śloka no* Dn1 182, D4 61, M1 185, M2 130

## 18

☞ G1 3 om this adhy (cf v 1 13 14 1) T1 om this adhy

1 $^a$) T2 G1 Kumbh. ed सु तं, T3 कृत; Madras ed सुतं (for तत) — D6 om from भद्र ते (in 1$^c$) up to स्तव (in 2$^d$) — $^d$) B4 D7 9 मे (for ते) G4 कृत्वा स्वांते महेश्वर

2 D6 om up to स्तव (in 2$^d$) (cf. v 1 1) — $^a$) D2 M मया (for मया) — $^b$) M तप्येह (for तप्यता) — $^c$) D8 पुत्रस्ते तु (for °हेतोर्) D5 मया राजन् (for महाराज) — $^d$) D2 3 वर्णित (for -कीर्तित)

3 $^a$) V1 B Dn D2 10 M ईप्सितान् (for अस्मि तान्) T2 3 G2 4 त काम — $^b$) T2 3 G2 4 ततोह (for अह वै) — $^c$) B1 तपसि (for त्वमपि) D4 6 7 9 सर्वार्थं, D5 शर्वाद्धै (for द्धि) — $^d$) D2 सर्वं (for सर्वान्) D5 अवाप्स्यसे — After 3, V1 B Dn D2 3 Kumbh. ed ins

181* कपिलश्च तत प्राह सांख्यर्षिर्देवसंमत ।
मया जन्मान्यनेकानि शक्त्या चाराधितो भव ।
प्रीतश्च भगवाञ्ज्ञान ददौ मम भवान्तकम् ।

[ (L 1) Dn3 तथा (for तत) B3 महर्षिर् (for सांख्यर्षिर्) B3 -समित, D3 सत्तम (for -समत) — (L 3) V1 B1 2 Dn3 भयांतकं, B3 4 तपोमव (for भवान्तकम्) ]

4 $^a$) V1 B Dn D2 3 10 G1 M Kumbh ed चारु (for चतु) D1 3 -शीघ्रसु (D3 °स्त)त, D9 -शीर्षसुत (for °स्तत) — $^b$) D1–3 शुक्रस्य (for श°) — $^c$) V1 Dn3 D5 अलबायन, Dn1 आलम्या°, D8 आलंभा°, T2 3 G2 4 शालपाय (G2 °व)न (for आलम्बायन) V1 B (except B3) Dn1 n2 D7 8 10 T2 3 G2 4 [ए]व, D1 6 [ए]ष (for [ए]व) — $^d$) G2 करुणात्मन, G4 कारणात्मक (for करुणा°)

5 $^d$) B2 4 5 ब्रह्मज्ञानां (for धर्म°)

6 $^a$) D4 6 अचराणाम् (for अज) D5 10 अजरामरदुःखानां — $^b$) D7 T2 3 G4 शत (for शत) D9 शत वर्षसहस्रकं — $^d$) D2 3 मया (for पुरा)

7 $^a$) V1 B Dn D10 M [आ]ह (for [अ]पि) — $^b$) V1 B Dn D10 इदं वच (for अभाषत) — G2 om (hapl) 7$^{cdef}$ — $^c$) B3 3 Dn2 D8 10 साम्नि, D8 सान्नि- (for साम्नि) — $^d$) D4 6 भवेति ह, D7 भविष्यति, M1 भवानिव (for °निति) — $^e$) D1–3 तत (for उक्त) D5 शापेन (for क्षणेन)

8 $^b$) V1 B2–5 Dn अमोघं, G2 अशेष (for अस्तौष) — $^c$) V1 B Dn D10 सत पापैस्; D5 सत शापात्, M [उ]त पापेन (for [अ]वश पापात्). — $^d$) D1–3 तेन

आह मां त्रिपुरघ्नो वै यशस्तेऽग्र्यं भविष्यति ॥ ८
जामदग्न्यश्च कौन्तेयमाह धर्मभृतां वरः ।
ऋषिमध्ये स्थितस्तात तपन्निव विभावसुः ॥ ९
पितृविप्रवधेनाहमार्तो वै पाण्डवाग्रज ।
शुचिर्भूत्वा महादेवं गतवाञ्शरणं नृप ॥ १०
नामभिश्चास्तुवं देवं ततस्तुष्टोऽभवद्भवः ।
परशुं च ददौ देवो दिव्यान्यस्त्राणि चैव मे ॥ ११
पापं न भविता तेऽद्य अजेयश्च भविष्यसि ।
न ते प्रभविता मृत्युर्यशस्वी च भविष्यसि ॥ १२

आह मां भगवानेवं शिखण्डी शिवविग्रहः ।
यदवाप्तं च मे सर्वं प्रसादात्तस्य धीमतः ॥ १३
असितो देवलश्चैव प्राह पाण्डुसुतं नृपम् ।
शापाच्छक्रस्य कौन्तेय चितो धर्मोऽनशन्मम ।
तन्मे धर्मं यशश्चाग्र्यमायुश्चैवाददद्भवः ॥ १४
ऋषिर्गृत्समदो नाम शक्रस्य दयितः सखा ।
प्राहाजमीढं भगवान्बृहस्पतिसमद्युतिः ॥ १५
वसिष्ठो नाम भगवांश्चाक्षुषस्य मनोः सुतः ।
शतक्रतोरचिन्त्यस्य सत्रे वर्षसहस्रिके ।

---

(for ततो) D2 8 विनाशिना (for °शन) —[f]) D2 M1 तेग्रं, D7 तेषां, T2 8 G2 4 तेद्य (for तेऽग्र्यं)

9 [a]) B2 partly damaged D7 जामदग्निश् T2 8 G2 4 [ऽ]थ (for च) D10 भगवान् (for कौन्तेयम्) —[b]) V1 B2–5 Dn D10 इद, B1 इह (for आह) M4 धर्मविदां (for °भृता) D10 T2 8 वर —[c]) B8 ऋषिमध्य D1–8 ततस् (for स्थितस्) V1 B Dn D10 प्राह (for तात) —[d]) B4 D5 ज्वलन्निव, G2 तपन च (for तपन्निव) V1 B1–8 5 Dn D10 ज्वलन्निव दिवाकर

10 [a]) T2 8 G4 पुरा क्षत्र, G2 स तु विप्र-, M पुरा पितृ (for पितृविप्र) —[b]) D7 पाडुनदन, T2 8 G2 4 पाडवाग्रहात्, M °वात्मज (for °वाग्रज) —[c]) D8 जगामाशु (for महादेव) — D6 om (hapl) 10[d]–11[a] —[d]) V1 B Dn D10 गतोस्मि (for गतवान्) D8 भव (for नृप) M1–8 शरणं गतवान्नृप

11 D6 om 11[a] (cf v l 10) D6 om (hapl) from ऽभवद्भव (in 11[b]) up to यशस्वी च (in 12[d]) —[c]) Dn1 n2 D1–3 ततो (for ददौ) —[d]) M1 दैवानि (for दिव्यानि) T2 G2 ह, T3 G4 हि (for मे) D5 दिव्य शस्त्राणि चैव मे

12 D6 om up to यशस्वी च (in 12[d]) (cf v l 11) —[a]) D4 5 7–9 तेम्य (for तेऽद्य) V1 B Dn D10 M पाप च ते न भविता —[b]) M अजययश् (for अजेयश्) T2 8 G4 ते जयश्च भविष्यति — D1 8–5 7 9 G2 om (hapl) 12[cd] —[c]) Dn8 transp न and ते —[d]) V1 B (except B5) Dn D2 अजरश् (for यशस्वी)

13 [a]) D10 मे; M मा (for मां) D5 एव, T2 8 G2 4 देव (for एव) —[b]) D10 भव (for शिव) —[c]) V1 B Dn D5–10 M तदवाप्तं, D4 तदव्याप्त, T3 G4 यदनाप्त (for °वाप्त) D5 पूर्वं (for सर्वं) G1 यदनाप्तैव मे सर्वं —[d]) Dn1 D4 प्रसादस् (for °दात्) — After 13, V1 B (except B1) Dn D8 Kumbh. ed ins

182* विश्वामित्रस्तदोवाच क्षत्रियोऽहं पुराभवम् ।
ब्राह्मणोऽहं भवानीति मया चाराधितो भव ।
तस्प्रसादान्मया प्राप्तं ब्राह्मण्यं दुर्लभं महत् ।

[(L 1) V1 Dn1 n2 Kumbh ed तदा (for पुरा) —(L 2) B2 भवामीति, B8 भवेदेव (for भवानीति) D8 यथा (for मया) B2 Dn8 हि (for च) B1–5 हर (for भव) —(L 3) B4 5 दुस्तर (for दुर्लभ)]

14 [a]) Dn8 [ए]व (for [ए]व) —[b]) D10 M नृप (for नृपम्) —[c]) Dn8 M1 2 4 शुक्रस्य (for श°) G2 यायाश्चक्रस्य कौंतेय (sic) —[d]) D5 मितो, M1 विभो (for चितो) B3 तदा (for मम) V1 B1 2 4 5 Dn D10 विभो धर्मोनशत्तदा, T2 8 G4 भू(G4 वृ)तो धर्मो महद्यश, G2 पिताधर्ममहद्यश (sic) —[e]) T2 3 G1 ततो (for तन्मे) D5 8 10 T2 धर्म्यं (for धर्मं) G2 अह (for यशश्) —[f]) In T3 the portion from वाददद्भव up to विद्योता (in 13 20 20[d]) is lost on a missing folio T2 G4 M [अ]ददाद् (for °दद्) V1 B Dn D10 प्रभु (for भव)

15 T8 missing (cf. v l 14)

16 T8 missing (cf. v l 14) —[a]) B D3 वशिष्टो, Dn1 n2 वरिष्ठो, D5 7 विशिष्टो (for वसिष्ठो) —[b]) D4 5 चक्षुषस्य (for चाक्षु°) G2 चाक्षुषस्यात्मनो सुत (sic) —[c]) D4 6 [अ]चिंतस्य, D8 [अ]मित्रस्य (for

वर्तमानेऽब्रवीद्वाक्यं साम्नि ह्युच्चारिते मया ॥ १६
रथन्तरं द्विजश्रेष्ठ न सम्यगिति वर्तते ।
समीक्षस्व पुनर्बुद्ध्या हर्षं त्यक्त्वा द्विजोत्तम ।
अयज्ञवाहिनं पापमकार्षीस्त्वं सुदुर्मते ॥ १७
एवमुक्त्वा महाक्रोधात्प्राह रुष्टः पुनर्वचः ।
प्रज्ञया रहितो दुःखी नित्यं भीतो वनेचरः ।
दश वर्षसहस्राणि दशाष्टौ च शतानि च ॥ १८
नष्टपानीययवसे मृगैरन्यैश्च वर्जिते ।
अयज्ञीयद्रुमे देशे रुरुसिंहनिषेविते ।
भविता त्वं मृगः क्रूरो महादुःखसमन्वितः ॥ १९
तस्य वाक्यस्य निधने पार्थ जातो ह्यहं मृगः ।
ततो मां शरणं प्राप्तं प्राह योगी महेश्वरः ॥ २०
अजरश्चामरश्चैव भविता दुःखवर्जितः ।
साम्यं समस्तु ते सौख्यं युवयोर्वर्धतां क्रतुः ॥ २१
अनुग्रहानेवमेष करोति भगवान्विभुः ।
परं धाता विधाता च सुखदुःखे च सर्वदा ॥ २२
अचिन्त्य एष भगवान्कर्मणा मनसा गिरा ।
न मे तात युधि श्रेष्ठ विद्यया पण्डितः समः ॥ २३

---

[अ]चिन्त्यस्य ) — d ) D5 7 8 G2 सहस्रके ( for °स्त्रिके ) M सत्रे द्वादशवार्षिके — G2 om 16e-17f — f ) Dn1 T2 M4 ह्युच्चरिते , D1-8 न्युच्चरिते ( for ह्युच्चा° ) D6 मम ( for मया )

17 T8 missing ( cf v 1 14 ) G2 om 17 ( cf. v 1 16 ) — a ) Dn2 D8 M रथंतरे ; D4 6 7 9 तथा तरे ( for रथन्तरं ) Dn3 D3 द्विजश्रेष्ठं — b ) D3 4 T2 मति ( for इति ) B4 मे मति ( for वर्तते ) — c ) B1 Dn1 समीक्ष्य स , Dn3 D3 9 10 समीक्ष्यस्व ( for °क्षस्व ) — d ) V1 B Dn D3 5 10 पाप ( for हर्षं ) T2 G4 M त्यज्य , Madras ed. त्याज्य ( for त्यक्त्वा ) — e ) B5 वाहिनां , D8 -यजन ( for -वाहिन ) D1-8 अवज्ञा ( D3 8 °याज्य )यजन पापम् , D4-8 सयज्ञयजन पा , T2 G4 M प्रज्ञया रहित पा°

18 T8 missing ( cf v 1 14 ) D1 om ( hapl ) 18-31 — a ) D8 T2 G4 M1 3 4 उक्तो ( for उक्त्वा ) D2 8 पुन , D4 6-8 महान् , M1 3 4 मया ( for महा ) V1 B Dn D2-4 6-10 T2 G2 4 -क्रोध ( for क्रोधात् ) M2 एवमुक्तो मया क्रोधाव् — b ) D6 ह्याह ( for प्राह ) V1 B2-5 Dn1 n2 शम्भु , B1 Dn3 शम्भु , D10 शत्रु , T2 G2 4 शक्र ( for रुष्ट ) D2 3 स वै ( for पुनर् ) — d ) V1 B1-4 Dn D2 7 M नित्य ( for नित्य ) Dn1. n3 नीतो , G2 भूतो ( for भीतो ) — G2 om 18e-56d — f ) V1 B2 transp अष्टौ and च B4 T2 G4 M शतानि दश चाष्ट च , D8 दशान्यष्टादशैव च , D1-9 शतान्यष्टौ दशैव तु ( D6 हि )

19 T8 missing ( cf. v 1 14 ) D1 G2 om. 19 ( cf. v 1 18 ) — a ) Dn D2 -पवने , G4 damaged ( for -यवसे ) — b ) B2 D8-9 T2 G4 अन्यैर्वि , M1-3 वन्यैर्वि ( for अन्यैश्च ) Dn3 मृगैर्वन्यैश्च वर्जितं , M4 मार्गैर्वन्यैर्विवर्जिते — c ) V1 B Dn3 D3 4 अयज्ञिय- ( Dn3 °ये ) , Dn1 M अयाज्ञी( M1 °ज्ञि )य , D7-9 अयाज्ञिक ( for अयज्ञीय ) D6 अयज्ञियति मे देशे ( sic ) — d ) M वृक ( for रुरु- ) D4 6-9 हिंस- ( for सिंह ) — e ) D6 मृगै — f ) D6 सदा ( for महा- )

20 T8 missing ( cf. v 1 14 ) D1 G2 om 20 ( cf. v 1 18 ) T2 om. 20ab — b ) Some unused MSS पथि ( for पार्थ ) D2-4, 7-9 [ऽ]स्मि ( for हि ) — c ) D3-9 ततो मां भगवानाह , M ततो मे शरणं प्राप्तो — d ) D2-9 T2 G4 M महा- ( for प्राह )

21 T8 missing ( cf v 1 14 ) D1 G2 om 21 ( cf v 1 18 ) — b ) B1 5 भवदुःखविवर्जित , D2-9 मत्प्रसादाद्भविष्यसि — c ) B5 ( inf lin ) त्वमस्तु , Dn1 n2 ममास्तु ( for समस्तु ) D2 3 10 शाम्यस्त्वमस्तु ते सौ( D8 तस्सौ )ख्य , D4-6 8 9 समस्त्वमस्तु तस्य( D9 ते स )ख्य , D7 समेस्त्वमस्तुत सख्य ( sic ) , T2 G4 M सौम्यत्वमस्तु वा[ऽ]स्सख्यं ( T2 G4 सौम्य ) — d ) D2 8 वर्ततां ( for वर्धतां ) D4-9 युवयोर्वर्तता मख

22 T8 missing ( cf v 1 14 ) D1 G2 om 22 ( cf v 1 18 ) — a ) D2 8 अशेषान्वै , D10 एवमेवं ( for मेष ) — b ) D2-9 G4 प्रभु ( for विभु ) — B6 om 22c-23d — c ) T2 G4 M अयं ( for पर ) G4 धर्म ( for धाता ) — d ) D4 6-9 दुःखेन ( for -दुःखे च )

23 T8 missing ( cf v 1 14 ) D1 G2 om 23 ( cf. v 1. 18 ) B5 om 23 ( cf v 1 22 ) — a ) B1 D2 4 6 7 एव , D10 रूपो ( for एष ) — T2 G4 om 23cd D6 repeats 23cd after the ref in 24 Before 23cd, D4. 6 7 9 ins जैगीषव्य उवाच — c )

जैगीषव्य उवाच ।

ममाष्टगुणमैश्वर्यं दत्तं भगवता पुरा ।

यत्नेनाल्पेन बलिना वाराणस्यां युधिष्ठिर ॥ २४

गार्ग्य उवाच ।

चतुःषष्ट्यङ्गमददात्कालज्ञानं ममाद्भुतम् ।

सरस्वत्यास्तटे तुष्टो मनोयज्ञेन पाण्डव ॥ २५

तुल्यं मम सहस्रं तु सुतानां ब्रह्मवादिनाम् ।

आयुश्चैव सपुत्रस्य संवत्सरशतायुतम् ॥ २६

पराशर उवाच ।

प्रसाद्याहं पुरा शर्वं मनसाचिन्तयं नृप ।

महातपा महातेजा महायोगी महायशाः ।

वेदव्यासः श्रियावासो ब्रह्मण्यः करुणात्मकः ॥ २७

---

B8 मम (for न मे) M द्विज (for तात) —d) B6 विद्यया पण्डितस्य स (sic), M °या तात तद्विन — V11- B4 Dn D5 ins after 23 B5 after 22ab D8 after 23ab

183* वासुदेवस्तदोवाच पुनर्मतिमतां वर ।
सुवर्णाक्षो महादेवस्तपसा तोषितो मया ।
ततोऽथ भगवानाह प्रीतो मां वै युधिष्ठिर ।
अर्थात्प्रियतरः कृष्ण मत्प्रसादाद्भविष्यसि ।
अपराजितश्च युद्धेषु तेजश्चैवानलोपमम् । [5]
एवं सहस्रशश्चान्या महादेवो वरं ददौ ।
मणिमन्थेऽथ शैले वै पुरा संराधितो मया ।
वर्षायुतसहस्राणां सहस्रशतमेव च ।
ततो मां भगवान्प्रीत इदं वचनमब्रवीत् ।
वरं वृणीष्व भद्रं ते यस्ते मनसि वर्तते । [10]
ततः प्रणम्य शिरसा इदं वचनमब्रुवम् ।
यदि प्रीतो महादेवो भक्त्या परमया प्रभुः ।
नित्यकालं तवेशान भक्तिर्भवतु मे स्थिरा ।
एवमस्त्विति भगवांस्तत्रोक्त्वान्तरधीयत ।

[B5 om lines 1-2 and B3 damaged for the same —(L 1) Dn8 D5 ततो वाच (for तदोवाच) —(L 3) B3 damaged, B5 तुतोष (for ततोऽथ) B4 5 transp आह and प्रीतो B3 Dn8 प्रीतात्मा मा (for प्रीतो मां वै) —(L 4) Dn1 n3 अर्थात् (for अर्थात्) D5 त्वत्रास्ति परतः कृष्ण (for the prior half) B8 भविष्यति —(L 5) Prior half hypermetric B3 त्व, B4 5 तु (for the first च) B2 5 युद्धे च (for युद्धेषु) D8 [अ]नलो यथा (for °लोपमम्) B6 तेजसैवानिलोपम (for the post half) —(L 6) Dn1 n3 [अ]न्यान् (for [आ]त्मा) —(L 7) D5 मणिमये (for °मन्थे) B5 च (for ऽथ) B3-6 चाराधितो, Dn1 n3 D8 सपूजितो, D5 समुध्यते (for संराधितो) —(L 8) Dn1 n3 सहस्रं (for °स्र) —(L 9) D5 om मां V1 देव (for प्रीत) —(L 10) B3 partly damaged. B1 4 5 यत्

(for यस्) —(L 11) B3 damaged, B5 D8 अब्रवीत् (for अब्रुवम्) —(L 13) B4 तु ईशाने (for तवेशान) —(L 14) B2-4 उक्त्वा स (for अस्त्विति) B1 [ए]व (for [उ]क्त्वा)]

— On the other hand, M ins after 23 T3 G1 after 23ab

184* जैगीषव्यस्तथा प्राह जगद्धाता महेश्वरः ।

24 T8 missing (cf v 1 14) D1 G3 om 24 (cf. v 1 18) D4 7 9 T2 G4 M om the ref. — After the ref, D5 repeats 23cd M reads 24ab twice —a) D2 8 शमाख्य (for ममाष्ट) —b) T2 G4 M (last four first time) मनोयज्ञेन तोषित —c) D7 8 यत्नेन (for यत्नेन) V1 [अ]नेन, D3 [अ]न्येन (for [अ]ल्पेन) D1-6 भगवान्, D7 9 बलवान्; D8 om, T2 G4 च विना (for बलिना) —d) D1-4 नराधिप (for युधिष्ठिर) T2 G4 दत्तवा( G4 °मय )न्मग वान्पुरा, M रणश्च स्याद्युधिष्ठिर — After 24, T2 G4 ins

185* पराशरश्चाह मुनिः पुरा मम च तोषितः ।

25 T8 missing (cf. v 1 14) D1 G3 om 25 (cf v 1 18) T2 G4 om 25a-27b (with the ref.) M1 2 4 om the ref. V1 B Dn D10 गर्गः; D1 6 गर्ग्यं (for गार्ग्य) —a) V1 B Dn D5 10 अददत् M तुष्टः सोऽस्य समददात् —b) B1 3 4 Dn D3 10 कला (for काल-) D3 ममातत; D8 सनातन; D1-10 M महाद्भुत (for ममा°) —d) D2 8 पार्थिव (for पाण्डव)

26 T8 missing (cf v 1 14) D1 G3 om. 26 (cf v 1. 18) T2 G4 om 26 (cf v 1 25) —a) D10 महाक्षं (for सहस्र) B4 D10 M च (for तु) —d) D4 6-9 शतायुष, D6 -शतं नृप (for शतायुतम्)

27 T8 missing (cf v 1. 14) D1 G3 om 27 (cf v 1 18) T2 G4 om 27ab (cf v 1 25) D7 9 पाराशर (for परा°) —a) V1 B1 4 Dn D4

अपि नामेप्सितः पुत्रो मम स्याद्धि महेश्वरात् ।
इति मत्वा हृदि मतं प्राह मां सुरसत्तमः ॥ २८
मयि संभवतस्तस्य फलात्कृष्णो भविष्यति ।
सावर्णस्य मनोः सर्गे सप्तर्षिश्च भविष्यति ॥ २९
वेदानां च स वै व्यस्ता कुरुवंशकरस्तथा ।
इतिहासस्य कर्ता च पुत्रस्ते जगतो हितः ॥ ३०
भविष्यति महेन्द्रस्य दयितः स महामुनिः ।
अजरश्चामरश्चैव पराशर सुतस्तव ॥ ३१
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ।
युधिष्ठिर महायोगी वीर्यवानक्षयोऽव्ययः ॥ ३२

माण्डव्य उवाच ।

अचौरश्चौरशङ्कायां शूले भिन्नो ह्यहं यदा ।
तत्रस्थेन स्तुतो देवः प्राह मां वै महेश्वरः ॥ ३३
मोक्षं प्राप्स्यसि शूलाच्च जीविष्यसि समार्बुदम् ।
रुजा शूलकृता चैव न ते विप्र भविष्यति ।
आधिभिर्व्याधिभिश्चैव वर्जितस्त्वं भविष्यसि ॥ ३४

---

[ह्]ह, M₃ 8 [आ]ह (for [अ]हं) D8 शक्र (for शर्व) — b) B1 8 D5 8 चिंतयन्, B5 Dn8 चिंतित (for [अ]चिन्तयं) — d) D8 महाबल, D5 तपा; G4 महेश्वर (for महायशा) — e) T3 M वेदावास (for वेदव्यास) — f) Dn1. n3 ब्राह्मण V1 B1 8 D (except D4 8 10, D1 om) करुणान्वित, T3 G4 °मय (for °मक)

28 T8 missing (cf v l 14) D1 G2 om. 28 (cf v l 18) — a) V1 B1 8 4 Dn3 n8 D10 अप्यसौ, some unused MSS अथासौ (for अपि नाम) — After 28ab, T2 G4 Madras ed ins

186* तदभिज्ञाय मामाह शंकरस्त्रिपुरार्दन ।
पितृकन्या वसो पुत्री शापाद्दाशगृहोदिता ।
वस्या विष्णुकृता नाम विद्यया शोधक सताम् ।

[ (L 2) Madras ed गृहोषिता (for दिता) — (L 3) Madras ed तस्यां हि दुष्कृताना च (for the prior half) G4 damaged for शोधक Madras ed सुत (for सताम्) ]

— T2 G4 om 28c–29d — c) B4 D2 7–9 कृत्वा (for मत्वा) D3 मम (for हृदि) D4–6 इति कृत्वा हृदि मतिं — d) D6 M मा (for मां) D2 4 5 7–9 सुरसत्तम

29 T3 missing (cf. v l 14) D1 G2 om 29 (cf. v l 18) T2 G4 om 29 (cf v l 28) — a) V1 B Dn D10 मयि (B4 म) सभावना यास्या (D10 तस्य), M मयि सभावितस्यास्य — b) M फल (for फलात्) D5 भविष्यसि D4 6–9 फलोत्कृ(D4 6 त्स्क)ष्टो भविष्यसि — c) B5 D4 5 सावर्ण्यस्य — d) B2 (marg as in text) 5 सप्तमश् (for र्षिश्) V1 D4–8 9 (before corr as in text) भविष्यसि

30 T8 missing (of v l 14) D1 G2 om 30 (cf v l 18) — a) D4–9 [ए]व स (for स वै) V1 B1 2 4 Dn D10 वक्ता (for व्यस्ता) — d) D8 पुत्रवान्, M पुत्रश्च (for °स्ते) B8 हि स (for हितः) D2 4–9 पुत्रवाञ्जगतो हि स

31 T8 missing (cf v l. 14) D1 G2 om 31 (cf v l 18) T2 G4 om (hapl) 31 — a) Dn8 नरेंद्रस्य (for महेन्द्रस्य) — b) D10 दैवत (for दयित) B1 च (for स)

32 T8 missing (cf v l 14) G2 om 32 (cf v l 18) — a) T5 G4 भविष्यतीति मामुक्त्वा — b) B4 तथा (for तत्र) — G4 om 32cd — d) D2–5 8 9 मुनि (for ऽव्यय) — T2 M1–8 ins after 32 G4 after 32ab

187* माण्डव्यश्चाह देवेश भक्तो लोकहिते भवे ।

[ G4 damaged for देवेश भक्तो T2 देवे च (for देवेश) ]

33 T8 missing (cf v l 14) G2 om 33 (cf v l 18) — a) Some MSS अचोरश्चोर- — b) T2 M शूल (for शूले) D6 प्रोतो (for भिन्नो) V1 B1 Dn तदा; D3 पुरा, T2 G4 सदा (for यदा) D1 8 शूले प्रोतो ह्यहं पुरा, D4 5 7–9 शूलप्रोतो ह्यह पुरा, D10 शूलभिन्न भव यदा — c) D4–6 तत्र स्थित (for तत्रस्थेन) D1 मतो (for स्तुतो) — d) D10 मा (for मां) V1 Dn नरेश्वर, B2 5 सुरेश्वर (for महे)

34 T8 missing (cf v l 14) G2 om 34 (cf v l 18) — a) G4 शूलात्प्राज् (for शूलाच्च) — b) B8 [अ]र्बुद समा, G4 समायुतं (for र्बुदम्) — c) D5 6 [अ]पि (for [ए]व) — f) T2 G4 वर्जित संम

त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥ ७९
बालानामथ वृद्धानां दासानां चैव ये नराः ।
अदत्त्वा भक्षयन्त्यग्रे ते वै निरयगामिनः ॥ ८०
एते पूर्वर्षिभिर्दृष्टाः प्रोक्ता निरयगामिनः ।
भागिनः स्वर्गलोकस्य वक्ष्यामि भरतर्षभ ॥ ८१
सर्वेष्वेव तु कार्येषु दैवपूर्वेषु भारत ।
हन्ति पुत्रान्पशून्कृत्स्नान्ब्राह्मणातिक्रमः कृतः ॥ ८२
दानेन तपसा चैव सत्येन च युधिष्ठिर ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥ ८३
शुश्रूषाभिस्तपोभिश्च श्रुतमादाय भारत ।
ये प्रतिग्रहनिःस्नेहास्ते नराः स्वर्गगामिनः ॥ ८४
भयात्पापात्तथाबाधाद्दारिद्र्याद्व्याधिधर्षणात् ।
यत्कृते प्रतिमुच्यन्ते ते नराः स्वर्गगामिनः ॥ ८५
क्षमावन्तश्च धीराश्च धर्मकार्येषु चोत्थिताः ।
मङ्गलाचारयुक्ताश्च ते नराः स्वर्गगामिनः ॥ ८६
निवृत्ता मधुमांसेभ्यः परदारेभ्य एव च ।

---

lar Statement on p 187 M1–8 om (hapl) 79–80 — a) D10 क्षातान्शातास्, G2 क्षांता दातास् V1 प्रज्ञान् — b) V1 B Dn8 D1 2 4 6 7 8 10 T8 M4 -काल- (for -काल) — c) B8 om (hapl) कृत B1 (marg as in text) -विद्या, B8 कृत्यान्

80 For the sequence in T2 3 G, see the Tabular Statement on p 187 M1–8 om 80 (cf v l 79) Dn1 T2 3 G om (hapl) 80 D1 om (hapl) 80a–81b — a) T1 अपि (for अथ) — b) B1 युवानश्च, D2 8 कृशाना, D7 om, D10 दासीना, M4 दांताना (for दासाना) T1 दांतानां चाप्यरक्षका — c) D2 8 M4 भक्षयंत्यग्रतो दत्त्वा

81 For the sequence in T2 3 G, see the Tabular Statement on p 187 D1 om 81ab (cf v l 80) D8 om (hapl) 81ab D3 transp 81 and 82 — a) D2 एव (for एते) T1 प्रोक्ता, G2 वृत्ता, M2 दिष्टा (for दृष्टा) V1 B4 Dn G3 4 एते पूर्वं विनिर्दिष्टा, B1–3 5 D10 एते पूर्वविनिर्दिष्टा — b) D4–6 नरा, D7–9 प्रेता (for प्रोक्ता) T1 निरयायैव गामिन — D8 reads 81cd after 78 T3 G om (hapl) 81c–83d — c) D4–9 गामिन, M भोगिन (for भा)

82 For the sequence in T2 3 G, see the Tabular Statement on p 187 T3 G om 82 (cf. v l 81) T1 om 82 D2 transp 81 and 82 — a) D2 [ए]व च, T1 M1 3 4 वाथ (for [ए]व तु) — b) Dn8 M1 देव- (for दैव-) D10 पित्र्येषु (for -पूर्वेषु) — After 82ab, D1 repeats 70 — c) D1–8 तत्र; M पुत्र- (for पुत्रान्) B1 भृत्यान् (for कृत्स्नान्) D4–9 प्रति तत्र पशून्सर्वान्, T1 युज्यस्यर्यान्पशून्कृत्स्नान् — d) D4–9 भोजयति च सुद्विजान्, T1 ब्राह्मणार्थे तथैव च, M °तिक्रमे कृते — After 82, D3 reads 70

83 For the sequence in T2 3 G, see the Tabular Statement on p 187 T3 G om 83 (cf. v l 81) — a) T1 महता, T2 श्रौतेन, M1–8 एतेन (for दानेन) — c) D1 -वर्तंति — d) D8 नरा स्वर्गस्य गामिन; D5 (wrongly) ते वै निरयगामिन

84 For the sequence in T2 3 G, see the Tabular Statement on p 187 D4 om. (hapl) 84 — a) D5 वा (for च) — b) V1 B Dn D10 विद्याम्, T2 श्रुविम् (for श्रुतम्) — c) Some MSS -निस्नेहास् — d) D5 (wrongly) ते वै निरयगामिन

85 For the sequence in T2 3 G, see the Tabular Statement on p 187 D10 om (hapl) 85 D3 transp 85 and 86 — a) B4 om भयाद् Dn8 प्राणात्, D2 8 T1 तापात् (for पा°) D4 6 7–9 वधाद्, T1 दोषाद्, G2 बोधाद् (for [आ]बा°) — b) G2 दरिद्राद् (for दारिद्र्याद्) T1 वाथ (for व्याधि) D2 -दर्शनाद्; D4–7 9 T2 3 G -कर्षणात् (for -ध°) — c) B3 परि; D2 प्रवि- (for प्रति) B1 4 5 यत्कृत्वा परितप्यते, Dn8 (marg) D6–9 ये कृत्यं न विमु(D5 तं न मु)चति, D4 य कृत्य नाविमुचति, S तत्कृते धनमीप्संतस् — d) T2 -भागिन (for गामिन) D6 G3 4 (all wrongly) ते वै निरयगामिन

86 For the sequence in T2 3 G, see the Tabular Statement on p 187 B3 D3 7 om (hapl) 86 D2 transp 85 and 86 — a) B1 D1 5 8 M वीराश (for धी°) — b) D1 2 4–6 8 9 चोद्यता, T G चोदिता (for चोत्थिता) — c) V1 B1 4 5 Dn D10 -संपन्ना; B2 -सयुक्ता (for युक्ताश्च) — d) V1 B (B3 om) Dn D1 10 T2 3 G1 2 4 M पुरुषा (for ते नरा) T3 G1 भागिन (for गामिन) D5 (wrongly) ते वै निरयगामिन

87 For the sequence in T2 3 G, see the Tabular

निवृत्ताश्चैव मद्येभ्यस्ते नराः स्वर्गगामिनः ॥ ८७
आश्रमाणां च कर्तारः कुलानां चैव भारत ।
देशानां नगराणां च ते नराः स्वर्गगामिनः ॥ ८८
वस्त्राभरणदातारो भक्षपानान्नदास्तथा ।
कुटुम्बानां च दातारस्ते नराः स्वर्गगामिनः ॥ ८९
सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ९०
मातरं पितरं चैव शुश्रूषन्ति जितेन्द्रियाः ।
भ्रातॄणां चैव सस्नेहास्ते नराः स्वर्गगामिनः ॥ ९१
आढ्याश्च बलवन्तश्च यौवनस्थाश्च भारत ।
ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः ॥ ९२
अपराद्धेषु सस्नेहा मृदवो मित्रवत्सलाः ।
आराधनसुखाश्चापि ते नराः स्वर्गगामिनः ॥ ९३
सहस्रपरिवेष्टारस्तथैव च सहस्रदाः ।
त्रातारश्च सहस्राणां पुरुषाः स्वर्गगामिनः ॥ ९४
सुवर्णस्य च दातारो गवां च भरतर्षभ ।
यानानां वाहनानां च ते नराः स्वर्गगामिनः ॥ ९५
वैवाहिकानां कन्यानां प्रेष्याणां च युधिष्ठिर ।

Statement on p 187 B5 om (hapl) 87–88 —[b]) B8 दारेषु (for -दारेभ्य) —[c]) B8 T1 मत्स्येभ्यस् (for मद्ये°) D2 निवृत्ताश्चैवमम्येत्य —[d]) D4 partly damaged T3 G1 2 भागिन (for गामिन) D5 (wrongly) ते वै निरयगामिन

88 For the sequence in T2 3 G, see the Tabular Statement on p 187 B5 om 88 (cf v l 87) T3 om (hapl) 88–90 —[a]) Dn1 कर्तार, D4–9 T1 2 G भर्तार (for क°) —[b]) B4 कन्याना, D1–8 कुल्याना (for कुलाना) — T1 om 88[c]–89[b] —[c]) B4 देवानां (for देशाना) —[d]) D5 G1 (both wrongly) ते वै निरयगामिन

89 For the sequence in T2 3 G, see the Tabular Statement on p 187 T3 om 89, T1 om 89[ab] (for both, cf. v l 88) B3 om (hapl) 89–99 D4 6 om (hapl) 89 G3 om (hapl) 89–90 D2 transp 89 and 90 —[a]) D10 कर्तारो (for दातारो) —[b]) V1 B2 3 D5 T2 G1 4 भक्ष्य, Dn D1–3 7–9 G3 भक्ष- (for भक्ष-) —[c]) D7 दातार, T1 2 G1 3 4 M1–3 भ(M1–3 भ)र्तारस् (for दातारस्) —[d]) V1 B (B3 om) Dn D1 7–9 पुरुषा (for ते नरा) G1 3 भागिन (for गामिन) D5 (wrongly) ते वै निरयगामिन

90 For the sequence in T2 3 G, see the Tabular Statement on p 187 T3 om 90 (cf v l 88) B3 G3 om 90 (cf v l 89) D10 om (hapl) 90 D2 transp 89 and 90 D5 reads 90 after 97 M reads 90 after 94 —[b]) D4 6–9 नराश्च; D5 वराश्च (for -सहाश्च) —[d]) D7 9 जना (for नरा) M3 3 भोगिन (for गामिन) D5 G3 (both wrongly) ते वै निरयगामि(G3 भागि)न

91 For the sequence in T2 3 G, see the Tabular Statement on p 187 B3 om 91 (cf. v l 89) D1–4 6 7 9 om (hapl) 91 T1 om (hapl) 91–94 —[a]) M ये च (for चैव) —[d]) D5 (wrongly) ते वै निरयगामिन — After 91, D5 reads 96–97

92 For the sequence in T2 3 G, see the Tabular Statement on p 187 B3 om 92 (cf v l. 89) T1 om 92 (cf v l 91)

93 For the sequence in T2 3 G, see the Tabular Statement on p 187 B3 om 93 (cf v l 89) T1 om 93 (cf v l 91) B4 D8 om (hapl) 93 Dn8 reads 93 on marg D4 transp 93 and 94 —[a]) V1 B1 Dn1 n2 D5 7–10 अपराधेषु, S (T1 om) अवरुद्धेषु, Bom ed अपराधिषु (for द्धेषु) —[b]) V1 B1 2 5 Dn D10 मृदु; D8 धर्म (for मित्र) D4 6, 7 9 सदैव धर्मवत्सला —[c]) D1–6 7–9 स्वाराध्या सुप्र (D2 3 °धा सुप्र, D8 °ध्यास्तु प्र)सादा(D4 °दा)श्च, S (T1 om.) अपराधसहाश्चैव —[d]) V1 B1 2 5 Dn D1 4 6 7–10 पुरुषा (for ते नरा) T3 भागिन (for गामिन) G3 (wrongly) ते वै निरयगामिन

94 B3 om 94 (cf v l 89) T1 om 94 (cf v l 91) D4 transp 93 and 94 —[a]) D4–9 -पुष्टारस् (sic) (for -वेष्टा°) —[b]) Dn1 D1 (before corr) 2 सहस्रश (for दा) —[d]) V1 B (B3 om) Dn D2 3 10 G3 ते नरा (for पुरुषा) T3 G1 3 भागिन (for गामिन) — After 94, M reads 90

95 B3 om 95 (cf v l 89) —[a]) D1–3 प्र (for च) —[c]) D8 रथानां (for यानानां) D1–3 च हयाना (for वाहनानां) —[d]) B4 पुरुषा (for ते नरा) T3 भागिन (for गामिन) D5 G3 (both wrongly)

दातारो वाससां चैव ते नराः स्वर्गगामिनः ॥ ९६
विहारावसथोद्यानकूपारामसभाप्रदाः ।
वप्राणां चैव कर्तारस्ते नराः स्वर्गगामिनः ॥ ९७
निवेशनानां क्षेत्राणां वसतीनां च भारत ।
दातारः प्रार्थितानां च ते नराः स्वर्गगामिनः ॥ ९८
रसानामथ बीजानां धान्यानां च युधिष्ठिर ।
स्वयमुत्पाद्य दातारः पुरुषाः स्वर्गगामिनः ॥ ९९
यस्मिन्कस्मिन्कुले जाता बहुपुत्राः शतायुषः ।
सानुक्रोशा जितक्रोधाः पुरुषाः स्वर्गगामिनः ॥ १००
एतदुक्तममुत्रार्थं दैवं पित्र्यं च भारत ।
धर्माधर्मौ च दानस्य यथा पूर्वर्षिभिः कृतौ ॥ १०१

इति श्रीमहाभारते अनुशासनपर्वणि चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

---

ते वै निरयगामिन.

96 B8 om 96 (cf v l 89) D4 6 9 om (hapl) 96–97 D5 reads 96–97 after 91 — ab) D7 8 transp कन्याना and प्रेष्याणां V1 B (B8 om) Dn D6 10 द्रव्याणा (for कन्याना) B4 प्रैष्याणा T1 विवाहानां च कर्तार प्रेष्याणा चैव भारत — c) T8 G1 [तु]वे, G8 om (for [तु]व) — d) V1 B (B8 om) D2 5 8 पुरुषा (for ते नरा) T8 -भागिन (for -गामिन)

97 For the sequence in D5, cf v l 96 B8 om 97 (cf v l 89) D4 6 9 om 97 (cf v l 96) D2 8 om. (hapl) 97–98 — b) B1 2 4 5 Dn1 n2 D8 T1 सभाप्रपा, Dn8 -प्रपासभा, D1 -सहस्रश, D5 -प्रपा सभा, D7 -सभा प्रपा (for सभाप्रदा) — c) B1 D1 7 विप्राणा, S (except T2) प्रपाणां (G8 °ना) (for वप्राणां) — d) T8 G4 भागिन (for गामिन) D6 (wrongly) ते वै निरयगामिन — After 97, D5 reads 90 While T1 ins after 97

215* भक्ष्यपानान्नदातारस्तथा पादुकदा नरा ।
ये वै स्वशक्तित कुर्युस्ते वै निरयशत्रव ।

98 B3 om 98 (cf v l 89) D2 8 om 98 (cf v l 97) — b) D10 मणीना भरतर्षभ, T1 सत्राणा चैव भारत — c) T G च कृशाना, M प्रा(M4 प्र)-कृताना (for प्रार्थि°) — d) B (B8 om) D1 10 M पुरुषा, G4 रक्षका (for ते नरा) T8 G1–8 रक्षका स्वर्गभागिन

99 B8 om 99 (cf v l 89) D10 om (hapl) 99 — a) D2 पानाना (for बीजाना) D3 रसानाम घपानां च (sic), D5–9 रथानामथ वाजीना — b) D1 पानाना; D2 8 बीजाना (for धान्याना) — d) D2–4 7–9 T1 2 ते नरा (for पुरुषा) G1 3 भागिन (for -गामिन) D6 (wrongly) ते वै निरयगामिन

100 a) B (except B5) Dn D8 8 10 तस्मिन्, D1 2 M4 य°, D4 om (for कस्मिन्) — D5 om 100bcd — d) T1 ते नरा (for पुरुषा) T8 G1 8 भागिन (for गामिन) D4 6 पुरुषा सत्यवाचका — D4 6, 7 9 ins after 100 D5 after 100a

216* गङ्गादितीर्थनिरता पितृतीर्थकराश्च ये ।
इष्टापूर्तरता ये च ते नरा स्वर्गगामिन ।

[(L 1) D6 om the prior half — (L 2) D7 9 वै (for च) D6 (wrongly) ते वै निरयगामिन (for the post half) ]

101 a) Dn8 अमुत्रार्थे, T1 सुचित्रार्थं (for अमु°) G2 एतदुक्तममुकार्थं — D10 reads 101cd twice — c) V1 B2 (marg) Dn1 D6 10 (first time) दानधर्मं (D6 °मौं), B1 2 (orig) 8 Dn8 धर्माधर्मं (for °धर्मौ) D10 (second time) T G वदान्यस्य (for च दानस्य) B4 धर्माधर्मस्य दानस्य, B5 Dn2 दानधर्मं वदान्यस्य — d) T2 स्मृतौ, T3 G1–3 कृता, G4 M कृतं (for कृतौ) V1 B Dn D10 (first time) T1 यत्पूर्वंसूरिभि कृत

Colophon — *Parvan name* B1–4 Dn3 D1 दानि — *Sub-parvan* V1 B Dn D1–6 9 10 M दानधर्म — *Adhy name* V1 B1 2 5 Dn3 D10 स्वर्गनरकवर्णन (B1 °नौ), B4 D1–9 स्वर्गनरककीर्तन, Dn1 n2 स्वर्गनरकगामिवर्णन, D1–3 स्वर्गनरकप्रापकाध्याय, T2 G1 2 नरकस्वर्गगामिपुरुषविभागनिर्णय — *Adhy no* (figures, words or both) Dn1 23, D5 22, D9 20, D10 21, T1 M 57, T2 3 G2 4 64, G1 59, G3 58 — *Śloka no* Dn1 n3 102

# २५

युधिष्ठिर उवाच ।
इदं मे तत्त्वतो राजन्वक्तुमर्हसि भारत ।
अहिंसयित्वा केनेह ब्रह्महत्या विधीयते ॥ १
भीष्म उवाच ।
व्यासमामन्त्र्य राजेन्द्र पुरा यत्पृष्टवानहम् ।
तत्तेऽहं संप्रवक्ष्यामि तदिहैकमनाः शृणु ॥ २
चतुर्थस्त्वं वसिष्ठस्य तत्त्वमाख्याहि मे मुने ।
अहिंसयित्वा केनेह ब्रह्महत्या विधीयते ॥ ३
इति पृष्टो महाराज पराशरशरीरजः ।
अब्रवीन्निपुणो धर्मे निःसंशयमनुत्तमम् ॥ ४
ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवृत्तिनम् ।
ब्रूयान्नास्तीति यः पश्चात्तं विद्याद्ब्रह्मघातिनम् ॥ ५
मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वृत्तिं हरति दुर्बुद्धिस्तं विद्याद्ब्रह्मघातिनम् ॥ ६
गोकुलस्य तृषार्तस्य जलार्थे वसुधाधिप ।
उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातिनम् ॥ ७
यः प्रवृत्तां श्रुतिं सम्यक्शास्त्रं वा मुनिभिः कृतम् ।
दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातिनम् ॥ ८
आत्मजां रूपसंपन्नां महतीं सदृशे वरे ।
न प्रयच्छति यः कन्यां तं विद्याद्ब्रह्मघातिनम् ॥ ९

## 25

1 For contents of 13 25, cf 14 App I (No 4), lines 2134-2151 — b) D1-9 [अ]शेषत (for भारत) — c) V1 B Dn D10 [अ]पि (B3 तु) कथं (for केनेह) T1 हिंसां विनैव केनेह — d) D5 -चर्या (810), T1 -वध्या (for हत्या) D3 8 पितामह (for विधीयते)

2 G3 repeats 2a-3b after 3 — a) B3 व्यासमार्गेण राजेंद्र — b) T2 यं (for यत्) — c) D1-8 [ऽ]ण (for ऽहं) — d) D2 तम् (for तद्)

3 For the repetition of 3ab in G3, cf. v 1 2 — a) B1 3 5 D8 8 वशिष्ठस्य, D7 विशि° — b) B3 शृणु, D1-8 विभो, D1-9 प्रभो (for मुने) — 3cd=1cd — c) D2 तेन (for केन) T1 हिंसां विनैव केनेह

4 a) V1 B (except B1) Dn D10 मया राजन् (for महाराज) — c) Dn1 D2 6 T G1 3 4 धर्मे, D7 M1 8 धर्मो, D10 धर्मान् (for धर्मे) B1 अब्रवीद्विपुलो धर्मो, G2 °द्ब्राह्मणो धर्मं — d) D10 नि श्रेयसम् (for नि सश यम्) D1-4 6-9 मुनि सशयमुत्तम

5 a) D1 2 तु य (for स्वयम्) — b) B1 D10 भिक्षार्थं; D1 भिक्षांते, S (except T1) भैक्षार्थे (for भि°) Dn1 गुण, T1 क्षुद्र, G3 कृत (for कृश-) B3 -वृत्तिदं, D2 -वर्तिक, D3 -वृत्तिक, D1-6 G4 -वर्तिनं (for -वृत्तिनम्) D8 भिक्षार्थे कृच्छ्रवर्तित — c) D7 भूयात् (for पश्चात्) — d) D1-9 घातकं (for घातिनम्)

6 D1-3 om (hapl) 6 T1 om (hapl) 6-9 — a) D4-6 तु (for [इ]ह) — b) G2 धर्माचारस्य भारत — d) D4-9 T2, 8 G M1 8 घातकं (for -घातिनम्).

7 T1 om 7 (cf v 1 6) G2 lacuna for 7ab — b) D3 जलार्थं, M जलाते (for जलार्थे) D4-6 ins जलार्थे परिधावत, D7-9 T2 8 G1 3 4 धर्ममभिधावत — d) D1-4 7-9 T2 8 G2-4 घातक (for घातिनम्)

8 T1 om 8 (cf. v 1 6) — a) D4 6 7 9 प्रवृत्तिं; D5 °द्धां (for त्तां) D8 T3 G य प्रवृत्त (D8 °त्तिं) श्रुतं सम्यक् — b) D1-9 च (for वा) — T3 G ins. after 8ab T2 after 8

217* जातितो ब्राह्मणानां हि महापरिभवास्तथा ।
तद्वृत्तिच्छेदन चैव तद्दारपरिभावनात् ।

[(L 1) G2 योतीतो (for जातितो) G4 वा (for हि) G2 महापरिभव चरेत् (for the post half) ]

— T3 G om. 8cd — d) D1 2 4 5 7 9 T2 -घातकं (for घातिनम्)

9 T1 om 9 (cf v. 1 6) — b) T2 अर्हसीं, T3 G M1 4 बृहतीं; M7 3 स्पृ° (for म°) B1 कुले (for वरे). — d) D1 2-5 7 T2 8 G घातकं (for -घातिनम्)

अधर्मनिरतो मूढो मिथ्या यो वै द्विजातिषु ।
दद्यान्मर्मातिगं शोकं तं विद्याद्ब्रह्मघातिनम् ॥ १०
चक्षुषा विप्रहीनस्य पङ्गुलस्य जडस्य वा ।
हरेत यो वै सर्वस्वं तं विद्याद्ब्रह्मघातिनम् ॥ ११
आश्रमे वा वने वा यो ग्रामे वा यदि वा पुरे ।
अग्निं समुत्सृजेन्मोहात्तं विद्याद्ब्रह्मघातिनम् ॥ १२

इति श्रीमहाभारते अनुशासनपर्वणि पञ्चविंशतितमोऽध्यायः ॥ २५ ॥

# २६

युधिष्ठिर उवाच ।
तीर्थानां दर्शनं श्रेयः स्नानं च भरतर्षभ ।
श्रवणं च महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः ॥ १
पृथिव्यां यानि तीर्थानि पुण्यानि भरतर्षभ ।
वक्तुमर्हसि मे तानि श्रोतास्मि नियतः प्रभो ॥ २

भीष्म उवाच ।
इममङ्गिरसा प्रोक्तं तीर्थवंशं महाद्युते ।
श्रोतुमर्हसि भद्रं ते प्राप्स्यसे धर्ममुत्तमम् ॥ ३
तपोवनगतं विप्रमभिगम्य महामुनिम् ।
पप्रच्छाङ्गिरसं वीर गौतमः संशितव्रतः ॥ ४

---

10 T2 om (hapl) 10-11 — a) V1 -निष्ठितो (for निरतो) — b) B4 वै यो (by transp) D10 यो वै मिथ्या द्विजातिषु, T1 मिथ्या तत्र शृणोति य — After 10ab, T1 ins

218* ब्राह्मणेन च तत्कुर्यात्त विद्याद्ब्रह्मघातकम् ।
साध्वाचारेषु विप्रेषु सासूयो निकृति शठ ।

— c) D7-9 मर्मातिग (D8 °क), T3 G1 3 4 मर्मादिग (G1 °क) (for °तिग) — d) D1-6 7 T1 G घातक (for घातिनम्)

11 T2 om 11 (of v l 10) — a) D1-6 य प्र (D5 यत्प्र)वृत्ति, D7 9 य प्रवृत्तिं (for चक्षुषा वि-) Some MSS प्रहीणस्य — b) T3 G पकोरथ (for पङ्गुलस्य) B1 4 D2 5 7 9 10 च (for वा) T1 पंगुकस्य जनस्य वा, M पगुक्स्य जडस्य च — c) D1-8 transp यो and वै D5 सर्वं त (for सर्वस्व) S (T2 om) हरते यश्च वित्तानि — d) D1 3-5 7 T1 3 G घातक (for -घातिनम्)

12 a) D1-9 पुरे, T2 गृहे (for वने) V1 B Dn D5 7-10 वापि, G1 3 वासो (for वा यो) — b) Dn1 युगे, D1-9 वने (for पुरे) — c) D1-4 6 कोपात्, D5 S क्रोधात्, D7-9 वापि (for मोहात्) — d) D2 आहुर् (for विद्याद्) D1-9 T G घातक (D4 °नं) (for घातिनम्)

Colophon — *Parvan name* B1 2 4 Dn3 D1 3 शांति — *Sub parvan* B Dn D1-4 6 7 9 10 M दान धर्म — *Adhy name* V1 B2 3 Dn ब्रह्मवध ; B4 ब्रह्म वधातिदेश, B6 ब्रह्मवधवर्णन, D1 ब्रह्मघातकीयं, D2 3 ब्रह्मघातीय, T2 ब्रह्महत्यासमानपातककथन — *Adhy no* (figures, words or both) Dn1 D6 23, D7 19, D10 22, T1 M 58, T2 3 G3 4 65, G1 60, G2 59 — *Śloka no* Dn1 12

## 26

1 b) D1 स्थान (for स्नान) D1-9 तथा स्नान च भारत — Dn1 D10 om. (hapl) 1c-2b

2 Dn1 D10 om 2ab (of v l 1) — c) D3 T G1 3 4 तात (for तानि) — d) D4 reads श्रोतास्मि twice V1 B1 3 6 Dn D10 M4 नियत, D1-9 प्रयत (for नि°)

3 a) V1 B1 3 4 Dn1 T G इदम् (for इमम्) D1 अगिरस, D7 से (for °सा) — b) D10 वर्गं (for वंश) D8 महाद्युतिं; D10 T2 3 G °मते (for °द्युते) — c) D4 8 इच्छामि, D6 7 9 इच्छसि (for अर्हसि) B1 भद्र तत्; S धर्मज्ञ (for भद्र ते) — d) T1 शृणु धर्ममनुत्तम

4 a) B1 तपोवन (for °वन) D10 रत (for गतं) — b) T1 अब्रवीच्च, T2 3 G M अभिवाद्य (for °गम्य), D1-3 5-9 मुनि (for मुनिम्) D4 अभिगत्य महामुनि — c) V1 D5 G2 वीर, B1-3 6 Dn D1 6-10 धीर, D4

अस्ति मे भगवन्कश्चित्तीर्थेभ्यो धर्मसंशयः ।
तत्सर्वं श्रोतुमिच्छामि तन्मे शंस महामुने ॥ ५
उपस्पृश्य फलं किं स्यात्तेषु तीर्थेषु वै मुने ।
प्रेत्यभावे महाप्राज्ञ तद्यथास्ति तथा वद ॥ ६

अङ्गिरा उवाच ।

सप्ताहं चन्द्रभागां वै वितस्तामूर्मिमालिनीम् ।
विगाह्य वै निराहारो निर्ममो मुनिवद्भवेत् ॥ ७
काश्मीरमण्डले नद्यो याः पतन्ति महानदम् ।
ता नदीः सिन्धुमासाद्य शीलवान्स्वर्गमाप्नुयात् ॥ ८
पुष्करं च प्रभासं च नैमिषं सागरोदकम् ।
देविकामिन्द्रमार्गं च स्वर्णबिन्दुं विगाह्य च ।
विबोध्यते विमानस्थः सोऽप्सरोभिरभिष्टुतः ॥ ९
हिरण्यबिन्दुं विक्षोभ्य प्रयतश्चाभिवाद्य तम् ।
कुशेशयं च देवत्वं पूयते तस्य किल्बिषम् ॥ १०
इन्द्रतोयां समासाद्य गन्धमादनसंनिधौ ।
करतोयां कुरङ्गेषु त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति विगाह्य नियतः शुचिः ॥ ११
गङ्गाद्वारे कुशावर्ते बिल्वके नेमिपर्वते ।
तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत् ॥ १२
अपां ह्रद उपस्पृश्य वाजपेयफलं लभेत् ।
ब्रह्मचारी जितक्रोधः सत्यसंधस्त्वहिंसकः ॥ १३
यत्र भागीरथी गङ्गा भजते दिशमुत्तराम् ।

---

$T_2$ विप्रो (for वीर) —$^{d}$) T G व्रतं (for व्रत)

5 Before 5, $G_4$ ins गौतम —$^{a}$) $T_{2\ 3}$ न (for मे) $T_{2\ 3}$ G सशय (for भगवन्) —$^{b}$) $Dn_1$ -सश्रय (for सशय) —$^{c}$) $T_2$ तत्सर्वं सप्रवक्ष्यामि

6 $^{a}$) $D_7$ उपस्पर्शं (for °स्पृश्य) —$^{b}$) $G_{1\ 3}$ केषु, $G_2$ om (for तेषु) $D_{8\ 9}$ सर्वेषु (for तीर्थेषु) $D_{2\ 3}$ तीर्थेषु तेषु वै मुने —$^{c}$) $T_3$ G तथा (for महा) $D_1$ प्रज्ञ —$^{d}$) $T_2$ तु (for [अ]स्ति) $D_3$ $T_2$ यथा (for तथा) $T_1$ यद्वा तद्वक्तुमर्हसि, $T_3$ G तद्यथास्तु तथा तव

7 $^{a}$) $D_{4-9}$ स($D_8$ श)रयूं चद्रभागा च —$^{b}$) $D_{4\ 6\ 8\ 9}$ चोर्मि (for ऊर्मि) $D_{1-3}$ वितस्तां चोर्मिलावर्ती —$^{d}$) B $Dn_1$ $n_2$ T G निर्मलो (for °मो) $D_{4-9}$ निर्मलो मनुजो भवेत्

8 $^{a}$) $V_1$ $B_{2-4}$ $D_{1\ 2}$ $M_4$ कश्मीर- $M_{1-3}$ मडलान् $T_1$ om from नद्यो up to ता नदी (in $8^{c}$) —$^{b}$) $D_{1-9}$ नदीं, $D_{10}$ नगात्, $T_{2\ 3}$ G -स्वन (for नदम्) —$^{c}$) M ता नदीं $D_2$ आरम्य (for आसाद्य) $G_2$ ता नदीस्तु समासाद्य —$^{d}$) $D_{2\ 3}$ शीलयन् (for वान्) — For $8^{cd}$, $D_{4-9}$ subst

219* सिन्धुमासाद्य विमला विगाह्य स्वर्गमाप्नुयात् ।

9 $^{a}$) $B_4$ प्रभाव (for °स) $G_2$ नदीना च प्रभाव च —$^{b}$) $D_{10}$ S नैमिशं —$^{c}$) $B_5$ $G_3$ दैविकाम् $B_{1\ 3\ 4}$ $D_{2\ 3\ 10}$ इदु (for इन्द्र) $D_4$ reads from मार्गं up to बिन्दु (in $9^{d}$) twice $M_4$ देविकां चित्रमार्गां च —$^{d}$) S (except $G_4$ $M_{2\ 3}$) स्वर्ग (for स्वर्ण) $D_2$ स्वर्गबिंदुं *गाह्य क — $D_3$ om $9^{e}-10^{b}$ —$^{e}$) $T_1$ M विबुध्यते, $T_{2\ 3}$ G वि($G_{1\ 3}$ व्य)बुध्यत (for विबोध्यते)

10 $D_3$ om $10^{ab}$ (cf. v l 9) $T_1$ om $10^{ab}$ —$^{a}$) D o $T_{2\ 3}$ G आलक्ष्य (for विक्षोभ्य) —$^{b}$) $V_1$ B Dn $D_{5\ 7\ 9\ 10}$ $M_3$ च (for तम्) $D_{4\ 6}$ प्रीतास्मामभि($D_6$ त्माभि[submetric])वाद्य च (sic) — $D_5$ om $10^{cd}$ —$^{c}$) $D_{10}$ S कुशेशये (for °य) $B_{4\ 5}$ देव च, $Dn_2$ देव तं (for देवत्वं) $D_{4\ 6-9}$ कुशे ($D_8$ °श) च देवपंचत्य ($D_4$ त्व) —$^{d}$) $V_1$ B $Dn_1$ $n_2$ $D_{1\ 10}$ धूयते, $Dn_3$ ध्रि, $G_2$ पूयसे (for °ते)

11 $^{a}$) $B_4$ वार्पी, $G_3$ तोय (for तोया) —$^{c}$) $V_1$ B Dn $D_{10}$ कु($B_{3\ 4}$ क)रंगे च, $D_{1-3}$ क($D_1$ कु)लिंगेषु, $D_5$ कुरकेषु, $D_6$ करकेषु, $D_{7-9}$ करजेषु, M कुरंगेषु (for कुरङ्गेषु) $D_4$ करतोयं करकेषु —$^{d}$) $D_2$ त्रिरात्रोपक्षितो नर —$^{f}$) $V_1$ B Dn $D_{10}$ प्र (for नि)

12 $^{a}$) $T_1$ गध (for गङ्गा) $V_1$ $Dn_3$ गगाद्वार कुशावर्तं —$^{b}$) $M_1$ बिलके (for बिल्वके) $B_1$ मिलि, $B_4$ D (except $Dn_3$) $T_1$ नील, $G_2$ कुश (for नेमि) $V_1$ $B_5$ $Dn_3$ -पर्यये (for पर्वते) — $T_1$ om $12^{cd}$ —$^{c}$) $D_{7-9}$ *गंगा*, S ($T_1$ *om*) तत (for तथा) —$^{d}$) $D_{3,\ 7-9}$ धुतपाप्मा, $D_{4\ 5}$ धौत, $D_{10}$ धूतपापो, M पूतपाप्मा (for धूत°)

13 $^{a}$) $Dn_3$ $D_{5\ 10}$ T G ह्रदम् (for ह्रद) —$^{b}$) $V_1$ B Dn $D_{10}$ वाजिमेध, $D_{1.\ 3\ 4\ 6\ 7}$ वाजिपेय (for वाज°) $D_5$ व्रजेत् (for लभेत्)

14 $^{b}$) $V_1$ Dn पतते, $T_{2\ 3}$ G वहते (for भजते)

महेश्वरस्य निष्ठाने यो नरस्त्वभिषिच्यते ।
एकमासं निराहारः स्वयं पश्यति देवताः ॥ १४
सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन् ।
सुधां वै लभते भोक्तुं यो नरो जायते पुनः ॥ १५
महाश्रम उपस्पृश्य योऽग्निहोत्रपरः शुचिः ।
एकमासं निराहारः सिद्धिं मासेन स व्रजेत् ॥ १६
महाह्रद उपस्पृश्य भृगुतुङ्गे त्वलोलुपः ।
त्रिरात्रोपोषितो भूत्वा मुच्यते ब्रह्महत्यया ॥ १७
कन्याकूप उपस्पृश्य बलाकायां कृतोदकः ।
देवेषु कीर्तिं लभते यशसा च विराजते ॥ १८
देशकाल उपस्पृश्य तथा सुन्दरिकाह्रदे ।
अश्विभ्यां रूपवर्चस्यं प्रेत्य वै लभते नरः ॥ १९
महागङ्गामुपस्पृश्य कृत्तिकाङ्गारके तथा ।
पक्षमेकं निराहारः स्वर्गमाप्नोति निर्मलः ॥ २०
वैमानिक उपस्पृश्य किङ्किणीकाश्रमे तथा ।
निवासेऽप्सरसां दिव्ये कामचारी महीयते ॥ २१
कालिकाश्रममासाद्य विपाशायां कृतोदकः ।
ब्रह्मचारी जितक्रोधस्त्रिरात्रान्मुच्यते भवात् ॥ २२

D1 4–9 उत्तरा भजते दिशं, D2 8 उत्तरा दिशमाश्रिता — c) V1 Dn3 त्रिस्थाने, B1–3 5 Dn1 n2 D10 त्रिस्थाने, B4 सदने, D2 निस्थाने, D4–9 [अ]नुष्ठाने (D5 °नं) (for निष्ठाने). ❀ Cn त्रिस्थाने स्वर्गमृत्युपाताले । ❀ — d) B1 -षिच्यति, D1 पश्यते, D5 10 षिंच्यते (for -षिच्यते) — f) B1 स च (for स्वय) V1 B2–5 Dn D5, 10 स पश्यति हि देवता

15 a) D4–9 नर स्नात्वा, T1 G [s]तिगंगे च (for त्रिगङ्गे च) — b) D10 इंदु (for इन्द्र-) Dn1 D8 T G [s]वित(Dn1 D8 च त)र्पयेत् (for च तर्पयन्) D4–9 स्वर्ग(D7–9 इंद्र)लोके महीयते — T1 om 15cd — c) D4–9 वसुधां, M अर्थान्वै (for सुधा वै) D1–8 सुधा वै स लभेद्भक्तो, T2 G अर्थान्वै लभते तत्र — d) T2 भोक्तु योभिलपेन्नर, G भोक्तुं यो लभते नर

16 a) D1–9 महाह्रद, T1 2 G विंवाश्रमम् (for महाश्रम) — D8 10 T8 om (hapl) 16b–17a T1 om (hapl) 16c–18b, G4 reads the same twice — c) D1 4–9 -काल, D2 -काले (for मास) — G2 om 16d–18c — d) D1 2 4–7 9 कालेन (for मासेन) G4 (both times) सं (for स)

17 For the repetition in G4, cf v l 16 D8 10 T8 om 17a, T1 G2 om 17 (for all, cf v l 16) — a) T2 G1 3 4 (both times) ह्रदम् — D1 om (hapl) 17b–19a T8 reads 17b–18b after 20a — b) D2 8 तथा नरा, D5–7 नराधिप, M3 ह्यलोलुप (for त्व°) D3 9 भृश तुगे नराधिप, T2 3 G1 3 4 (both times) भृगुतुद (T2 °दे) ह्यलोलुप, M1 2 4 °तुदे ह्य(M2 त्व)लेपके

18 For the repetition in G4, cf v l 16 For the sequence in T8, cf. v l 17 T1 om 18ab, G1 om 18abc (for both, cf v l 16) D4 om 18 (cf v l 17) — a) D1 3 6 7 M4 कन्यारूप, D5 °कूपम्, T2 3 G1 3 4 (both times) °होत्रम् (for °कूप) B1 om उप — b) D1–8 सुवेलाया, D5–9 पललायां (for बलाकाया) S (T1 G2 om, G4 both times) योग्निहो त्रपर शुचि — T8 om 18c–19a — c) D1 6 वेदेषु (for देवेषु) V1 B Dn D10 देवेषु लभते कीर्ति — d) D1 यशसा स विराजति

19 D4 om 19a (cf. v l 17). T8 om 19a (cf v l 18) — a) V1 B Dn D5 8 10 देविकायाम्, T1 2 G एककालम्, M एककाल (for देश°) — c) V1 B2 -वर्चस्क, D4 T G °स्व, D5 10 M4 °स्वं (for °स्य) B5 Dn D5–9 अश्विन्या रूपवर्चस्कं (D5 °स्वं, D7–9 °स्व), D1 corrupt, D2 8 अश्विभ्यां रूपवान्सम्यक् — d) T G [अ]सौ (for वै)

20 a) B1 3 महाभागाम् (for °गङ्गाम्) — After 20a, T8 reads 17b–18b D4–6 T8 om (hapl) 20b–21a — b) D1–8 कृत्तिकागारक, D8 9 कृत्यकागारके, M1–3 कृपिकागारके — d) D2 8 मानव, D7 10 M4 निर्मल, T2 G कर्मत (for निर्मल) B5 स्वर्गमार्गमवाप्नुयात्

21 D4–6 T8 om 21a (cf v l 20) — a) B T1 2 G2 M4 वैमानिकम्, D1 2 7–9 विमान(D1 °नि)क; D8 महासर, G1 3 4 वैतानिकम् (for वैमानिक) — B1 om (hapl) 21b–24a — b) T G कणिक(T1 °दंम; G3 4 °णिक)स्याश्रमे तथा, M मकणस्याश्रमे तथा — c) D1 4–9 पुण्ये, D2 8 चैव (for दिव्ये) T1 दिव्ये सर स्युपस्पृश्य — d) D7 कामकारी (for °चारी)

22 B1 om 22 (cf v l 21) — a) G1 3

आश्रमे कृत्तिकानां तु स्नात्वा यस्तर्पयेत्पितॄन् ।
तोषयित्वा महादेवं निर्मलः स्वर्गमाप्नुयात् ॥ २३
महापुर उपस्पृश्य त्रिरात्रोपोषितो नरः ।
त्रसानां स्थावराणां च द्विपदानां भयं त्यजेत् ॥ २४
देवदारुवने स्नात्वा धूतपाप्मा कृतोदकः ।
देवलोकमवाप्नोति सप्तरात्रोषितः शुचिः ॥ २५
कौशन्ते च कुशस्तम्बे द्रोणशर्मपदे तथा ।
आपःप्रपतने स्नातः सेव्यते सोऽप्सरोगणैः ॥ २६
चित्रकूटे जनस्थाने तथा मन्दाकिनीजले ।
विगाह्य वै निराहारो राजलक्ष्मीं निगच्छति ॥ २७
श्यामायास्त्वाश्रमं गत्वा उष्य चैवाभिषिच्य च ।
त्रींस्त्रिरात्रान्स संधाय गन्धर्वनगरे वसेत् ॥ २८
रमण्यां च उपस्पृश्य तथा वै गन्धतारिके ।
एकमासं निराहारस्त्वन्तर्धानफलं लभेत् ॥ २९

कलिंगाश्रमम्, M1-8 कपिला° (for कालिका°) — d) B6 Dn त्रिरात्रं (for °त्रान्) B3 8 D1 4-9 पुमान्, D3 नर·, D10 T1 2 G3 भयात्, M मलात् (for भवात्) V1 D8 T3 G1 3 4 त्रिरात्र मुच्यते भयात् (D8 नर·)

23 B1 om 23 (cf v 1 21) D3 transp 23 and 24 — a) G1 partly damaged D3 5 कृत्तिकायास् (for °काना) D4 5 7-9 च (for तु) — b) G1 ज्ञात्वा (for स्नात्वा) G2 यत् (for यस्) — c) B4 अर्च यित्वा (for तोष) — d) Dn3 D6 9 T3 8 G1 3 4 निर्मल (for °ल)

24 B1 om 24a (cf. v 1 21) D8 om 24 D3 transp 23 and 24 — a) D1 3 4 6-9 महासर, T1 °हर, T3 8 G °कूपम् (for °पुर) — b) V1 B Dn D10 शुचि (for नर) — c) B3 D4-9 T3 8 G चराणा (for त्रसाना) D9 reads स्थावराणां twice — d) D1.2 द्विपदा च; D7-10 M द्विपदस्वाद् (for °दाना) D4 6 T3 8 G द्विपदस्वाद्भयं जये (D4 6 व्रजे, T3 जहे)त् — For 24cd, T1 subst

220* न कचिद्भयमाप्नोति सर्वत्र लभते शुभम् ।

25 a) G1 partly damaged — b) D1-4 6-9 धुत-पाप्मा, S धूतपाप (for °पाप्मा) — c) D1-7 9 -वंशम्, S -शब्दम् (for लोकम्) — d) D4 6 रात्रो पित D2 3 T1 M1 2 4 नर·, D8 प्रभु (for शुचि) T3 8 G त्रिरात्रोपोषितो नर·

26 a) V1 B3 5 Dn शरस्तंबे, D1-9 कौश्या चैव; M3 8 कौशाब्दे च (M8 °ब्देय) (for कौशन्ते च) D1-8 कुशस्तंभे B1 3.4 D10 कुश (D10 शुक)स्तवे शरस्तंबे, T1 कोशाब्दे तु नरस्तंबे, T3 8 G के (T3 8 कै)शाब्दे तु शार, M1 4 कौशाब्देय शार° — b) T1 -परे (for पदे) — c) D2 8 स्नात्वा; M3 8 सेव्यै (for स्नात) V1 B Dn अपा प्रपतनासेवी, D1-9 अपा प्रपतन सेव्य (D6 °व्य), D10 T1 अपा प्रपतने सौम्य, T3 8 G आप प्रवर्तने सौम्य, M1 °तरणे सेव्यै — d) B1 3 4 D1-10 G4 [ऽ]प्सरसां; D8 सोप्सरसो (hypermetric), T G1-3 M चाप्सरो- (for सोऽप्सरो)

27 a) B3 (marg as in text) चक्र (for चित्र). D1-6 वनस्थाने (for जन°) B4 चित्रकूटवनस्थाने — d) D4 6 7 9 राज्यलक्ष्मीं (for राज°) D1-3 नियच्छति (for निग°) V1 B Dn D8 10 राज (D8 ज्य)लक्ष्म्या निषेव्यते, D5 T1 राज्यलक्ष्मीं स गच्छति; G1 राज-लक्ष्मीर्न ग°

28 b) V1 B1-4 Dn D10 उपित्वा च, D1-8 व्युष्य चैव; T1 त्रिरात्रम्, T3 8 G उपोष्यैव (for उष्य चैव) V1 D4 6 T8 G2 M1 ते (for च) B5 उपित्वा व्यभि षिच्य च — After 28ab, V1 B3-5 T1 M1-8 read 29c–30b and B1 reads 29cd, for the first time, repeating them in their proper places B2 Dn D10 T3 8 G M4 om 28c–29b — c) D1 om त्रींस् D6 om स D4 सदधार्य (sic) (for स संधाय) V1 B (B2 om.) त्रिरात्रोपोषितो भू (B1 त स्ना, B5 °सो ग)त्वा, D2 8 त्रीस्त्रिरात्रावसन्राजन् (sic), D6 त्रिस्त्रिरात्रान्समाधाय, D7-9 त्रयस्त्रिरात्रान्सधाय; T1 त्रिरात्रमभिसधाय

29 B2 Dn D10 T3 8 G M4 om 29ab (cf v 1 28). — a) V1 B (B2 om) रम्ये चैव, D4 6-9 रमण्याश्च, T1 °णीयाम् (for ण्यां च) D1-8 रमण्यां समुपस्पृश्य — b) V1 गधतालिके, B1 4 D1-6 °तारके, T1 °कालिके (for °तारिके) B3 5 तथैव गधतारके, M1-8 तथा वै गंड-कारिके — V1 B3-5 T1 M1-8 read 29c–30b and B1 reads 29cd, for the first time, after 28ab — c) V1 B (except B2) (all first time) Dn D4 5 10 T1 (first time) 3 8 G M1-8 (last three first time) 4 एकपक्षं (for °मासं) D3 निराहार — d) T1 (first time) 3 8 G M1-3 (last three first time) 4 धर्मं (G4 अ)तर्धान (for स्वन्त°)

30 For the repetition in V1 B3-5 T1 M1-3, cf.

कौशिकीद्वारमासाद्य वायुभक्षस्त्वलोलुपः ।
एकविंशतिरात्रेण स्वर्गमारोहते नरः ॥ ३०
मतङ्गवाप्यां यः स्नायादेकरात्रेण सिध्यति ।
विगाहति ह्यनालम्बमन्धकं वै सनातनम् ॥ ३१
नैमिषे स्वर्गतीर्थे च उपस्पृश्य जितेन्द्रियः ।
फलं पुरुषमेधस्य लभेन्मासं कृतोदकः ॥ ३२
गङ्गाह्रद उपस्पृश्य तथा चैवोत्पलावने ।
अश्वमेधमवाप्नोति तत्र मासं कृतोदकः ॥ ३३
गङ्गायमुनयोस्तीर्थे तथा कालंजरे गिरौ ।
षष्टिह्रद उपस्पृश्य दानं नान्यद्विशिष्यते ॥ ३४
दश तीर्थसहस्राणि तिस्रः कोट्यस्तथापराः ।
समागच्छन्ति माघ्यां तु प्रयागे भरतर्षभ ॥ ३५
माघमासं प्रयागे तु नियतः संशितव्रतः ।
स्नात्वा तु भरतश्रेष्ठ निर्मलः स्वर्गमाप्नुयात् ॥ ३६
मरुद्गण उपस्पृश्य पितॄणामाश्रमे शुचिः ।
वैवस्वतस्य तीर्थे च तीर्थभूतो भवेन्नरः ॥ ३७
तथा ब्रह्मशिरो गत्वा भागीरथ्यां कृतोदकः ।
एकमासं निराहारः सोमलोकमवाप्नुयात् ॥ ३८

---

v l 29 —[a]) T1 (second time) तीर्थम्, T2 -तीरम्, T3 G M1-3 (last three second time) पारम् (for -द्वारम्) V1 (both times) B1 2 3-5 (last three both times) Dn D10 M1-3 (last three first time) 4 कौशिकीं तु समासाद्य, T1 (first time) काशिकाह्रदमासाद्य —[b]) D1 3 स्वलाधिके (sic), D7-9 जितेंद्रिय, T1 (first time) निराश्रय, T1 (second time) त्वलाविक (sic), T2 3 G1 3 4 स्वलोपक, M1-3 (all both times) 4 स्वलोपक (for स्वलोलुप) D4 6 वायुभक्ष्य(D6 om क्ष्य)स्वलाप(D6 °पि)क —[d]) T1 आप्नोति वै (for आरोहते)

31 [a]) Dn2 D7-9 स्नात्वा, D1 M1 2 4 स्नायेद् (for स्नायाद्) — D4-7 9 T1 om 31[cd] —[c]) B3 4 D10 विगाहते, D5 M1-3 °ह्यते (for °हति) D1-3 विगाह्य च निरालम्बम्, T2 3 G °हितोप्यनालम्बे, M4 °ह्यते ह्यनालम्बे —[d]) B1 आलुक वै (sic), B2 (marg as in text) 3 5 S (T1 om) अन्यक्ष वै, B4 अक्षय वै, D1 2 एवमेव (for अन्धकं वै) D10 अक्षयत्वमवाप्नुयात्

32 [a]) D10 नैमिषे S नैमिशे (T1 °षे) स्वर्गप्रस्थे- (T1 G2 पृष्ठे)षु —[b]) B1 4 D1 3 यतेंद्रिय —[d]) T1 G1 M4 मास (for मासं)

33 D3 om (hapl) 33 —[a]) Dn1 गंगाह्रद, T G गंगाह्रदम् —T1 om 33[bc] —[b]) B5 D2 [इ]त्पलावने, D1 M1 °वते, T2 G1 3 वृत्ता, T3 G2 4 °वृत (for °वने) — V1 B Dn D5 10 repeat 33[cd] after 34[ab] —[c]) V1 B Dn D5 10 (all second time) दशाश्वमेधानाप्नोति, T2 3 G2 4 अर्धाश्वमेधमाप्नोति —[d]) D1 6-9 transp तत्र and मास T1 अश्वमेधफल लभेत्

34 [a]) B1 T2 3 G मध्ये (for तीर्थे) B3 यमुना गंगयोस्तीर्थे —[b]) B5 कालाजरे, Dn3 D9 कालंजिरे, D1 कालगने, D2 कालाजने, D3 कालजरं, D4-7 कालिंजिरे, D8 कालोंजिरे, D10 कालगिरे, T1 कारंजले (for कालजरे) T2 3 G तीर्थे काला(G2 4 °लिं)जने गिरौ — After 34[ab], V1 B Dn D5 10 repeat 33[cd] —[c]) B1 3-5 D10 षष्टीह्रद, D1 4 7 9 T1 3 G M षष्टिह्रद (T1 3 G °दम्), T2 गंगाह्रदम् (for षष्टिह्रद) —[d]) V1 B Dn चान्न(B5 चाचु)दानाद्, M दानान्नान्यद् (for दानं ना) G4 विधीयते (for विशिष्यते) T1 सर्वक्रतुफलं लभेत्

35 [a]) M4 सहस्राणा —T2 om 35[c]-38[b] —[c]) D10 माघ्या च, S (except G3, T2 om) [अ]मावास्या (for माघ्यां तु) —[d]) M प्रयागे मुनिसत्तम

36 T2 om 36 (cf v l 35) —[a]) B1 माघमासि, B4 D10 T3 G °मासे, T1 मासि मासि, M1-3 मासे मासे, M4 मास मास (for माघमासं) —[b]) D1-3 यासित (for संशित) D1-3 नियत सयतेंद्रिय —[c]) D10 [अ]त्र (for तु) M वै मुनि (for भरत) —[d]) G3 4 निर्मल (for °ल)

37 T2 om 37 (cf v l 35) —[a]) G3 मरुद्गणम् —[b]) M चाश्रमे (for आ°) —[c]) D5 G वैवस्वते च (for स्वतस्य) B1 तीर्थे तु, D9 T1 तीर्थेषु (for तीर्थे च)

38 T2 om 38[ab] (cf v l 35) —[a]) S (T2 om) अथ (for तथा) V1 B Dn D10 ब्रह्मसरो, D1-3 °शिला (for °शिरो) —[d]) D तत स्वर्गम् (for सोमलोकम्) D5 लोक सोमस्य चाप्नुयात्, T1 निर्मल स्वर्गमा° — After 38, D1 6-9 read 42-44, while the

कपोतके नरः स्नात्वा अष्टावक्रे कृतोदकः ।
द्वादशाहं निराहारो नरमेधफलं लभेत् ॥ ३९
मुञ्जपृष्ठं गयां चैव निर्ऋतिं देवपर्वतम् ।
तृतीयां क्रौञ्चपादीं च ब्रह्महत्या विशुध्यति ॥ ४०
कलश्यां वाप्युपस्पृश्य वेद्यां च बहुशोजलाम् ।
अग्नेः पुरे नरः स्नात्वा विशालायां कृतोदकः ।
देवह्रद उपस्पृश्य ब्रह्मभूतो विराजते ॥ ४१
पुरापवर्तनं नन्दां महानन्दां च सेव्य वै ।
नन्दने सेव्यते दान्तस्त्वप्सरोभिरहिंसकः ॥ ४२
उर्वशीकृत्तिकायोगे गत्वा यः सुसमाहितः ।
लौहित्ये विधिवत्स्नात्वा पुण्डरीकफलं लभेत् ॥ ४३
रामह्रद उपस्पृश्य विशालायां कृतोदकः ।
द्वादशाहं निराहारः कल्मषाद्विप्रमुच्यते ॥ ४४
महाह्रद उपस्पृश्य शुद्धेन मनसा नरः ।

---

sequence in D5 after 38 is $42^a$–$44^b$, $45^{cd}$, $39^a$–$41^b$, 222*, $41^{ef}$, $45^{ab}$, $41^c$, 223*, $41^d$, $44^{cd}$

39 For the sequence in D5, cf. v l 38 — $^a$) Dn1 n2 उत्पातके, D1 कफोडके, D2 8 कहोडके, D4–9 कपोटके (for °तके) — $^b$) T1 अष्टावक्रकृतोदके — T2 3 G read $39^{cd}$ after $46^{ab}$ — $^c$) T1 कृताहारो (for निरा°)

40 For the sequence in D5, of v l 38 B3 om $40^{ab}$ — $^a$) D1 2 मुडपृष्ठ, D4–6 तुडस्पृष्ठ, M1–3 मुर्जीपृष्ठ, M4 मुडीपृष्ठं (for मुञ्जपृष्ठ) V1 B1 2 4 5 Dn D10 अश्म( B2 [orig ] 5 मुज, D10 मुड )पृष्ठे गयाया च, D8 7-9 मुड( D7 अढ )पृष्ठ गवा चैव, T2 3 G1 3 4 मुडे ब्रह्म गवां चैव — $^b$) D6 8 निरुर्ति, D9 निरुत; T1 सुरार्चि, M1 निरुचीन्, M2 3 निरुच, M4 निर्निधन् (sic) (for निर्ऋतिं) V1 B1 2 4 5 Dn D10 नि( D10 अ )रविंदे च पर्वते — $^c$) B5 Dn D8 क्रौंचपद्या, D4 °पादा (for पादीं) Dn3 तु (for च) V1 B1–4 D10 तृतीयाया क्रौंचपद्या, T2 3 G तृतीयक्रौंचपादे ( G2 °पद्यां ) च, M तृ( M1 द्वि )तीय क्रौं( M4 यक्रौं )चपार्ते च — $^d$) B2 ब्रह्महत्या D4–7 9 [अ]पि (for वि ) B6 M -शुध्यते, D8 10 लीयते (for -शुध्यति) Dn1 n2 ब्रह्महत्या विशुध्यते, T2 3 G हत्या विशोधयेत् — For $40^{cd}$, T1 subst

221* तृतीयं पर्वत क्रौञ्च शुध्यते ब्रह्महत्यया ।

41 For the sequence in D5, cf v l 38 — $^a$) V1 B Dn कलविंकम्, D1 8–10 कलस्या (D1 श्यां, D10 °शां) चापि, D4 6 7 °स्या वापि, T G1–3 M कलापि( M1 वि )काम्, G4 कगालीं*म् (for कलश्या वापि) — $^b$) D1 8 विद्यां (for वेद्यां) B1 2 4 जलं (for -जलाम्) V1 B3 5 Dn1 n2 D2 त्रि( B3 वे )धाच बहुशोजलं, Dn3 त्रिधाच बहुयोजन, D4–9 वेद्यां चैव कृतोदक, D10 ब्रह्मभूतो विराजते, T G वेदा( G2 देवा )श्च बहुशोजलं — After $41^{ab}$, D5 ins

222* एकमास निराहारो वाजिमेधफल लभेत् ।

— T1 om $41^{cd}$ — After $41^c$, T2 3 G read $44^c$–$46^b$ While N ins after $41^c$

223* अग्निकन्यापुरे वसेत् ।
करवीरपुरे स्नात्वा

[ (L 1) D4 6 -कन्य पुर, D5 7–9 -कन्यापुर — (L 2) D4, –9 करवीरे पुन स्नात्वा ]

— $^d$) D4–9 विपाशाया (for विशालाया) — B4 om. $41^e$–$42^d$ T1 reads $41^{ef}$ twice — $^e$) T1 (second time) 2 3 G1 2 देवहदम् T1 (first time) सर्वपाप विनिर्मुक्तो — $^f$) D7 पूतो (for -भूतो) T1 (second time) भवेन्नर (for विराजते)

42 For the sequence in D5, of v l 38 B4 om 42 (cf v l 41) D3 om 42–44, D4, 6 7 9 read the same after 38 — $^a$) D4–7 9 प्राप्य (for नन्दा) V1 B (B4 om) Dn D10 पुनरावर्तनंदा च, T1 प्रवर्तना च नदां च, T2 3 G4 तथा प्रवृत्तनंदा च, G1 2 तथा (G2 दा) प्रवर्तनदा च, G3 महाप्रवर्तनदा च; M तथा प्रपद्य नदां च — $^b$) D4–7 9 उपनद (for महानन्दां) T2 सेवते (for सेव्य वै) D2 8 महानदं निषेव्य च — $^c$) G1 सेवसे — $^d$) D7 9 om तु D2 अलंकृत (for अहिंसक)

43 For the sequence in D5, cf. v l 38, and for that in D4 6 7 9, cf v l 42 D8 om 43 (cf v l 42) T1 om $43^{ab}$ — $^a$) B1 3 Dn D1 6 10 उर्वशीं (for °शी) D2 8 तिलका (for -कृत्तिका) D5 उर्वशीं कृत्ययोगेन — $^b$) V1 B Dn D10 गत्वा चैव, T2 3 G M1–3 कृतवास, M4 कृत्वा वै य (for गत्वा य सु) — $^d$) D5 10 S पौंडरीक (for पुण्ड°)

44 For the sequence in D5, cf v l 38, and for that in D4 6 7 9, cf. v l 42 D8 om 44 (cf v l 42) T2 reads $44^{ab}$ twice — $^a$) B5 Dn2 T1

एकमासं निराहारो जमदग्निगतिं लभेत् ॥ ४५
विन्ध्ये संताप्य चात्मानं सत्यसंधस्त्वहिंसकः ।
षण्मासं पदमास्थाय मासेनैकेन शुध्यति ॥ ४६
नर्मदायामुपस्पृश्य तथा शूर्पारकोदके ।
एकपक्षं निराहारो राजपुत्रो विधीयते ॥ ४७
जम्बूमार्गे त्रिभिर्मासैः संयतः सुसमाहितः ।
अहोरात्रेण चैकेन सिद्धिं समधिगच्छति ॥ ४८
कोकामुखे विगाह्यापो गत्वा चण्डालिकाश्रमम् ।
शाकभक्षश्चीरवासाः कुमारीर्विन्दते दश ॥ ४९
वैवस्वतस्य सदनं न स गच्छेत्कदाचन ।
यस्य कन्याह्रदे वासो देवलोकं स गच्छति ॥ ५०
प्रभासे त्वेकरात्रेण अमावास्यां समाहितः ।
सिध्यतेऽत्र महाबाहो यो नरो जायते पुनः ॥ ५१
उज्जानक उपस्पृश्य आर्ष्टिषेणस्य चाश्रमे ।
पिङ्गायाश्चाश्रमे स्नात्वा सर्वपापैः प्रमुच्यते ॥ ५२
कुल्यायां समुपस्पृश्य जप्त्वा चैवाघमर्षणम् ।
अश्वमेधमवाप्नोति त्रिरात्रोपोषितः शुचिः ॥ ५३
पिण्डारक उपस्पृश्य एकरात्रोषितो नरः ।

---

रामह्रदम्, M4 महाह्रद — D1 om (hapl) $44^b$–$45^a$ G1 reads $44^{bcd}$ twice — $^b$) V1 B Dn D10 T2 (second time) G2 विपाशाया, D4–7 9 विमलाया (for विशा°) — T2 3 G read $44^c$–$46^b$ after $41^{abc}$, T3 G2–4 reading $44^{cd}$ twice — $^c$) T3 G2 (both first time) एकपक्षं (for द्वादशाहं) T2 3 (first time) G1 (second time) 2–4 (last three first time) विशेषाणा (for निराहार) — $^d$) D5 प्रति (for विप्र-)

45 For the sequence in D5, cf v l 38, and for that in T2 3 G, cf v l 44 D1 om $45^a$ (cf v l 44) — $^a$) G4 गंगा (for महा) T G ह्रदम् — T1 om $45^{bc}$ M om (hapl) $45^d$–$47^c$ — $^d$) D10 जामदग्न्य - D1–3 फल (for गतिं) D4 6–9 वाजि (D8 9 °ज )पेयफल लभेत्, D5 जमदग्निपद व्रजेत्, T1 महत्स्वर्गफल लभेत्

46 For the sequence in T2 3 G, cf v l 44 M om 46 (cf v l 45) — $^a$) T3 सतप्य D1–3 बिले सतर्प्य (D1 °प्य ) चात्मान — T1 om $46^{bc}$ — $^b$) G3 सत्यसिद्धस् (for °संधस्) — After $46^{ab}$, T2 3 G read $39^{cd}$ — $^c$) V1 B Dn D8 10 विनयात्तप आस्थाय, T2 3 G कुमारपदमा° — $^d$) G1 [ए]तेन (for [ए]केन) V1 B Dn D10 T1 सिध्यति (for शु°)

47 M om $47^{abc}$ (cf v l 45) D3 om. 47 — $^b$) B5 Dn1 n2 D5 शूर्पारकोदके, D1 3 T G शूर्पाकरो° — $^c$) D1 एकं सकृत्, D4–9 एकमासं (for पक्ष) — $^d$) T1 भवेन्नर (for विधीयते) D8 महाराज विशुध्यति, D1–9 राजसूयफल लभेत्

48 $^a$) D5 T2 3 G3 4 M जबुमार्गे — $^b$) V1 सयात, D7 G2 3 सयुत, T1 प्रयत, G1 संयुक्त (for संयत).

49 $^a$) D1–3 कूर्मोन्मुखे, D4–9 कूर्मामुखे, T1 काला° (for कोका°) V1 B Dn [अ]थ (for [अ]पो) — $^b$) B3–5 Dn3 D2 7 8 चाण्डालिकाश्रम, Dn1 n2 चांज°; D10 चण्डि°, T2 3 G तद्रु (for चण्डा°) T1 गत्वा च तुवराश्रम (sic) — $^c$) Dn1 T1 शा( T1 का )कपक्षश् (for शाकभक्षश्) G4 शाकभक्ष निराहार — $^d$) S (except T1) कुमार्यो (for रीर्)

50 T1 om 50 — $^a$) D1–7 9 भवन (for सदनं) — $^b$) D1–3 च गच्छेत्, T2 3 G गच्छेद्वै (for स गच्छेद्) — $^d$) D1–9 देवलोके

51 $^a$) B4 om, D10 च (for तु) — $^b$) D4 त्वमावास्यां — $^c$) T2 3 G सिध्यति V1 B Dn तु; D10 च (for ऽत्र) D5 महाराजन् (for °बाहो) — $^d$) D1–9 न (for यो) V1 B Dn D2 T2 3 G [ऽ]मर; M मनु (for पुन) — For $51^{cd}$, T1 subst

224* दिवं व्रजेन्महाबाहो सर्वपापै प्रमुच्यते ।

52 $^a$) D4 6 उज्जानकम्, D5 उज्जातव (sic), D10 T2 3 G गुजा( G2 °जा )नदम्, M1–3 उज्जानुक (for °नक) — $^b$) D1 2 अर्ष्टिषेणस्य, G1 आदिष्टेणस्य (sic) — T1 om $52^{cd}$ — $^c$) D5 पिंगाया, S (T1 om) गगायाश् — $^d$) M वि- (for प्र)

53 $^a$) D1 3 तुलाया, D2 6–9 तुल्याया (for कु°) D10 कुल्याया च समुपस्पृश्य — $^b$) T1 स्नात्वा (for जप्त्वा) — $^d$) V1 B Dn1 n2 D10 नर, Dn3 [ऽ]मर (for शुचि)

54 G3 om (hapl) 54 — $^a$) Dn1 पिंगारक; D10 G2 पिंडारकम्; G1 °कर — T1 om $54^{bc}$ — $^b$) D2 3 5 T2 3 G1 2 4 त्रिरात्रोपोषितो नर, D1 6 एकरात्रोपोषितो नर (hypermetric) — $^c$) Dn1 अग्नि

अग्निष्टोममवाप्नोति प्रभातां शर्वरीं शुचिः ॥ ५४
तथा ब्रह्मसरो गत्वा धर्मारण्योपशोभितम् ।
पुण्डरीकमवाप्नोति प्रभातां शर्वरीं शुचिः ॥ ५५
मैनाके पर्वते स्नात्वा तथा संध्यामुपास्य च ।
कामं जित्वा च वै मासं सर्वमेधफलं लभेत् ॥ ५६
विख्यातो हिमवान्पुण्यः शंकरश्वशुरो गिरिः ।
आकरः सर्वरत्नानां सिद्धचारणसेवितः ॥ ५७
शरीरमुत्सृजेत्तत्र विधिपूर्वमनाशके ।
अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः ॥ ५८
अभ्यर्च्य देवतास्तत्र नमस्कृत्य मुनींस्तथा ।
ततः सिद्धो दिवं गच्छेद्ब्रह्मलोकं सनातनम् ॥ ५९
कामं क्रोधं च लोभं च यो जित्वा तीर्थमावसेत् ।
न तेन किंचिन्न प्राप्तं तीर्थाभिगमनाद्भवेत् ॥ ६०
यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च ।
मनसा तानि गम्यानि सर्वतीर्थसमासतः ॥ ६१
इदं मेध्यमिदं धन्यमिदं स्वर्ग्यमिदं सुखम् ।
इदं रहस्यं देवानामाप्लाव्यानां च पावनम् ॥ ६२
इदं दद्याद्द्विजातीनां साधूनामात्मजस्य वा ।

---

होत्रम् ( for ष्टोमम् ) — d ) D4 6 रजनीं ( for शर्वरीं ) T1 अग्निष्टोमफलं लभेत्

55 D1-3 7 9 G4 om ( hapl ) 55 — a ) Dn1 ब्रह्मरसो ( for °सरो ) D4-6 महाब्रह्मशिरो स्नात्वा ( sic ) — b ) D3 सेवितं ( for -शोभितम् ) D5 ब्रह्मारण्योपशोभितं, T1 धर्मारण्ये च शो° — c ) D5 6 T2 3 G3 M1-3 पौंडरीकम् ( for पुण्ड ) — d ) D5 रजनीं ( for शर्वरीं ) V1 B Dn D3 10 उपस्पृश्य नर· शुचि

56 a ) Dn3 D1-5 T G मैनाक ( for के ) — T1 om 56bc — b ) V1 संध्या; D4-9 तीर्थम् ( for संध्याम् ) Dn3 उपासते ( for स्य च ) — c ) D2-6 [अ]थ, G4 तु ( for च ) T2 3 G2-4 M मोर्हं, G1 damaged ( for मास ) D7-9 कामदिके( D9 का )थ वै मास ( sic ) — d ) Dn1 n2 सर्वयज्ञ , D4 6-9 अश्वमेध ; D10 सोम° ( for सर्व ) — After 56, N ins

225* कालोदकं नन्दिकुण्डं तथैवोत्तरमानसम् ।
अभ्येत्य योजनशताद्भ्रूणहा विप्रमुच्यते ।
नन्दीश्वरस्य मूर्तिं तु दृष्ट्वा मुच्येत किल्बिषैः ।
स्वर्गमार्गे नर· स्नात्वा स्वर्गलोकं स गच्छति ।

[ ( L 1 ) B1 नाग्नि ( for नन्दि- ) Dn1 n2 च ( for [ए]व ) — ( L 2 ) D1 मत्येत्य , D10 अन्योन्य- ( for अभ्येत्य ) Dn3 D4 5 [अ]पि प्र-, D7 9 [अ]पि वि ( for विप्र° ) D3 भ्रूणहापि विशुध्यति , D10 °हत्या विधीयते ( for the post half ) — ( L 3 ) B1 किल्बिषात् — ( L 4 ) D4-9 सूर्य- ( for स्वर्ग ) V1 B Dn D10 मह ( for स्वर्ग- ) D1-3 5 10 च , D4 6-9 तु ( for स ) ]

While G2 ins 226* after 56

57 G2 om 57a–58b — b ) D10 शंकरस्य गुरुर्गिरि — c ) D1 3 -सत्त्वानां, D2 भूताना ( for रत्नानां ). — T G1 3 4 ins after 57 G2 after 56

226* दर्शनाद्गमनात्पूतो भवेदनशनादपि ।
[ T1 दशदिनाद् ( for अनशनाद् ) ]

58 G2 om 58ab ( cf v 1 57 ) T G1 3, 4 om 58ab — a ) D2 3 विसृजेत् ( for उत्सृ° ) — b ) M अनाशक ❀ Cn अनाशके अनशनव्रते कृते सति । ❀ — d ) D1 T2 G1-3 वेदासको, D10 °विद् ( for वेदान्तगो )

59 a ) S अभ्यर्च्य देवांस्तत्रस्थो ( G4 M °स्थान् ) — b ) T1 om from नम up to दिव ( in 59c ) V1 D10 मुनिं V1 B5 Dn3 G3 ( inf lin as in text ) तदा ( for तथा ) — c ) S ( T1 om ) मुनिर् ( for दिव ) — d ) T1 ब्रह्म * * सलोकता

60 a ) Dn1 D4, 5 काम ( for काम ) — b ) V1 D6 7-9 आविशेत्; T1 आचरेत् ( for आवसेत् ) D4 6 जित्वा वै तीर्थमाविशेत् — c ) B4 D4-6 M2 अप्राप्त, T G M1 3 4 अप्राप्य ( for न प्राप्त ) D1 तत किंचिन्न सम्प्राप्तं

61 a ) B2 ( marg as in text ) चान्यानि ( for [अ]गम्यानि ) — c ) D2 3 मार्गेत ( for गम्यानि ) — d ) D4-9 सर्वाण्येव , T2 3 G सर्वतीर्थे ( for °तीर्थ- ). V1 B Dn D1 3 समीक्षया , D10 समाहितै ; T1 -फलं लभेत् ( for -समासत ) D2 सर्वतीर्थमपेक्षया

62 a ) V1 B Dn1 n2 D10 T1 पुण्यम्, Dn3 om , D1 धर्म्यम्, T2 3 G M मान्यम् ( for धन्यम् ) — b ) D4 6 8 9 सर्वस्य वै ( for स्वर्ग्यमिद ) V1 B Dn D10 अनुत्तम ( for इद सुखम् ) D5 7 S इदं स्वर्ग( D5 7 सर्व )स्य वै सुखं — c ) Dn1 n2 D5 10 G2 M3 वेदानाम् ( for देवा° ) — d ) V1 B Dn D10 Cnp आप्लाव्य

सुहृदां च जपेत्कर्णे शिष्यस्यानुगतस्य वा ॥ ६३
दत्तवान्गौतमस्येदमङ्गिरा वै महातपाः ।
गुरुभिः समनुज्ञातः काश्यपेन च धीमता ॥ ६४
महर्षीणामिदं जप्यं पावनानां तथोत्तमम् ।
जपंश्चाभ्युत्थितः शश्वन्निर्मलः स्वर्गमाप्नुयात् ॥ ६५
इदं यश्चापि शृणुयाद्रहस्यं त्वङ्गिरोमतम् ।
उत्तमे च कुले जन्म लभेज्जातिं च संस्मरेत् ॥ ६६

इति श्रीमहाभारते अनुशासनपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## २७

वैशंपायन उवाच ।
बृहस्पतिसमं बुद्ध्या क्षमया ब्रह्मणः समम् ।
पराक्रमे शक्रसममादित्यसमतेजसम् ॥ १
गाङ्गेयमर्जुनेनाजौ निहतं भूरिवर्चसम् ।
भ्रातृभिः सहितोऽन्यैश्च पर्युपास्ते युधिष्ठिरः ॥ २
शयानं वीरशयने कालाकाङ्क्षिणमच्युतम् ।
आजग्मुर्भरतश्रेष्ठं द्रष्टुकामा महर्षयः ॥ ३
अत्रिर्वसिष्ठोऽथ भृगुः पुलस्त्यः पुलहः क्रतुः ।
अङ्गिरा गौतमोऽगस्त्यः सुमतिः स्वायुरात्मवान् ॥ ४
विश्वामित्रः स्थूलशिराः संवर्तः प्रमतिर्दमः ।

---

( B3 सुश्राव्य, Cnp आभाव्य ) पावन तथा, D1 corrupt, D2 3 स( D3 श )पापाना च पावन, D4-9 आप्लाव्य चैव पावन ❀ Cn आभाव्यमिति पाठे रहस्यत्वादवाच्यम् । ❀

63 $^a$) D1-3 हि भक्ताना ( for द्विजातीना ) T2 इद रहस्य दिव्यानां — $^b$) B1 4 D3 5 8-10 च ( for वा ) V1 Dn साधोरात्महितस्य च ( V1 Dn1 वा ) — D1-3 om 63$^{cd}$. — $^c$) D4 5 7-10 S ( except G2 ) वा ( for च ) — $^d$) B4 Dn1 n2 D1-10 G1 च ( for वा )

64 $^a$) B1 तद्वान् ( for दत्त° ) D4 6-9 गौतमाय ( for °मस्य ) V1 B1 2 5 Dn D10 M1 2 4 [ए]तद् ( for [इ]दम् ) B3 4 D1-3 5 दत्त( D1-3 उक्त )वान्गौतमायैतद् — $^b$) D10 सु ( for वै ) D4-9 अगिराश्च महात्मने — $^c$) V1 B1 2 5 Dn D10 अगिरा ( for गुरुभि ) — $^d$) Dn3 D1-9 कश्यपेन

65 $^a$) D1-9 तथा ( for इद ) — $^b$) B1 अथ ( for तथा ) — T1 om 65$^{cd}$ — $^c$) D8 जप्यं D1 चाप्यु त्थित, D2 3 अप्यु° ( for चाभ्यु° ) D7-9 T2 3 G1 3 4 सम्यङ्ग ( for शश्वन् ) G2 जपश्चाप्यर्थित सम्यङ्ग, some unused MSS जपेचाभ्युदित सम्यङ्ग

66 D10 om 66 — $^a$) D2 3 इद यश्च, T1 G य इद ( by transp ) — $^b$) D2 3 चागिरोगत, D4-9 त्वगिरोत्तमं, T G °दिव ( for मतम् ) — $^c$) D1-3 स कुले, D4-8 सत्कुले — $^d$) G4 जातीश्च ( for जातिं ) B4 लभेज्जातिस्मरश्च स

Colophon — *Parvan name* B1 4 Dn3 D1 3 शाति — *Sub parvan* V1 B1-4 Dn D1-3 10 M दानधर्म — *Adhy name* V1 B1 2 5 D अगिरसतीर्थयात्रा, B3 4 अगिरास्तीर्थयात्रा, T2 गौतमागिरससवादे तीर्थप्रशंसा, T3 G3 तीर्थप्रशसन, G1 तीर्थप्रशसा, M4 तीर्थरहस्य — *Adhy no* V1 25, Dn1 D5 24, D7 9 21, D10 23, T1 M 59, T2 3 G2-4 66, G1 61 — *Śloka no* Dn1 72

## 27

1 $^b$) B3 ब्रह्मणा, D4 5 8-10 पृथिवी- ( for ब्रह्मण ) — $^c$) D4-6 -तुलयम् ( for समम् )

2 B4 reads 2$^c$-3$^b$ twice — $^c$) D3 [आ]दौ ( for [आ]जौ ) — $^b$) V1 B ( B4 both times ) Dn D3 8 -तेजस ( for वर्चसम् ) — $^d$) B1-3 4 ( both times ) Dn3 D1-3 5 8 9 पर्युपास्त, B5 Dn1 n2 पर्यपृच्छद्; T G M4 ( inf lin ) पर्युपास( M4 °से )द् ( for °पास्ते )

3 For the repetition in B4, cf v 1 2 — $^a$) Dn1 -शयन, D4-6 -शय्याया ( for -शयने ) — $^b$) D3 T G M1 4 कालकाक्षिणम् — $^c$) D10 M4 -श्रेष्ठ

4 $^a$) Some MSS वशिष्ठो D5 च ( for अथ ) — T1 om 4$^d$-5$^a$ — $^d$) D4 6 8 M चायुर्; D9 वायुर्, T2 3 G2-4 त्वायुर् ( for स्वा° ) V1 B Dn G1 सुमति सु( V1 B1 4 स )यतात्मवान्

उशना बृहस्पतिर्व्यासश्च्यवनः काश्यपो ध्रुवः ॥ ५
दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः ।
भरद्वाजश्च रैभ्यश्च यवक्रीतस्त्रितस्तथा ॥ ६
स्थूलाक्षः शकलाक्षश्च कण्वो मेधातिथिः कृशः ।
नारदः पर्वतश्चैव सुधन्वाथैकतो द्वितः ॥ ७
नितंभूर्भुवनो धौम्यः शतानन्दोऽकृतव्रणः ।
जामदग्न्यस्तथा रामः काम्यश्चेत्येवमादयः ।
समागता महात्मानो भीष्मं द्रष्टुं महर्षयः ॥ ८
तेषां महात्मनां पूजामागतानां युधिष्ठिरः ।
भ्रातृभिः सहितश्चक्रे यथावदनुपूर्वशः ॥ ९
ते पूजिताः सुखासीनाः कथाश्चक्रुर्महर्षयः ।
भीष्माश्रिताः सुमधुराः सर्वेन्द्रियमनोहराः ॥ १०
भीष्मस्तेषां कथाः श्रुत्वा ऋषीणां भावितात्मनाम् ।
मेने दिविस्थमात्मानं तुष्ट्या परमया युतः ॥ ११
ततस्ते भीष्ममामन्त्र्य पाण्डवांश्च महर्षयः ।
अन्तर्धानं गताः सर्वे सर्वेषामेव पश्यताम् ॥ १२
तानृषीन्सुमहाभागानन्तर्धानगतानपि ।
पाण्डवास्तुष्टुवुः सर्वे प्रणेमुश्च मुहुर्मुहुः ॥ १३
प्रसन्नमनसः सर्वे गाङ्गेयं कुरुसत्तमाः ।
उपतस्थुर्यथोद्यन्तमादित्यं मन्त्रकोविदाः ॥ १४
प्रभावात्तपसस्तेषामृषीणां वीक्ष्य पाण्डवाः ।
प्रकाशन्तो दिशः सर्वा विस्मयं परमं ययुः ॥ १५
महाभाग्यं परं तेषामृषीणामनुचिन्त्य ते ।
पाण्डवाः सह भीष्मेण कथाश्चक्रुस्तदाश्रयाः ॥ १६
कथान्ते शिरसा पादौ स्पृष्ट्वा भीष्मस्य पाण्डवः ।
धर्म्यं धर्मसुतः प्रश्नं पर्यपृच्छद्युधिष्ठिरः ॥ १७

---

5 $T_1$ om $5^a$ (of v l 4) — $^a$) Bom ed and Kumbh ed स्थूलगिरा (for °शिरा) — $^b$) $D_{7\ 8}$ प्रमितिर् (for प्रमतिर्) $D_{3\ 6-9}$ संवर्त परिमर्दन, $T_1$ G $M_4$ °र्तं प्रतिमर्द($M_4$ °र्दि)न — $^c$) Hypermetric $V_1$ B Dn $D_{5\ 8}$ बृहस्पत्युशनो($B_1$ °ना)व्यासाश् — $^d$) $D_{1-4,\ 6-9}$ कश्यपो $D_8$ भृगु, $T_1$ नृप (for ध्रुव)

6 $^b$) $D_{3\ 8}$ मार्कंडेयो — $^c$) $V_1$ B Dn $D_{10}$ [ऽ]थ (for च) — $^d$) $Dn_1$ यवक्रीतिस्, $D_1$ यावक्रीतस्

7 $^a$) $T_1$ स्थूलाश्व (for °क्ष) $B_2$ (marg) शकढाक्षश्, $B_5$ $Dn_3$ $D_{7\ 9\ 10}$ सकलाक्षश्, $D_8$ शकराख्यश्, $D_3$ सबळाक्षश्, S शकटाक्षश् (for °लाक्षश्) — $^b$) $D_6$ काण्वो, $M_4$ कण्ठो (for कण्वो) $D_{2\ 8}$ तथा, $T_1$ शुक, $T_3$ $G_{2\ 4}$ कृप, $G_1$ कृत, $M_{1-3}$ कुश (for कृश) — $^d$) $D_{4\ 6-9}$ $T_{2\ 3}$ $G_{1\ 4}$ च, $D_5$ [अ]नु, $D_{10}$ वा (for [अ]थ) $B_{1\ 5}$ Dn $D_{1\ 3,\ 5\ 8}$ $T_{2\ 3}$ G $M_{3\ 4}$ द्विज (for द्वित) $T_1$ सुधर्मा चैकतो द्विज

8 $^a$) $D_1$ ऋतस्तुर् (for नितभूर्) $D_{2\ 8}$ ऋतुभुर्भवनो धौम्य, $D_{4-9}$ ऋसुश्च च्यवनो ($D_{7-9}$ देवलो) धौम्य, S नितनु कवपो धौम्य — $^c$) $D_2$ जामदग्निस् $D_{4-9}$ ततो (for तथा) — $^d$) $V_1$ B Dn $D_{4-10}$ $T_1$ कचश्, $T_{2\ 3}$ G $M_3$ कण्वश् (for काम्यश्) — $^e$) $D_{1-3}$ महात्मान (for °नो)

9 $D_{3\ 6}$ om $9^c$–$10^d$

10 $D_{4\ 6}$ om 10 (of v l 9) — $^a$) T G समासीना (for सुखा°) — $^c$) $D_{2\ 8}$ भीष्माश्रया, $T_2$ $M_{1-3}$ धर्माश्रिता (for भीष्मा°) — $^d$) $D_{2\ 3\ 7-9}$ -मनोरमा (for °हरा)

11 $^a$) $D_5$ $T_{2\ 3}$ $G_{1-3}$ कथा (for कथा) — $^c$) $V_1$ B Dn $D_{1-3}$ दिविष्ठम् (for °स्थम्) — $^d$) $T_2$ दिष्ट्या (for तुष्ट्या)

12 $^c$) S (except $T_1$) अंतर्धान (for °र्धानं)

13 $^c$) $D_{2\ 3}$ विस्मिता (for तुष्टुवु)

14 $^a$) $D_{3\ 8}$ सनसा, $T_{2\ 3}$ G मतय (for मनस) — $^b$) $D_{1\ 3\ 4\ 6-9}$ मुनि- (for कुरु) $V_1$ $B_{1\ 5}$ Dn $D_{5\ 7\ 10}$ $T_1$ सत्तमं (for °मा)

15 $B_3$ om $15^{ab}$ — $^a$) $D_{1-10}$ S प्रभाव (for °वात्) $T_1$ तत्तपस् (for तपसस्) — $T_1$ om $15^{cd}$ — $^c$) $B_2$ प्रकाशत्यो, $D_{2\ 3}$ °शतीर्, $D_{5-7\ 9}$ °शयन्, $T_{2\ 3}$ $G_{1-3}$ M शत (for °शन्तो)

16 $^a$) $B_{2\ 4}$ $M_{2\ 3}$ माहाभाग्य, $D_{4\ 6\ 7\ 9}$ महाभार्ग $T_1$ पुनम् (for पर) — $^b$) $T_1$ वै (for ते) — $^d$) $V_1$ $D_{10}$ $T_1$ तथाश्रया (for तदा°)

17 Before 17, $V_1$ B Dn $D_{6\ 7\ 10}$ ins वैशंपायन उवाच — $^{ab}$) $D_6$ पादौ दृष्ट्वा, G स्पृष्ट्वा पादौ (by transp) S धीमत (for पाण्डव) — $^c$) $D_{4\ 6\ 10}$

के देशाः के जनपदा आश्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यः पितामह ॥ १८

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शिलोञ्छवृत्तेः संवादं सिद्धस्य च युधिष्ठिर ॥ १९
इमां कश्चित्परिक्रम्य पृथिवीं शैलभूषिताम् ।
असकृद्द्विपदां श्रेष्ठः श्रेष्ठस्य गृहमेधिनः ॥ २०
शिलवृत्तेर्गृहं प्राप्तः स तेन विधिनार्चितः ।
कृतकृत्य उपातिष्ठत्सिद्धं तमतिथिं तदा ॥ २१
तौ समेत्य महात्मानौ सुखासीनौ कथाः शुभाः ।
चक्रतुर्वेदसंबद्धास्तच्छेषकृतलक्षणाः ॥ २२
शिलवृत्तिः कथान्ते तु सिद्धमामन्त्र्य यत्नतः ।
प्रश्नं पप्रच्छ मेधावी यन्मां त्वं परिपृच्छसि ॥ २३

शिलवृत्तिरुवाच ।

के देशाः के जनपदाः केऽऽश्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तदुच्यताम् ॥ २४

सिद्ध उवाच ।

ते देशास्ते जनपदास्तेऽऽश्रमास्ते च पर्वताः ।

---

धर्मं (for धर्म्यं) — After 17, D10 ins an addl. colophon [ *Sub parvan* दानधर्म — *Adhy no* 24 ].

18 Before 18, V1 B1-3 5 D M ins युधिष्ठिर उवाच, B4 पितामह उवाच — ^b) D4 6-9 T2 3 G1 3 4 M केऽश्रमा (for आश्रमा) D1-3 पर्वता के क आश्रमा — ^c) D4-9 केचिज्, T1 काश्चिज्, T2 3 G1 3 4 का स्विज्, G2 किंस्विज् (for काश्च) — ^d) D6-9 सेव्य (for नद्य) S तदुच्यतां (for पितामह)

19 B4 पितामह (for भीष्म). — ^c) S (except T2 3) सिलोंछवृत्ते

20 ^a) S इह (for इमां) — ^b) D4 6 शील (for शैल) V1 B Dn D5 10 भूषणां (for -भूषिताम्) — ^c) D6 7 9 T2 3 M1 3 4 श्रेष्ठ

21 ^a) D4-9 शिलोंछवृत्तेर् (hypermetric), T1 G1 3 4 M सिलवृत्तेर् (for शिल°) — After 21^{ab}, V1 B Dn D1-4 6-10 ins

227* उवास रजनीं तत्र सुसुखं सुखभागृषि ।
शिलवृत्तिस्तु यत्कृत्यं प्रातस्तत्कृतवाञ्शुचि ।

[(L 1) V1 रजनीस्, D1 4 6-9 वसतीं (D1 °तीस्), D2 च सुख, D3 स सुखं (for रजनीं) D10 उवाच रजनीं तुष्ट (for the prior half) V1 B2 3 5 Dn सुसुख, D2 3 वसती (for सुसुख) B1 सुखवान्, Dn1 °वाग (for °भाग्) D10 सुसुख सुखवानृषि (for the post half) — D1 om line 2 — (L 2) D2 3 शिलवृत्तेस्, D4 6-9 शिलोंछवृत्तिस् (hypermetric) (for शिलवृत्तिस्) V1 च (for तु) D2 om. (hapl) यत्कृत्यं प्रातस् D3 4 6-9 ततस् (for प्रातस्) D3 ऋषि, D5 हरि (for शुचि) ]

— D1 om 21^c-22^d — ^c) V1 B1-3 5 Dn D5 10 T1 कृतकृत्यम् (for °कृत्य) — ^d) T G गृही (for तदा)

22 D1 om 22 (cf. v 1 21) — ^{ab}) T2 G2 महात्मानौ समासीनौ, M सुखासीनौ महात्मानौ (by transp). D1-9 transp कथा and शुभा — ^c) D5 T संबधास्- — ^d) T2 3 G1 2 4 तच्छील-, G3 तं शील (for तच्छेष). B4 लक्ष्मणा (for -लक्षणा)

23 ^a) Some MSS सिल- (for शिल) B3 -वृत्ते- (for -वृत्ति) D1-8 तं (for तु) — ^b) S (except G1) भारत (for यत्नत) — ^d) V1 D2 T3 M1.4 मा (for मां).

24 B1 D5 शीलवृत्तिर्, T1 G1 3 सिल°, T2 3 G2 4 M सि(T3 शि-, G2 शी)लोंछवृत्तिर् (for शिलवृत्तिर्). — ^b) D3 T1 आश्रमा (for केऽऽश्रमा) B4 आश्रमा पर्वताश्च के; D1-3 पर्वता के क (D3 च) आश्रमा — ^c) D4 7 काश्चिज्, T G कास्विज् (for काश्च). — ^d) D7-9 सेव्य (for नद्यस्) — After 24, D1-9 ins

228* सिद्ध उवाच ।
पुष्करं च प्रभासं च नैमिषं हिमवान्गिरिः ।
गङ्गा च यमुना चैव वेदिका मथुरा गया ।
सरस्वत्यारुणा चैव कुरुक्षेत्रं पृथूदकम् ।
एतेषां कतमस्याह माहात्म्यं कथयामि ते ।
शिलवृत्तिरुवाच ।
बाल्यात्प्रभृति विप्रेन्द्र भक्तिः कौतुकमेव च । [5]
माहात्म्यं प्रति विप्रेन्द्र गङ्गाया मम तत्त्वत ।

[(L 2) D4 5 गगां च यमुनां चैव (for the prior half) — D4 5 शीलवृत्तिर् (for शिल°) ]

25 ^b) B4 आश्रमास्, G2 ते द्रुमास् (for तेऽऽश्रमास्) Dn3 के (for ते) D1-8 पर्वतास्ते त आश्रमा — ^d) D1-9 मध्ये याति (for मध्येनैति).

येषां भागीरथी गङ्गा मध्येनैति सरिद्वरा ॥ २५
तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः ।
गतिं तां न लभेज्जन्तुर्गङ्गां संसेव्य यां लभेत् ॥ २६
स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनाम् ।
न्यस्तानि न पुनस्तेषां त्यागः स्वर्गाद्विधीयते ॥ २७
सर्वाणि येषां गाङ्गेयैस्तोयैः कृत्यानि देहिनाम् ।
गां त्यक्त्वा मानवा विप्र दिवि तिष्ठन्ति तेऽचलाः ॥२८
पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः ।
पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम् ॥ २९
स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम् ।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥ ३०
यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गे प्राप्य महीयते ॥ ३१
अपहत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथापहत्य पाप्मानं भाति गङ्गाजलोक्षितः ॥ ३२
विसोमा इव शर्वर्यो विपुष्पास्तरवो यथा ।
तद्वद्देशा दिशश्चैव हीना गङ्गाजलैः शुभैः ॥ ३३
वर्णाश्रमा यथा सर्वे स्वधर्मज्ञानवर्जिताः ।
क्रतवश्च यथासोमास्तथा गङ्गां विना जगत् ॥ ३४
यथा हीनं नभोऽर्केण भूः शैलैः खं च वायुना ।

---

26 D1-4 6 7 9 om. 26-27 — $^a$) G2 ब्रह्मचर्ये च (for °चर्येण) — $^c$) V1 B1 D5 8 10 तां (D5 8 10 न) लभते (for तां न लभेज्) T1 विप्र; T2 3 G M राजन् (for जन्तुर्) — $^d$) G2 damaged B5 दुर्गां (for गङ्गां) Dn1 T3 ससेव्य या, T1 ससेवया (for व्य यां)

27 D1-4 6 7 9 om 27 (cf v l 26) — $^a$) G1 3 गंगायास् (for गाङ्गेयैस्) — $^b$) B4 om (hapl) from तोयैर् up to गाङ्गेयैः (in 30$^b$) B1 om. तोयैः — D5 om (hapl.) 27$^c$–28$^b$ — $^c$) Dn1 तु कुतस् (for न पुनस्) — For 27$^{cd}$, S subst.

229* त्यक्तानि यानि वै येषां त्यागास्स्वर्गो विधीयते ।

[ T1 चैतेषां; M4 (*inf lin*) चैवेषां (for वै येषां) M त्यक्तायानि (M4 °नि च) पुनस्तेषां (for the prior half) M1 (*inf lin*) त्यागः स्वर्गाद्विधीयते (for the post half) ]

28 B4 om. 28, D5 om. 28$^{ab}$ (for both, cf. v l 27) G2 M8 om. 28$^{ab}$ — $^a$) M1 2 4 सिक्तानि (for सर्वाणि), — $^b$) V1 B1-3 5 Dn D10 कार्याणि, M1, 2 4 गात्राणि (for कृत्यानि) — For 28$^{ab}$, T G1 3 4 subst

230* ये वा यथाविधि स्नाता गङ्गायां साघमर्षणा ।

— $^c$) G2 partly damaged D1-3 मनसा (for मानवा), T3 G M1-3 विप्रा (for विप्र) — $^d$) V1 B1 Dn1 n2 ते जना, B2 3 5 Dn3 तेमला, D10 निर्मला, M1 तेचला (for तेऽचला)

29 B4 om 29 (cf v 1 27) — $^b$) D1-3 5 [अ]निष्टानि (for पापानि) G1 मानवा (for ये नरा) D1 3-9 कृत्वानिष्टानि (D7 °त्वाशुभानि) मानवा — $^d$) D1-3 10 [अ]मरावतीं, D4 6 7-9 S परां गतिं (for [उ]त्तमां गतिम्) — After 29, D10 T G ins

231* युक्ताश्च पावकैस्त्यक्त्वा देह शुद्धा भवन्ति ते ।
मुच्यन्ते देहसत्यागाद्गङ्गायमुनसगमे ।

[ (L 2) T1 -सवधाद् (for -सत्यागाद्) G2 गगायमुनयो स्तटा (for the post. half) ]

30 B4 om up to गाङ्गेयैः (in 30$^b$) (cf v 1 27) — $^a$) V1 स्तुतिभिस्; S प्रयतैस् (for शुचिभिस्) — $^b$) D3 om, T1 गंगाया (for गाङ्गेयैः) B4 D8 प्रयतात्मभि, D4-9 सुमहात्मनां (for प्रयता°) — $^c$) D10 T2 3 G पुष्टिर्, T1 शुद्धिर्, M1 2 4 तुष्टिर् (for व्युष्टिर्) G1 M3 सा (for या) ꙮ Cn व्युष्टि पुण्यवृद्धि । ꙮ

31 $^a$) Dn1 मनुष्येषु, T G1-3 °ष्याणां (for °ष्यस्य). — $^c$) D2 3 -सहस्रेषु (for °स्राणि) — $^d$) V1 B Dn D7-10 T1 स्वर्गलोके, D6 विष्णुलोके (for स्वर्गं प्राप्य).

32 $^c$) T2 G2 तदा (for तथा). V1 [अ]पहस- (for °हत्य) — $^d$) T2 3 G1 3 4 तथा (for भाति) D7-9 जलप्लुत (for -जलोक्षित) G2 तथा गगाजलोक्षित.

33 $^c$) B1 तद्ददेशा, D2 3 तथो°, D10 तथा देशा (for तद्वद्देशा) T1 सर्वा (for चैव) — $^d$) V1 B2 5 Dn T1 शिवैः (for शुभैः) D2-10 G3 गंगाहीना न सशय

34 D10 G3 om (hapl.) 34-35 T1 om 34 — $^b$) V1 B2 3 5 Dn G2 4 धर्मज्ञानविवर्जिता — $^c$) T2 केतवश्च (for क्र) — $^d$) D1 जलं (for जगत्) D2 3 तथा गांगं विना जल

तथा देशा दिशश्चैव गङ्गाहीना न संशयः ॥ ३५

त्रिषु लोकेषु ये केचित्प्राणिनः सर्व एव ते ।

तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः ॥ ३६

यस्तु सूर्येण निष्टप्तं गाङ्गेयं पिबते जलम् ।

गवां निर्हारनिर्मुक्ताद्यावकात्तद्विशिष्यते ॥ ३७

इन्दुव्रतसहस्रं तु चरेद्यः कायशोधनम् ।

पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ ॥ ३८

तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।

मासमेकं तु गङ्गायां समौ स्यातां न वा समौ ॥ ३९

लम्बेतावाक्शिरा यस्तु युगानामयुतं पुमान् ।

तिष्ठेद्यथेष्टं यश्चापि गङ्गायां स विशिष्यते ॥ ४०

अग्नौ प्राप्तं प्रधूयेत यथा तूलं द्विजोत्तम ।

तथा गङ्गावगाढस्य सर्वं पापं प्रधूयते ॥ ४१

भूतानामिह सर्वेषां दुःखोपहतचेतसाम् ।

गतिमन्वेषमाणानां न गङ्गासदृशी गतिः ॥ ४२

भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।

---

35 D10 G3 om 35 (cf v l 34) — d) D2 3 यथार्केण नभो हीन — b) D6 7 शेष चैव, D9 शेषं ख च (for शैलैः खं च) — c) D1 6 दिशो (for देशा) T2 द्विजाश्च (for दिशश्च) — d) D2 3 वि(D3 ही)ना गंगाजलै शुभै

36 D2 3 om (hapl) 36 — b) D3 हि (for ते) — c) D1 6 7 9 G3 तर्प्यमाना, T2 G1 तप्यमाना (for तर्प्यमाणा) — After 36, T G ins

232* अन्ये च देवा मुनय प्रेतानि पितृभि सह।
तर्पितास्तृप्तिमायान्ति त्रिषु लोकेषु सर्वश ।

[ (L 1) G2 देव- (for देवा) T1 सुप्रीना (for प्रेतानि) G1 मुनिभि (for पितृभि) — (L 2) G2 अर्पितास् (for त°) ]

37 T1 om 37 — a) B4 सूर्यांशु (for सूर्येण) D1-9 संतप्त (for निष्टप्त) S (T1 om) यथा सूर्यांशु निष्टप्तं (T2 °र्दिष्ट, G2 °विष्टं) — c) D4 corrupt V1 Cn निहार, D2 निर्द्वंद्व-, D10 नीहार (for निर्हार) T2 M1-3 -निर्वृत्ताद् (for निर्मुक्ताद्) T3 G M4 गवां नीहार- (T3 G4 निहार, G1 3 नीवार) निर्वृत्ताद् — d) D1-9 स (for तद्), D2 यावकानृषिमिष्यते (sic) ❀ Cn गवां निहार आहारनिर्गमनमार्ग, ततो निर्मुक्त यावक यवविकार। तस्माद्गां यवानादयित्वा तच्छकृदन्तर्गतान्यवान्पक्त्वा भुञ्जानो यावकव्रतीत्युच्यते। ❀

38 a) V1 B1 इंद्र, Dn1 चंद्र (for इन्दु-) T2 G2 -व्रत (for व्रत) D2 3 च (for तु) D10 चाद्रा यणसहस्र तु — b) V1 B1-3 5 Dn D10 M4 transp चरेत् and य — c) D2 पितृभ्यश्च (for पिबेद्यश्च) D1 6 8 9 गगाप, M3 गागाभ (for गङ्गाम्भ) — d) T2 सौम्य (for the first समौ)

39 D2-4 6 om (hapl) 39 — a) T1 -शत चैव (for सहस्रं तु) — b) Dn1 n2 पदेन (for पा°) T2 यत् (for य) — D5 om (hapl) $39^{c}$-$40^{b}$ — c) T1 निवास एको गंगाया, T2 एकाहं वा स गगाया, T3 G एकाहवासं गंगाया (G4 °या), M यो मासमेक गगाया — d) T2 सौम्य (for the first समौ)

40 D6 om $40^{ab}$ (cf v l 39) — a) Dn लबेते वाक्, D1-4 6-10 T G M4 लबेद्वाक्- (for लम्बेतावाक्) — b) S पुन (for पुमान्) — cd) D1-3 सेवेद्, D4-9 M शयेद् (for तिष्ठेद्) D2 3 corrupt for चापि M transp यश्चापि and गङ्गायां T1 पयसेष्ट च गगाया (for $40^{c}$) T1 यश्चापि (for गङ्गायां) — For $40^{cd}$, T2 3 G subst

233* सवत्सर जले वास गङ्गाया तत्सम भवम्।
[ G4 वासो गगायास् ]

41 a) V1 B2 5 Dn1 n3 D8 प्रास्त, B3 corrupt (for प्राप्त) B4 प्रलीयेत, Dn2 प्रभू°, D1-4 6-9 M4 (inf lin) प्रदह्येत, T1 प्रपश्येत्तु, T2 G प्रदूयेत; T3 प्रसू° (for प्रधू°) M अग्नौ प्रास्त प्रदूयेत — b) Dn2 तूले, D8 मूल, T2 3 G2 काल, G1 3 4 काष्ठ (for तूल) — c) Dn1 D7-10 -गाहस्य; T1 -गाधस्य (for -गाढस्य) D4-6 तथा गगाप्रवाहेन (D5 °ण), — d) Dn1 सर्व (for सर्वं) D1 2 6 9 प्रणश्यति, D10 प्रप द्यते, G4 प्रदूयते (for प्रधू°) Dn2 T3 3 G1-3 M सर्व पाप प्रदूय(Dn2 °भूय, M4 [inf lin] °दह्य)ते, D3-5 7 8 T1 सर्वपाप प्रणश्यति

42 a) M एव (for इह) — b) D1 3-7 9 दु खाभि (for दु खोप) — c) D10 गतिं च काक्षमाणानां — d) B4 न गगायां सा विशिष्यते (hypermetric) — After 42, D10 ins

234* गङ्गा गङ्गेति यो ब्रूयाद्योजनाना शतैरपि।
मुच्यते सर्वपापेभ्यो विष्णुलोक स गच्छति।

गङ्गाया दर्शनात्तद्वत्सर्वपापैः प्रमुच्यते ॥ ४३
अप्रतिष्ठाश्च ये केचिदधर्मशरणाश्च ये ।
तेषां प्रतिष्ठा गङ्गेह शरणं शर्म वर्म च ॥ ४४
प्रकृष्टैरशुभैर्ग्रस्तानमेकैः पुरुषाधमान् ।
पततो नरके गङ्गा संश्रितान्प्रेत्य तारयेत् ॥ ४५
ते संविभक्ता मुनिभिर्नूनं देवैः सवासवैः ।
येऽभिगच्छन्ति सततं गङ्गामभिगतां सुरैः ॥ ४६
विनयाचारहीनाश्च अशिवाश्च नराधमाः ।
ते भवन्ति शिवा विप्र ये वै गङ्गां समाश्रिताः ॥ ४७
यथा सुराणाममृतं पितॄणां च यथा स्वधा ।
सुधा यथा च नागानां तथा गङ्गाजलं नृणाम् ॥ ४८
उपासते यथा बाला मातरं क्षुधयार्दिताः ।
श्रेयस्कामास्तथा गङ्गामुपासन्तीह देहिनः ॥ ४९
स्वायंभुवं यथा स्थानं सर्वेषां श्रेष्ठमुच्यते ।
स्नातानां सरितां श्रेष्ठा गङ्गा तद्वदिहोच्यते ॥ ५०
यथोपजीविनां धेनुर्देवादीनां धरा स्मृता ।
तथोपजीविनां गङ्गा सर्वप्राणभृतामिह ॥ ५१
देवाः सोमार्कसंस्थानि यथा सत्रादिभिर्मखैः ।

---

प्रायश्चित्तानि दीयन्ते यत्र गङ्गा न विद्यते ।
गङ्गा च विद्यते यत्र प्रायश्चित्त कथं भवेत् ।
दर्शनाज्जायते शुद्धि स्नानेन परमा गति । [5]
धन्या गङ्गा कनखले कुरुक्षेत्रे सरस्वती ।
ग्रामे वा यदि वारण्ये पुण्या सर्वत्र नर्मदा ।

43 $^{b}$) V1 Dn3 (by corr) D1 तार्क्ष्यस्य D2 दर्शन (for °नात्) — $^{c}$) B2 गगार्स-, T2 गगायां T G सद्य (for तद्वत्) — $^{d}$) T1 सर्वे नश्यति किल्बिषा, T2 3 G पापानि विविधानि च

44 $^{a}$) D1 M तु (for च) — $^{b}$) D1-3 T3 M अशर्म (for अधर्म) T1 अकर्मचरणाश्च ये — $^{c}$) D2 3 सथा (for तेषां) — T1 om 44$^{d}$-45$^{c}$ — $^{d}$) B1 ब्रह्म (for वर्म) D10 शरण धर्म शर्म च

45 T1 om 45$^{abc}$ (cf. v l 44) — $^{b}$) D1-3 अनेकान्, D4-9 मानवान् (for अनेकै) — $^{d}$) B1 T2 3 G2 3 सश्रिता (for °तान्)

46 T1 om 46 — $^{a}$) T3 सु (for स) D2 3 मतिभिर्, M4 हि मतिर् (for मुनिभिर्) D1 तेषां विभक्ता मतिभिर्, D4-9 वसंति गगाभक्ताश्च (D4 °क्त्या च), M1-3 तेषा विभक्ता हि मतिर् — $^{c}$) T2 3 G1 3 हि (for ऽभि) — $^{d}$) V1 B2-5 Dn3 D5 10 G1 मता, B1 -गतान्; D4 मता (for गता) Dn1 n2 गंगा मति मतां वर

47 $^{a}$) D1 3 नियमाचारहीनाश्च — $^{b}$) D1-4 6 [अ]-प्यशुभाश्; D3 9 अशुभाश्, S (except T1) [अ]प्य शिवाश् (for अशि°) — $^{c}$) D1-6 8 9 शुभा (for शिवा) D4 6 विप्रा (for विप्र) D7 ये भजति शुभा विप्र, T2 3 G M न भवंत्यशिवा विप्र (T2 G1 प्रा) — $^{d}$) G1 3 ये (for वै) D2 4 गगा V1 B5 Dn T2 3 G M1-3 उपाश्रिता (for समा°) — For 47$^{cd}$, T1 subst.

235* गङ्गामुपाश्रिता ये वै शिवास्तेऽपि भवन्त्यपि ।

48 $^{b}$) Dn3 D1 स्वधा यथा (by transp); D2 3 M3 यथा सुधा — $^{c}$) T G transp सुधा and यथा

49 $^{a}$) D1 3 4 6 7 9 T2 3 G2-4 उपासते (D1 T3 ति); T1 आवसंति (for उपासते) — $^{b}$) D2 3 मातर क्षुधयान्विता — $^{c}$) Dn3 पयस्कामास् (for श्रेय°) — $^{d}$) D3 6 T2 3 G हि (for [इ]ह) D7-9 उपासते हि देहिन — After 49, T2 3 G and Madras ed ins

236* उपजीव्या यथा धेनुर्लोकाना ब्राह्मणेव वा ।
हविषा च यथा सोमस्तरणेषु तथाक्षयम् ।
[(L 2) Madras ed तारणेषु (for त°)]

50 $^{a}$) D1 3 स्वयमुव — $^{b}$) T1 उत्तमं (for उच्यते) — $^{c}$) B3 (marg as in text) 3 4 D2 3 सर्वासा, D1 S स्थानाना, D6 7 स्नानाना (for स्नातानां) — $^{d}$) T1 तावद् (for तद्वद्)

51 $^{a}$) Dn1 D3 M1-3 -जीवना (Dn1 D2 °न) (for -जीविनां) B1 अर्थे (for धेनुर्) — $^{b}$) T1 वरा, T2 3 G M परा (for धरा) D4-8 यथा, D9 तथा (for स्मृता) — $^{c}$) V1 अथ (for तथा) M1-3 -जीवना (for जीविनां) D4-6 8 9 तथा स्वर्गार्थिना गगा — $^{d}$) D1-9 अपि (for इह)

52 T1 om 52 — $^{a}$) B4 -सस्थाना, D1-4 6-9 सस्था हि, D10 -धामाभिर्, T2 3 G M3 (*inf lin* as in text) 4 -संस्थाभिर् (for °नि) M1-3 देवाश्च सोम सस्थाभिर् — $^{b}$) B3-5 Dn3 मत्रादिभिर्; D4 6 7 9 S (T1 om) सख्या° (for सत्रा°) D1 3 M3 मुखै; M4

अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः ॥ ५२
जाह्नवीपुलिनोत्थाभिः सिकताभिः समुक्षितः ।
मन्यते पुरुषोऽऽत्मानं दिविष्ठमिव शोभितम् ॥ ५३
जाह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशात्सुनिर्मलम् ॥ ५४
गङ्गोर्मिभिरथो दिग्धः पुरुषं पवनो यदा ।
स्पृशते सोऽपि पाप्मानं सद्य एवापमार्जति ॥ ५५
व्यसनैरभितप्तस्य नरस्य विनशिष्यतः ।
गङ्गादर्शनजा प्रीतिर्व्यसनान्यपकर्षति ॥ ५६
हंसारावैः कोकरवै रवैरन्यैश्च पक्षिणाम् ।
पस्पर्ध गङ्गा गन्धर्वान्पुलिनैश्च शिलोच्चयान् ॥ ५७
हंसादिभिः सुबहुभिर्विविधैः पक्षिभिर्वृताम् ।
गङ्गां गोकुलसंबाधां दृष्ट्वा स्वर्गोऽपि विस्मृतः ॥ ५८
न सा प्रीतिर्दिविष्ठस्य सर्वकामानुपाश्नतः ।
अभवद्या परा प्रीतिर्गङ्गायाः पुलिने नृणाम् ॥ ५९
वाङ्मनःकर्मजैर्ग्रस्तः पापैरपि पुमानिह ।
वीक्ष्य गङ्गां भवेत्पूतस्तत्र मे नास्ति संशयः ॥ ६०
सप्तावरान्सप्त परान्पितॄंस्तेभ्यश्च ये परे ।

---

मुखे ( for मखै ) — $^{c}$) $M_4$ अमृतादि ( for °तानि ) — $^{d}$) $D_{4}$ 6 यथा ( for तथा )

53 $^{b}$) $D_6$ reads सिकताभि twice $V_1$ B Dn $T_1$ समुक्षितं, $D_2$ $G_2$ °स्थित , $D_5$ 7–9 °क्षिता ( for °क्षित ) — $^{c}$) $V_1$ B Dn $D_{10}$ आत्मान मन्यते लोको, $D_{1-3}$ $T_1$ मन्यते नर आ( $T_1$ पुनरा )त्मानं — $^{d}$) $T_2$ 3 G दिविस्थम् ( for °ष्ठम् ). $D_{1-3}$ उप ( for इव ) M शोभनं ( for शोभितम् ) $D_{6-9}$ दिविस्थमिव शोभन, $T_1$ दिवि स्थिरविशोभित

54 $^{d}$) $B_1$ 4 $Dn_1$ $n_2$ $D_5$ ( before corr ) 8 10 -नाशाय ( for °त्सु- ). M निर्मल ( for °लम् )

55 $^{a}$) $D_{4-9}$ अथोद्धूत ( for अथो दिग्ध ) — $^{b}$) $G_2$ M पुरुष ( for °षं ) $B_1$ 2 4 $T_2$ 3 $G_4$ यथा, $D_{4-9}$ [ऽ]पि य ( for यदा ) — $^{c}$) $D_1$ 4–6 स्पृश्यते $V_1$ $B_2$ 3 5 Dn $D_2$ 4–9 सोस्य, $B_4$ तस्य ( for सोऽपि ) S तेनाघ ( $T_1$ 2 °य ) ( for पाप्मान ) — $^{d}$) $D_1$ 3–9 सर्वम् ( for सद्य ) $T_2$ 3 G [अ]भि ( for [अ]प ) $V_1$ $B_{1-3}$ 5 Dn -कर्षति ( for -मार्जति ) $D_2$ सर्वमेवाभिसर्जति, $T_1$ सद्य एनोपमार्जति — For $55^{cd}$, $D_{10}$ subst

237* तथा स्पृशन्सोऽस्य पापं सर्वमेव प्रकर्षति ।

56 $T_1$ om 56–58 — $^{a}$) $B_1$ $D_1$ -भूतस्य, $T_2$ 3 G -तृप्तस्य ( for तप्तस्य ) $D_{4-9}$ व्यसनैरर्दितस्येह — $^{b}$) $G_3$ नरस्याथ विशिष्यत — $^{c}$) $B_4$ गगादर्शनमात्रेण — $^{d}$) $T_2$ 3 G $M_1$ 3 -मार्जति, $M_4$ -मार्जते ( for कर्षति )

57 $T_1$ om 57 (cf v l 56) — $^{a}$) $B_4$ $Dn_3$ हंसारवै , $D_{1-3}$ हसारवै ( for हसारावै ) $D_5$ कोकिल- ( hypermetric ) ( for कोक ) $D_4$ 6 7 9 हसरवै केकिरवै, $D_8$ हंसारवै. कविरवै, $T_2$ 3 G हसकारण्डवेताळैर्, M हस कारण्डवारावै — $^{b}$) $D_9$ om रवैर् $D_1$ अन्यै रवैश् ( by transp ), $T_2$ 3 G नादैरन्यैश्, M कळैर्नादैश् — After $57^{ab}$, $D_8$ 10 ins

238* उत्पादयति गङ्गा वै प्रीतिं नित्यसुखप्रदाम् ।

— $D_{10}$ om $57^{cd}$ — $^{c}$) $B_3$ $D_8$ पस्पर्श ( for °र्ध ) — $^{d}$) $V_1$ om ( hapl ) from शिलोच्चयान् up to गङ्गाया ( in $59^{d}$ )

58 $T_1$ om 58 ( cf v l 56 ) $V_1$ om 58 ( cf v l 57 ) — $^{a}$) $D_{4-10}$ च ( for सु ) — $^{b}$) $D_3$ 8 10 पक्षिभिर्विविधैर्वृतां — $^{c}$) $T_2$ 3 G सपक्षां ( for सबाधां ) — $^{d}$) $Dn_1$ वृद्धै ( for दृष्ट्वा ) $B_4$ 5 विस्मित ( for विस्मृत )

59 $V_1$ om up to गङ्गाया ( in $59^{d}$ ) ( cf v l 57 ) — $^{a}$) $D_2$ मा ( for सा ) $D_{4-9}$ $T_2$ 3 G M दिविस्थस्य ( for °ष्ठस्य ) — $^{b}$) $T_2$ 3 M सर्वान् ( for सर्व ). $Dn_1$ -कार्याणि ( for -कामान् ) $B_1$ उपासत ; $D_1$ 7 8 $G_3$ उपाश्नुत , $G_2$ अवाप्नुत ( for उपाश्नत ) $T_1$ सर्वान्कामान्समश्नत , $G_1$ 4 सर्वान्कामानुपाश्नुत — $^{c}$) B Dn $D_{10}$ संभवेद् ( for अभवद् ) $D_{10}$ यत् ( for या ) — $B_5$ om $59^{d}$–$62^{a}$

60 $B_5$ om. 60 ( cf v l 59 ) — $^{a}$) $B_1$ $D_2$ 3 -कर्मभिर्, $T_1$ -कायजैर् ( for कर्मजैर् ) $T_2$ वाङ्मन-कायजैर्न्यस्त — $^{b}$) $M_{1-3}$ इव ( for अपि ) — $^{d}$) $V_1$ $B_1$ Dn अत्र, $G_2$ तेन ( for तत्र ) $G_3$ वा ( for मे ) $D_7$ [अ]त्र ( for [अ]स्ति )

61 $B_5$ om 61 ( cf v l 59 ) — $^{a}$) $T_3$ वरान् ( for प° ) $G_3$ सप्तापरान्सप्त पूर्वान् — $^{b}$) $D_2$ येभ्यश्च वै ( for तेभ्यश्च ये ) — $^{c}$) $T_2$ 3 G ते तास् ( for पुमास् ),

पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वावगाह्य च ॥ ६१
श्रुताभिलपिता दृष्टा स्पृष्टा पीतावगाहिता ।
गङ्गा तारयते नृणामुभौ वंशौ विशेषतः ॥ ६२
दर्शनात्स्पर्शनात्पानात्तथा गङ्गेति कीर्तनात् ।
पुनात्यपुण्यान्पुरुषाञ्शतशोऽथ सहस्रशः ॥ ६३
य इच्छेत्सफलं जन्म जीवितं श्रुतमेव च ।
स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा ॥ ६४
न सुतैर्न च वित्तेन कर्मणा न च तत्फलम् ।
प्राप्नुयात्पुरुषोऽत्यन्तं गङ्गां प्राप्य यदाप्नुयात् ॥ ६५
जात्यन्धैरिह तुल्यास्ते मृतैः पङ्गुभिरेव च ।
समर्था ये न पश्यन्ति गङ्गां पुण्यजलां शिवाम् ॥ ६६
भूतभव्यभविष्यज्ञैर्महर्षिभिरुपस्थिताम् ।
देवैः सेन्द्रैश्च को गङ्गां नोपसेवेत मानवः ॥ ६७
वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः ।
विद्यावद्भिः श्रितां गङ्गां पुमान्को नाम नाश्रयेत् ॥ ६८
उत्क्रामद्भिश्च यः प्राणैः प्रयतः शिष्टसंमतः ।
चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ॥ ६९
न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः ।
आ देहपतनाद्गङ्गामुपास्ते यः पुमानिह ॥ ७०
गगनाद्यां महापुण्यां पतन्तीं वै महेश्वरः ।

---

D4–9 पुमांसं तार( D5 पाव )येद्गङ्गा ( D6 8 9 °गा ) —d) D1 दृष्ट्वा, T2 3 G1 2 4 M4 स्पृश्य ( for स्पृष्ट्वा ) T1 M1–3 विगाह्य ( for [अ]व )

62 B5 om 62a ( cf v l 59 ) —a) D10 स्मृता ( for श्रुता ) V1 Dn पीता, B1 D1 2 8 9 T2 3 M2 दृष्ट्वा; B4 पृष्ट्वा ( for दृष्टा ) D7 श्रुताभिलिखितद्रेष्टा ( sic ) —b) D2 3 G2 om ( hapl ) स्पृष्टा V1 B2 5 Dn1 n2 स्पृष्टा ( V1 °ष्ट्वा ) दृष्टा, B1 दृष्ट्वा पीता, B4 दृष्ट्वा चैव; Dn3 दृष्ट्वा स्पृष्टा ( for स्पृष्टा पीता ) —c) D4 corrupt D6–9 पुंसाम् ( for नृणाम् ) —d) B3 शुभौ ( for उभौ ) D4–7 भवार्णवात्, D8 9 न संशय ( for विशेषतः ) — After 62, T2 3 G ins

239* तत्तीरगाना तपसा श्राद्धपारायणादिभि ।
गङ्गाद्वारप्रभृतिभिस्तत्तीर्थैर्न पर नृणाम् ।
सायं प्रात स्मरेद्गङ्गा नित्य स्नाने तु कीर्तयेत् ।
तर्पणे पितृपूजासु मरणे चापि संस्मरेत् ।

63 a) D7 om ( hapl ) स्पर्शनात् B1 ध्यानात्, D1. 2 6–9 T1 स्नानात्; M3 दानात् ( for पानात् ) —b) D2 कीर्तनं ( for °नात् ) —c) B1 om, D4 6–9 पुण्यान् ( for [अ]पु° )

64 a) B1 सकल, D2 3 सप्तम ( for सफलं ) —b) B5 D1–3 T1 2 वा ( for च ) —d) B4 पुमांस् ( for सुरांस् )

65 a) Dn3 T2 3 G2 3 न श्रुतैर्न, D10 सुसुतेन ( for न सुतैर्न ) D7 T2 3 G3 वृत्तेन ( for वित्तेन ) T1 G4 न पूर्तै( G4 श्रुते )र्न न वृत्तेन, G1 न श्रुतैर्न च वृत्तेन —b) M4 transp न and च —d) D10 transp गङ्गा and प्राप्य

66 a) B1 T G एव; D3 M इव ( for इह ) —b) D10 मृगै; T G1–3 नरा ( for मृतै ) B5 पांशुभिर्; T1 2 M पशु° ( for पङ्गु° ) B1 3 D2 3 6 वा ( for च ) —c) D2 च ( for न ) B1 गच्छति ( for पश्यन्ति ) —d) D4–6 10 -जलां शुभां; T2 3 G -जलाशया ( for -जलां शिवाम् )

67 a) D4 6 7 9 भवद् ( for भव्य ) —b) D2 3 अभिष्टुतां ( for उपस्थिताम् ) D4–7 9 पुण्यैर्महर्षिभि श्रिता —c) T2 3 G M1 3 सर्वैश्च ( for सेन्द्रैश्च ) — D3 om. ( hapl ) 67d–69c D4 6 om ( hapl ) 67d–68c.

68 D8 om. 68, D4. 5 om 68abc ( for all, cf v l. 67 ) —a) D5 T1 वा ( for च ) —c) D7 9 10 विद्याविद्भि ( for वद्भि ) —d) D8 om from पुमान्को up to न्मनसा ( in 69c ). D1 2 4–7 9 पुमान्को नाभिसंश्रयेत्

69 D8 om 69abc ( cf v l 67 ) D8 om. up to न्मनसा ( in 69c ) ( cf. v l. 68 ) —a) Dn1 T2 यत् ( for य ) —b) T2 3 G समतै ( for °त ). —d) G1 सद्गतिं ( for स गतिं )

70 D5 om ( hapl ? ) 70–72 —b) T1 पराजित ( for न राजत ) — T1 om ( hapl ) 70cd —c) B2 -परमां ( for -पतनाद् ) —d) D10 यत् ( for य ) D3 om पुमानिह

71 D5 om 71 ( cf v l 70 ) —a) V1 B Dn D1 4 6–10 महापुण्या च गगनात्, S गगनाद्यां प( T1 व्याप )तन्तीं वै ( M1 [ inf lin. ] या ) —b) D6–9 पतंती

दधार शिरसा देवीं तामेव दिवि सेवते ॥ ७१
अलंकृतास्त्रयो लोकाः पथिभिर्विमलैस्त्रिभिः ।
यस्तु तस्या जलं सेवेत्कृतकृत्यः पुमान्भवेत् ॥ ७२
दिवि ज्योतिर्यथादित्यः पितॄणां चैव चन्द्रमाः ।
देवेशश्च यथा नृणां गङ्गेह सरितां तथा ॥ ७३
मात्रा पित्रा सुतैर्दारैर्वियुक्तस्य धनेन वा ।
न भवेद्धि तथा दुःखं यथा गङ्गावियोगजम् ॥ ७४
नारण्यैर्नेष्टविषयैर्न सुतैर्न धनागमैः ।
तथा प्रसादो भवति गङ्गां वीक्ष्य यथा नृणाम् ॥ ७५
पूर्णमिन्दुं यथा दृष्ट्वा नृणां दृष्टिः प्रसीदति ।
गङ्गां त्रिपथगां दृष्ट्वा तथा दृष्टिः प्रसीदति ॥ ७६
तद्भावस्तद्गतमनास्तन्निष्ठस्तत्परायणः ।
गङ्गां योऽनुगतो भक्त्या स तस्याः प्रियतां व्रजेत् ॥ ७७
भूःस्थैः खस्थैर्दिविष्ठैश्च भूतैरुच्चावचैरपि ।
गङ्गा विगाह्या सततमेतत्कार्यतमं सताम् ॥ ७८
त्रिषु लोकेषु पुण्यत्वाद्गङ्गायाः प्रथितं यशः ।
यत्पुत्रान्सगरस्यैषा भस्माख्याननयद्दिवम् ॥ ७९
वाय्वीरिताभिः सुमहास्वनाभि-

---

यां; S महापुण्या (for पतन्तीं वै) D1 पतंतीं यां महे श्वरं — c) V1 B Dn D4 10 गंगा, D6–9 पुण्यां (for देवीं). — d) D1 2 एवं (for एव) D1–8 मोदते; S देवता (M1 3 °तां) (for सेवते)

72 D4 om 72 (cf. v l 70) — a) D7 अलं भूतास् (for °कृतास्) — b) T2 G1–3 स्थिता (for त्रिभि) T1 गंगाभिस्त्रिसाभि पर, T2 G4 पथिभिर्विमले स्थिता. — d) V1 T G इह, B5 om (for भवेत्)

73 a) T1 ज्योतिर्भिर्; T2 3 G M ज्योतिष्विव (for °र्यथा) — b) S (except T1 M4) इव (for चैव) — c) D1–6 द्विजश्रेष्ठ, D7–9 द्विजश्रेष्ठो, T G1 3 4 M3 नरेंद्रश्च, M1 2 देवेंद्रश्च (for देवेशश्च) B4 Dn1 तथा (for यथा) G2 नरेंद्रश्च यथान्याना (sic) — d) V1 B Dn D10 च, D1–8 [इ]य (for [इ]ह) Dn2 यथा, T G M4 वरा (for तथा)

74 a) S (except G3) मातापि(M3 °त्रा पि)तृ (for मात्रा पित्रा) V1 जीवैर् (for दारैर्) — b) V1 B Dn1 n2 D3–7 9 10 विमुक्तस्य (for वियु°) B1 Dn3 D8 च (for वा) — c) D1–8 M भवेत, D4 T2 3 G °तु; D6–9 T1 °च (for °द्धि) T2 तदा (for तथा) — d) T2 3 G वियोगत (for °गजम्)

75 D2 3 om 75 T1 om 75ab — a) D1–9 राज्यैर्, S (T1 om) पुण्यैर् (for [आ]रण्यैर्) D5 T2 3 G नष्ट- (for नेष्ट-) — b) D10 पुत्रैर् (for सुतैर्) Dn1 D3 धनागतै (for °गमै) D5 S (T1 om) न धनैर्न सुता (G1 3 °खा, G4 °धा)गमै — T1 transp 75cd and 76ab — d) D1 4–6 प्रेक्ष्य, D7–9 प्राप्य (for वीक्ष्य) T3 यदा (for यथा) V1 B Dn D10 भवेत् (for नृणाम्)

76 T1 transp 75cd and 76ab — b) T2 3 G1 3 4 बुद्धि (for दृष्टि) — B5 T1 G2 M1 om (hapl) 76cd — c) V1 Dn तथा (for गङ्गां) — d) V1 Dn नृणां (for तथा)

77 a) D1 2 4 6–9 T3 तन्निष्ठस्, T1 2 G M4 तन्नि स्यस्, M1–3 ता नित्य (for तद्भावस्) D6 तन्निष्ठस्तद्गति मनास् — b) D1–9 तच्चित्तस् (for तन्निष्ठस्) — c) D4 दृष्ट्वा, T G1–3 वीक्ष्य (for भक्त्या) G4 M गगाम (G4 °गया)नुगतो वीक्ष्य — d) Dn1 तस्या B4 om from व्रजेत् up to प्रथित (in 79b) T1 ता प्रीतिं मान्ययामुयात्

78 B1 om 78 (cf v l 77) — a) T1 भूमिष्ठैश्च (for भूःस्थै खस्थैर्) D4–10 T2 3 M दिविस्थैश्च, G1 दिवि* (for दिविष्ठैश्च) — c) D2 3 M [अ]वगाह्या (for वि°) B3 D4–9 T2 3 G गगा विगाह्य सततम् — d) B3 कार्यतम, D4 6–9 पुण्य° (for कार्य°) S मत (for सताम्)

79 B4 om up to प्रथित (in 79b) (cf v l 77) — a) V1 Dn1 n2 विश्व-, M1 श्रेष्ठ (for त्रिषु) T1 पुण्याया (for पुण्यत्वाद्) — b) T2 3 G1 प्रथित, G3 4 प्रसृत (for प्रथितं) — After 79ab, T2 3 G ins

240* दुर्मृतानानपत्यांश्च सा मृताननयद्दिवम् ।

[T2 दुर्वृत्तान् (for दुर्मृतान्) ]

— c) S या (for यत्) V1 B2 (marg) 5 Dn M1–3 [इ]तो, D10 T G M4 [ए]वान् (for [ए]षा) — d) D10 सा मृतान् (for भस्माख्यान्)

80 a) T G वातेरिताभि (for वाय्वी) D1 स (for सु) V1 B Dn D5 10 मनोहराभिर्; T2 3 G -मनोरमाभिर् (for महास्वनाभिर्) — b) D1–4 6–9 पुण्या भिर्, T3 M1–3 वृता, G2 कृताभिर्, G4 वृता° (for

द्रुताभिरत्यर्थसमुच्छ्रिताभिः ।
गङ्गोर्मिभिर्भानुमतीभिरिद्धः
सहस्ररश्मिप्रतिमो विभाति ॥ ८०
पयस्विनीं घृतिनीमत्युदारां
समृद्धिनीं वेगिनीं दुर्विगाह्याम् ।
गङ्गां गत्वा यैः शरीरं विसृष्टं
गता धीरास्ते विबुधैः समत्वम् ॥ ८१
अन्धाञ्जडान्द्रव्यहीनांश्च गङ्गा
यशस्विनी बृहती विश्वरूपा ।
देवैः सेन्द्रैर्मुनिभिर्मानवैश्च
निषेविता सर्वकामैर्युनक्ति ॥ ८२
ऊर्जावतीं मधुमतीं महापुण्यां त्रिवर्त्मगाम् ।
त्रिलोकगोप्त्रीं ये गङ्गां संश्रितास्ते दिवं गताः ॥ ८३
यो वत्स्यति द्रक्ष्यति वापि मर्त्य-
स्तस्मै प्रयच्छन्ति सुखानि देवाः ।
तद्भाविताः स्पर्शने दर्शने य-
स्तस्मै देवा गतिमिष्टां दिशन्ति ॥ ८४
दक्षां पृथ्वीं बृहतीं विप्रकृष्टां
शिवामृतां सुरसां सुप्रसन्नाम् ।
विभावरीं सर्वभूतप्रतिष्ठां
गङ्गां गता ये त्रिदिवं गतास्ते ॥ ८५
ख्यातिर्यस्याः खं दिवं गां च नित्यं

---

द्रुता॰) V1 D1 द्रुत्यर्थं, M अत्यथ (for अत्यर्थ-) V1 B2 3 5 Dn D2 5–7 9 10 समुत्थिताभि (for च्छ्रिताभि) —ᶜ) M1–3 4 (inf lin as in text) पापहराभिर् (for भानुमतीभिर्) V1 B2 4 5 Dn T1 M1 (inf lin) इद्धा (for इद्ध) B3 गगोर्मिभिर्भानुमतीवरिद्धा (sic), D1–4 6–9 गांगीभिरग्निर्विमलाभिरिद्ध —ᵈ) V1 B Dn D10 प्रतिमा भवति, D2 8 भ स भा (D2 प्रभा)ति, T1 ॰मेव भाति, Madras ed भा विभाति (for ॰मो विभाति)

81 ᵃ) M1 om (hapl) from घृतिनीम् up to यशस्विनी (in 82ᵇ) D4 6 9 पावनीम्, T1 ऋतिनीम्, T2 M2 3 4 (inf lin as in text) हृदि (for घृति॰) Dn8 अप्युदारां, D1 अत्युदार, D4 6 इत्युदारां (for अत्यु॰) B1 पयस्विनीं द्युतिनीमनुदारा —ᵇ) M4 (inf lin as in text) ह्रदिनीं (for वेगिनीं) D1 दुर्विगाढा, D2–4 6–9 ॰गाहा, M2–4 ॰षह्यां (for गाह्याम्) T1 समृद्धिनीं वेगवतीं विभाव्या, T2 3 G2 4 सवर्धिनीं वेगिनी दुर्विषह्या; G1 3 स्वर्धुनीं वेगिनीं दुर्विषह्यां —ᶜ) D2 8 निविष्टं (for विसृष्टं) —ᵈ) D1–9 नरास्ते, T1 ते वीरा, T2 3 G1–3 M2–4 वीरास्ते (for धी॰)

82 M1 om up to यशस्विनी (in 82ᵇ) (cf v l 81) —ᵃ) V1 om, D2 G2 जनान् (for जडान्) G1 3 हितांश् (for -हीनांश्) —ᵇ) B1 T G M2 4 पयस्विनी (for यश॰) —ᶜ) V1 सुरेन्द्रैर्, D1 सहेन्द्रैर्, D4 6–9 सर्वैर् (for सेन्द्रैर्) D4 6–9 T2 3 G दानवैश् (for मा॰) D2 3 देवैः सहेन्द्रैर्मुनिभिश्च मानवैर्

83 T1 om 83–84 —ᵃ) B1 ऊर्जवतीं, Dn8 D3 ऊर्जामतीं; D1 तूर्गवतीं, D2 ऊर्जवंतीं, T2 3 G M ऊर्जस्वतीं (for ऊर्जावतीं) V1 B Dn D10 transp मधुमतीं and महापुण्यां D1–9 त्रिमार्गगां, T2 3 G1–3 M2 4 त्रिवर्त्मनीं, M1 3 ॰नि (for ॰गाम्) —ᶜ) D5 om from ये गङ्गा up to गतिमिष्टा (in 84ᵈ) —ᵈ) G त्रि- (for ते).

84 D5 om up to गतिमिष्टां (in 84ᵈ), T1 om 84 (for both, cf v l 83) —ᵃ) B1 च (for वा) D4 6–9 यो वेत्स्यते प्रेक्ष्यति (D4 8 प्रेक्ष्यते) चापि मर्त्यस्, T2 यो यो द्र* क्ष्यते योपि मर्त्यस्, T3 G यो योक्ष्य- (G2 क्ष)ते द्रक्ष्य(G1 दृश्य)ते यो(G4 चा)पि मर्त्यस्, M यो य(M4 यो)क्ष्यते द्रक्ष्यते वापि मर्त्यस् —ᶜ) Dn8 D1 3 तद्भावित (Dn8 ॰ता), D2 G1 3 तद्भावित (for ॰ताः) D4 9 S (T1 om) च (for यस्) V1 B Dn D5–8 तद्भाविता स्पर्शनदर्शनेन (D6–8 ॰ने च), D10 ॰ता दर्शनस्पर्शनेन —ᵈ) V1 B Dn D10 इष्टां गतिं तस्य सुरा दिशन्ति

85 ᵃ) B2 (marg) 5 Dn पृश्निं, D4 पृथिवीं, T1 पुण्यां (for पृथ्वीं) Dn1 वहतीं (for बृहतीं) —ᵇ) D4–6 सुरसृष्टां; D7–9 सुरामृष्टा (for शिवामृतां) V1 Dn ऋद्धा भागिनीं, B1 2 (orig) 3–5 ऋद्धा भाविनीं, B2 (marg) श्रद्धां भोगिनीं (for ऋसां सुरसां) T1 शुभामृतां मधुमतीं सुप्रसन्नां —ᶜ) B1 T1 M4 (inf lin as in text) विभावरीं, D1–3 M1 ॰विनीं (for ॰वरीं) D2 मूर्तं प्रविष्टा (for भूतप्रतिष्ठां) —ᵈ) D2 T3 M4 गता —After गङ्गा गता, M1–3 ins 242* M1–3 om from ये त्रिदिव up to भवन्ति (in 86ᵈ)

86 M1–3 om 86 (cf v l 85) T1 om. 86

दधार शिरसा देवीं तामेव दिवि सेवते ॥ ७१
अलंकृतास्त्रयो लोकाः पथिभिर्विमलैस्त्रिभिः ।
यस्तु तस्या जलं सेवेत्कृतकृत्यः पुमान्भवेत् ॥ ७२
दिवि ज्योतिर्यथादित्यः पितॄणां चैव चन्द्रमाः ।
देवेशश्च यथा नृणां गङ्गेह सरितां तथा ॥ ७३
मात्रा पित्रा सुतैर्दारैर्वियुक्तस्य धनेन वा ।
न भवेद्धि तथा दुःखं यथा गङ्गावियोगजम् ॥ ७४
नारण्यैर्नेष्टविषयैर्न सुतैर्न धनागमैः ।
तथा प्रसादो भवति गङ्गां वीक्ष्य यथा नृणाम् ॥ ७५
पूर्णमिन्दुं यथा दृष्ट्वा नृणां दृष्टिः प्रसीदति ।
गङ्गां त्रिपथगां दृष्ट्वा तथा दृष्टिः प्रसीदति ॥ ७६
तद्भावस्तद्गतमनास्तन्निष्ठस्तत्परायणः ।
गङ्गां योऽनुगतो भक्त्या स तस्याः प्रियतां व्रजेत् ॥ ७७
भूःस्थैः खस्थैर्दिविष्ठैश्च भूतैरुच्चावचैरपि ।
गङ्गा विगाह्या सततमेतत्कार्यतमं सताम् ॥ ७८
त्रिषु लोकेषु पुण्यत्वाद्गङ्गायाः प्रथितं यशः ।
यत्पुत्रान्सगरस्यैषा भस्माख्याननयद्दिवम् ॥ ७९
वाय्वीरिताभिः सुमहास्वनाभि-

---

यां, S महापुण्या (for पतन्तीं वै) $D_4$ पतंतीं यां महे श्वर —$^c$) $V_1$ B Dn $D_{4\ 10}$ गंगा, $D_{6-9}$ पुण्यां (for देवीं) —$^d$) $D_{1\ 2}$ एवं (for एव) $D_{1-3}$ मोदते, S देवता ($M_{1\ 3}$ °तां) (for सेवते)

72 $D_5$ om 72 (cf. v l 70) —$^a$) $D_7$ अलं- भूतास् (for °कृतास्) —$^b$) $T_2$ $G_{1-3}$ स्थिता (for स्त्रिभि) $T_1$ गंगाभिस्तिसृभि पर, $T_2$ $G_4$ पथिभिर्विमले स्थिता —$^d$) $V_1$ T G इह, $B_5$ om (for भवेत्)

73 $^a$) $T_1$ ज्योतिर्भिर्; $T_{2\ 3}$ G M ज्योतिष्विव (for °र्यथा) —$^b$) S (*except* $T_1$ $M_4$) इव (*for* चैव) —$^c$) $D_{1-6}$ द्विजश्रेष्ठ, $D_{7-9}$ द्विजश्रेष्ठो, T $G_{1\ 3\ 4}$ $M_4$ नरेंद्रश्च, $M_{1\ 3}$ देवेंद्रश्च (for देवेशश्च) $B_4$ $Dn_1$ तथा (for यथा) $G_2$ नरेंद्रश्च यथान्याना (sic) —$^d$) $V_1$ B Dn $D_{10}$ च, $D_{1-8}$ [इ]य (for [इ]ह) $Dn_2$ यथा; T G $M_4$ वरा (for तथा)

74 $^a$) S (except $G_3$) मातापि($M_2$ °त्रा पि)तृ (for मात्रा पित्रा) $V_1$ जीवैर् (for दारैर्) —$^b$) $V_1$ B $Dn_1$ $n_2$ $D_{3-7\ 9\ 10}$ विमुक्तस्य (for वियु°) $B_1$ $Dn_3$ $D_8$ च (for वा) —$^c$) $D_{1-3}$ M भवेत, $D_4$ $T_{2\ 3}$ G °त्तु; $D_{6-9}$ $T_1$ °च्च (for °द्धि) $T_2$ तदा (for तथा) —$^d$) $T_{2\ 3}$ G वियोगत (for °गजम्)

75 $D_{2\ 3}$ om 75 $T_1$ om $75^{ab}$ —$^a$) $D_{4-9}$ राज्यैर्, S ($T_1$ om) पुण्यैर् (for [अ]रण्यैर्) $D_5$ $T_{2\ 3}$ G नष्ट- (for नेष्ट-) —$^b$) $D_{10}$ पुत्रैर् (for सुतैर्) $Dn_1$ $D_8$ धनागतै (for °गमै) $D_5$ S ($T_1$ om) न धनैर्न सुता ($G_{1\ 3}$ °स्वा, $G_4$ °धा)गमै — $T_1$ transp $75^{cd}$ and $76^{ab}$ —$^d$) $D_{4-6}$ प्रेक्ष्य, $D_{7-9}$ प्राप्य (for वीक्ष्य) $T_3$ यदा (for यथा) $V_1$ B Dn $D_{10}$ भवेत् (for नृणाम्)

76 $T_1$ transp $75^{cd}$ and $76^{ab}$ —$^b$) $T_{2\ 3}$ $G_{1\ 3\ 4}$ बुद्धि (for दृष्टि) — $B_5$ $T_1$ $G_2$ $M_1$ om (hapl) $76^{cd}$ —$^c$) $V_1$ Dn तथा (for गङ्गा) —$^d$) $V_1$ Dn नृणां (for तथा)

77 $^a$) $D_{1\ 2\ 4\ 6-9}$ $T_3$ तन्निष्ठस्, $T_{1\ 2}$ G $M_4$ तन्नि स्यस्, $M_{1-3}$ ता नित्य (for तद्भावस्) $D_5$ तन्निष्ठस्तद्गति मनास् —$^b$) $D_{1-9}$ तच्चित्तस् (for तन्निष्ठस्) —$^c$) $D_5$ दृष्ट्वा, T $G_{1-3}$ वीक्ष्य (for भक्त्या) $G_4$ M गंगाम ($G_4$ °गया)नुगतो वीक्ष्य —$^d$) $Dn_1$ तस्या $B_4$ om from व्रजेत् up to प्रथितं (in $79^b$) $T_1$ ता प्रीतिं नान्यथाप्नुयात्

78 $B_4$ om 78 (cf v l 77) —$^a$) $T_1$ भूमिष्ठैश्च (for भूःस्थैः खस्थैर्) $D_{4-10}$ $T_{2\ 3}$ M दिविस्थैश्च; $G_1$ दिवि* (for दिविष्ठैश्) —$^c$) $D_{2\ 3}$ M [अ]वगाह्या (for वि) $B_3$ $D_{4-9}$ $T_{2\ 3}$ G गंगां विगाह्य सततम् —$^d$) $B_3$ काम्यतमं, $D_{4\ 6-9}$ पुण्य° (for कार्य°) S मत (for सताम्)

79 $B_4$ om up to प्रथित (in $79^b$) (cf v l 77) $T_1$ —$^a$) $V_1$ $Dn_1$ $n_2$ विश्व, $M_1$ श्रेष्ठ (for त्रिषु) —$^b$) $T_{2\ 3}$ $G_1$ प्रथितं पुण्याया (for पुण्यत्वाद्) $T_{2\ 3}$ $G_{3\ 4}$ प्रसृत (for प्रथित) — After $79^{ab}$, $T_{2\ 3}$ G ins

240* दुर्मृताननपत्यांश्च सा मृताननयद्दिवम् ।
[ $T_2$ दुर्वृत्तान् (for दुर्मृतान्) ]

—$^c$) S या (for यत्) $V_1$ $B_2$ (marg) $_5$ Dn $M_{1-3}$ $D_{10}$ [इ]तो, $D_{10}$ T G $M_4$ [ए]तान् (for [ए]षा) —$^d$) $D_{10}$ सा मृतान् (for भस्माख्यान्)

80 $^a$) T G वातेरिताभि (for वाय्वी°) $D_1$ स (for सु) $V_1$ B Dn $D_{5\ 10}$ मनोहराभिर्, $T_{3}$ G -मनोरमाभिर् (for महास्वनाभिर्) —$^b$) $D_{1-4\ 6-9}$ पुण्याभिर्; $T_3$ $M_{1-3}$ घृता°, $G_2$ कृताभिर्, $G_1$ वृता° (for

द्रुताभिरत्यर्थसमुच्छ्रिताभिः ।
गङ्गोर्मिभिर्भानुमतीभिरिद्धः
सहस्ररश्मिप्रतिमो विभाति ॥ ८०
पयस्विनीं घृतिनीमत्युदारां
समृद्धिनीं वेगिनीं दुर्विगाह्याम् ।
गङ्गां गत्वा यैः शरीरं विसृष्टं
गता धीरास्ते विबुधैः समत्वम् ॥ ८१
अन्धाञ्जडान्द्रव्यहीनांश्च गङ्गा
यशस्विनी बृहती विश्वरूपा ।
देवैः सेन्द्रैर्मुनिभिर्मानवैश्च
निषेविता सर्वकामैर्युनक्ति ॥ ८२
ऊर्जावतीं मधुमतीं महापुण्यां त्रिवर्त्मगाम् ।
त्रिलोकगोप्त्रीं ये गङ्गां संश्रितास्ते दिवं गताः ॥ ८३
यो वत्स्यति द्रक्ष्यति वापि मर्त्य-
स्तस्मै प्रयच्छन्ति सुखानि देवाः ।
तद्भाविताः स्पर्शने दर्शने य-
स्तस्मै देवा गतिमिष्टां दिशन्ति ॥ ८४
दक्षां पृथ्वीं बृहतीं विप्रकृष्टां
शिवामृतां सुरसां सुप्रसन्नाम् ।
विभावरीं सर्वभूतप्रतिष्ठां
गङ्गां गता ये त्रिदिवं गतास्ते ॥ ८५
ख्यातिर्यस्याः खं दिवं गां च नित्यं

---

(द्रुता°) V1 D1 द्रुत्यर्थ-, M अत्यत (for अत्यर्थं) V1 B1. 2. 5 Dn D2. 6–7. 9. 10 समुत्थिताभि (for च्छ्रिताभि) —c) M1–3. 4 (inf lin as in text) पापहराभिर् (for भानुमतीभिर्) V1 B2. 4. 5 Dn T1 M4 (inf lin) इद्धा (for इद्धः) B3 गंगोर्मिभिर्भानुमतीतरिद्धा (sic), D1–4. 6–9 गागीभिरर्चिर्विमलाभिरिद्ध —d) V1 B Dn D10 प्रतिमा भवति, D3. 8 °म स भा(D3 प्रभा)ति, T1 मेव भाति, Madras ed °मा विभाति (for मो विभाति)

81 a) M1 om (hapl) from घृतिनीम् up to यशस्विनी (in 82b) D1. 6. 9 पावनीम्, T1 ऋतिनीम्; T2 M2. 3. 4 (inf lin as in text) ह्रदि (for घृति°) Dn8 अप्युदारां, D1 अत्युदार, D4. 6 इत्युदारा (for अत्यु°) B1 पयस्विनीं धुतिनीमभुदारा —b) M4 (inf lin as in text) ह्रदिनीं (for वेगिनीं) D1 दुर्विगाढा, D2–4. 6–9 °गाहा, M2–4 षह्या (for °गाह्याम्) T1 समृद्धिनीं वेगवतीं विभाव्या, T2. 3 G2. 4 संवर्धिनीं वेगिनीं दुर्विषह्या, G1. 3 स्वर्धुनीं वेगिनीं दुर्विषह्या —c) D3. 8 निविष्टं (for विसृष्टं) —d) D1–9 नरास्ते, T1 ते वीरा, T2. 3 G1–3 M2–4 वीरास्ते (for धी°)

82 M1 om up to यशस्विनी (in 82b) (cf v l 81) —a) V1 om, D3 G2 जनान् (for जडान्) G1. 3 द्विवाश्च (for °हीनांश्च) —b) B1 T G M2. 3 पयस्विनी (for यश°) —c) V1 सुरेन्द्रैर्, D1 सहेन्द्रैर्, D4. 6–9 सर्वैर् (for सेन्द्रैर्) D3. 6–9 T2. 3 G दानवैश्च (for मा°) D 2 देवैः सहेन्द्रैर्मुनिभिश्च मानवैर्

83 T1 om 83–84 —a) B1 ऊर्जवतीं, Dn3 D3 ऊर्जावतीं, D1 तूर्गवतीं, D2 ऊर्जवतीं, T2. 3 G M ऊर्जस्वतीं (for ऊर्जावतीं) V1 B Dn D10 transp मधुमतीं and महापुण्या D1–9 त्रिमार्गगां, T2. 3 G1–3 M2. 4 त्रिवर्त्मनीं; M1. 3 °नि (for °गाम्) —c) D5 om from ये गङ्गा up to गतिमिष्टा (in 84d) —d) G त्रि (for ते)

84 D5 om up to गतिमिष्टां (in 84d), T1 om 84 (for both, cf v l 83) —a) B1 च (for वा) D4. 6–9 यो वेत्स्यते प्रक्ष्यति (D4. 6 प्रेक्ष्यते) चापि मर्त्यस्, T2 यो यो द्र* कृष्यते योपि मर्त्यस्, T3 G यो योक्ष्य(G2 क्ष)ते द्रक्ष्य(G1 दृश्य)ते यो(G1 चा)पि मर्त्यस्, M यो य(M1 यो)क्ष्यते द्रक्ष्यते वापि मर्त्यस् —c) Dn8 D1. 8 उद्भावित (Dn8 ता), D2 G1. 2 तद्भावित (for °ता) D4. 9 S (T1 om) च (for यस्) V1 B Dn D3–8 तद्भाविता स्पर्शनदर्शनेन (D6–8 °ने च), D10 °ता दर्शनस्पर्शनेन —d) V1 B Dn D10 दृष्टां गतिं तस्य सुरा दिशन्ति

85 a) B2 (marg) 5 Dn पृथ्वीं; D4 पृथिवीं; T1 पुण्यां (for पृथ्वीं) Dn1 वहतीं (for बृहतीं) —b) D4–6 सुरसृष्टा, D1–9 सुरामृष्टा (for शिवामृतां) V1 Dn ऋद्धा भागिनीं, B1. 2 (orig) 3–5 ऋद्धा भाविनीं, B2 (marg) श्रद्धा भोगिनीं (for ऋता सुरसां) T1 शुभामृतां मधुमतीं सुप्रसन्नां —c) B1 T1 M4 (inf lin as in text) विभावनीं; D1–8 M1 °विनीं (for °वरीं) D2 भूतं प्रविष्टा (for भूतप्रतिष्ठां) —d) D2 T3 M4 गता — After गङ्गां गता, M1–3 ins 242* M1–3 om from ये त्रिदिव up to भवन्ति (in 86d)

86 M1–3 om 86 (cf v l 85) T1 om 86

पुरा दिशो विदिशश्चावतस्थे ।
तस्या जलं सेव्य सरिद्वराया
मर्त्याः सर्वे कृतकृत्या भवन्ति ॥ ८६
इयं गङ्गेति नियतं प्रतिष्ठा
गुहस्य रुक्मस्य च गर्भयोषा ।
प्रातस्त्रिमार्गा घृतवहा विपाप्मा
गङ्गावतीर्णा वियतो विश्वतोया ॥ ८७
सुतावनीध्रस्य हरस्य भार्या
दिवो भुवश्चापि कक्ष्यानुरूपा ।
भव्या पृथिव्या भाविनी भाति राज-
न्गङ्गा लोकानां पुण्यदा वै त्रयाणाम् ॥८८
मधुप्रवाहा घृतरागोद्धृताभि-
र्महोर्मिभिः शोभिता ब्राह्मणैश्च ।
दिवश्च्युता शिरसात्ता भवेन

— $^a$) D5 ख्यातिं (for ख्यातिर्) M4 या स्यात् (for यस्या) G4 दिशं (for दिव) G1 नित्याम् — $^b$) D1 2 4–6 परा, D7–9 धरा, T2 3 G ऊर्ध्वं; M4 पुरो (for पुरा) T3 G3 विदिशं T2 3 G M4 चाधितिष्ठेत् (for चावतस्थे) — $^c$) Dn3 पृश्य, D1–3 प्राप्य (for सेव्य) — After 86, M4 ins 242*

87 $^a$) T1 येयं (for इयं) T2 नियता, T3 G °त- (for °त) — $^b$) T3 G1 4 गुह्यस्य (for गुहस्य) D5 T2 3 G1, 3 4 रुद्रस्य (for रुक्मस्य) D10 गर्भभूता (for °योषा) G2 गुह्यस्य रुद्रस्य च गर्भ एषा — T1 om 87$^c$–88$^c$ — $^c$) V1 B5 Dn D5 त्रिवर्गा, D1–3 त्रिगर्भा (for त्रिमार्गा) Dn3 D1–3 7–9 घृतवाहा, D5 om (for °वहा) D4 6 प्रातस्त्रिवाहा घृतमार्गा विपाप्मा — $^d$) D1–3 गंगा मुनीना नियता विश्वरूपा (D1 °मुख्या), D6 7 9 गगा कुक्षिना (D6 °नो) नियता विश्वतोया — For 87$^{cd}$, T2 3 G M subst

241* प्रातस्त्रिमार्गेषु कृतावगाहा
विपाप्मना वितता विश्वगोप्ता ।

[ (L 1) M2 घृतावगाहा (for कृता°) — M1 om line 2 — (L 2) T3 G2 पाप्मापहा पापिनां विश्वगोप्ता (G2 °भोक्ता) (sic), G1 3 4 पापापहा पावनी विश्वभोक्ता (G4 °गोप्ता) ]

— T2 3 G cont M1–3 ins after गङ्गा गता (in 85$^d$) M4 after 86

242* नारायणादक्षयात्पूर्वजाता
विष्णोः पदाच्छिशुमाराद्ध्रुवाच्च ।
सोमात्सूर्यान्मेरुरूपाच्च विष्णोः
समागता शिवमूर्ध्नो हिमाद्रिम् ।

[ (L 1) M1–3 om नारायणा — (L 2) G2 M1–3 पादाच् (for प) ]

88 T1 om 88$^{abc}$ (cf. v l 87) — $^a$) M1 om from सुतावनी up to घृतरागो (in 89$^a$) D2 5 [भ]वनीध्रस्य, D4 6 °नीयस्य, D7 [भ]नतस्य, D8 corrupt (for [भ]वनीध्रस्य) S (T1 M1 om) सत्यावती द्रव्यपरस्य च (G1 वा)र्या — $^b$) Dn2 दिवोत्तरश् (sic) (for दिवो भुवश्) D2 om from क्ष्यानुरूपा up to र्महो (in 89$^b$). V1 B Dn D4 5 10 कृतानुरूपा, D6 7 कक्षा°, T2 3 G रक्ष्या° (for कक्ष्या°) — $^c$) D1 8–9 भावै, G1 गव्या (for भव्या) D1 4–9 भावनी (for भाविनी) D10 याति (for भाति) G4 ब्रह्मन् (for राजन्) V1 B1 (marg) 4 5 Dn भव्या पृ(B5 द्यावापृ)थिव्या भागि(V1 B4 °वि)नी चा(Dn3 वा)पि राजन्, B1 2 (orig) 3 द्यावा पृथिव्योर्भाविनी चापि (B1 भाति, B2 चाति) राजन्, T2 भव्या पृथ्व्या पावनी भाति ब्रह्मन्, T3 G2 3 भव्या पृथिव्यां (T3 °व्या) भा(G2 पा)वनी भाति ब्रह्मन्, M1–4 गव्या पृथिव्या भाव(M4 °वि)नी ब्रह्मभूता — $^d$) D1 लोकान् (for लोकानां)

89 D2 om up to र्महो (in 89$^b$), M1 om up to घृतरागो (in 89$^a$) (for both, cf v l 88) — $^a$) G3 घृतधारोद्धृताभिर् V1 B Dn D10 मधुस्र(V1 °भा)वा घृतधारा घृतार्चिर्, D1 3 °स्रवा घृतवागावृताभिर्; D4–9 मधुस्रवामृतरागा त्रिनाभिर्, T1 मधुप्रवाहामृतधारामृतार्चिर् — $^b$) T2 3 शोधिता (for शोभिता). — After 89$^{ab}$, T1 ins

243* सेव्या देवी सर्वभावेन पुण्या
या शंकरेण भुवनत्रयशंकरेण ।

— $^c$) T2 G2 दिवि च्युता (for दिवश्च्युता) V1 B1 5 Dn शिरसाप्ता शिवेन, B1 D4–10 °सा भवेन, D2 °त्ता शिवेन, T1 शिरसा वै घृतामृद्, T2 3 G1–3 विधृता या भवेन, M या विधृता भवेन — After 89$^c$, T1 ins

244* विष्णोः पादक्षालिनी जह्नुकन्या ।

— $^d$) G1 partly damaged B1 [भ]वतीर्णा (for °नीध्रात्) B1 4 5 Dn माता (for माला) D1–3 गंगावनीध्रस्य दिवश्च माला, D4–9 गंगावनीशस्य दिवश्च (D7 om श्च) माला;

गङ्गावनीध्रास्त्रिदिवस्य माला ॥ ८९
योनिर्वरिष्ठा विरजा वितन्वी
शुष्मा इरा वारिवहा यशोदा ।
विश्वावती चाकृतिरिष्टिरिद्धा
गङ्गोक्षितानां भुवनस्य पन्थाः ॥ ९०
क्षान्त्या मह्या गोपने धारणे च
दीप्त्या कृशानोस्तपनस्य चैव ।
तुल्या गङ्गा संमता ब्राह्मणानां
गुहस्य ब्रह्मण्यतया च नित्यम् ॥ ९१
ऋषिष्टुतां विष्णुपदीं पुराणीं
सुपुण्यतोयां मनसापि लोके ।
सर्वात्मना जाह्नवीं ये प्रपन्ना-
स्ते ब्रह्मणः सदनं संप्रयाताः ॥ ९२
लोकानिमान्नयति या जननीव पुत्रा-
न्सर्वात्मना सर्वगुणोपपन्ना ।
स्वस्थानमिष्टमिह ब्राह्ममभीप्समानै-
र्गङ्गा सदैवात्मवशैरुपास्या ॥ ९३
उस्रां जुष्टां मिषतीं विश्वतोया-
मिरां वज्रीं रेवतीं भूधराणाम् ।
शिष्टाश्रयाममृतां ब्रह्मकान्तां
गङ्गां श्रयेदात्मवान्सिद्धिकामः ॥ ९४
प्रसाद्य देवान्सविभून्समस्ता-

---

D10 corrupt, T1 गगातिमान्या त्रिदिवस्य माता, T2 3 G M Madras ed गगा हि मा( M °गा च मा; Madras ed °गाभिमा )न्या त्रिदिवस्य मान्या ( T1 M °ता )

90 T1 om 90–91 — a) G1 partly damaged G1 3 रजसा ( for विरजा ) G1 3 4 [अ]पि ( for वि- ) D1 2 तन्वती ( for -तन्वी ) — b) V1 B2 ( marg ) शय्यात्रिवारा, B1 2 ( orig ) D10 शय्यान्विता, B3 4 शस्यान्विता; B5 शय्या स्थिरा, Dn1 n2 शय्याचिरा, Dn3 सस्यात्मिका, D1–9 सेव्या इडा ( D9 °रा ), M1–3 पुष्पाविला ( for शुष्मा इरा ) D1–3 यशश्च ( for यशोदा ) T3 G पुष्पा विला प( G2 वा )रिवाहा यशोदा — c) T3 G1 4 M1 विश्वाकृती ( M1 तिर् ) ( for °वती ) M1 आकृतिर् ( for चा° ) V1 इष्टविद्धा, B5 T3 इष्टिसिद्धा, Dn1 n2 D1–10 M1 इष्टसिद्धा ( for इष्टिरिद्धा ) T2 विश्वाकृती चाकृतमाद्धिरीद्धा — d) G4 भुवि तस्य, M भवनस्य ( for भु° ) D4 गोप्ता ( for पन्था )

91 T1 om 91 ( cf v l 90 ) — a) D5 ख्यात्या, G1 3 कान्त्या ( for क्षान्त्या ) T2 3 G M2 4 शोभते, M1 3 गोपतेर् ( for °ने ) S ( T1 om ) धारणेन ( for णे च ) Dn3 क्षान्त्या मह्या शरणे गोपने च, D1–3 ह्या धारणे पोषणे च — b) B3 D4 दीप्ता, D5 दृष्ट्या ( for दीप्त्या ) — The portion of the text from 91c up to 13 31 49b is lost in V1 on missing folios — c) M2 समतौ ( for °ता ) — d) D1–4 7 M1 गुह्यस्य, T2 G2 इहास्य, G1 गुह्यस्यास्य ( for गुहस्य ) M4 ब्राह्मण्यतया

92 V1 missing ( cf v l 91 ) T1 reads 92a after 94a — a) B1 D4–6 8–10 T1 ऋषिस्तुता; B4 °स्तुता; B5 °जुष्टां, D7 °श्रुतां ( for °ष्टुतां ) D4–6 ब्रह्म- ( for विष्णु ) D2 पदवीं, T1 नदीं ( for -पदीं ) B1 4 D T1 G1 3 पुराणा ( for णीं ) — T1 om 92b — b) D1–3 हि ( for [अ]पि ) — c) Dn1 सर्वात्मजां ( for त्मना ) T1 3 प्रसन्नास्, T2 G2 प्रयातास् ( for प्रपन्नास् ) — D3 om ( hapl ) 92d–93b — d) M4 ब्राह्मणा ( for ब्रह्मण ) T1 संप्रयाति ( for याता )

93 V1 missing ( cf v l 91 ) D6 om 93ab ( cf. v l 92 ) T1 om 93 — a) B2 नयेद्धा, B3–5 Dn D5 अवेक्ष्य ( for इमान्नयति या ) — b) D1–4 7–9 स्वर्गं सदा स्वर्गं ( D1 3 स्वर्गि, D4 सर्वं ) ( for सर्वात्मना सर्वं ) B2–5 Dn D2 5 गुणोपपन्नान् ( for पन्ना ) B1 स्वर्गं सदा सर्वगुणोपपन्नान् — c) B1 4 5 Dn D10 तस्स्थानकम्, B1 ( marg ) 2 3 इष्ट स्थानम्, D1–9 सस्थानम् ( for स्व° ) S ( T1 om ) स्वस्थानमेवैर्हि समीप्समानैर्. — d) G4 सुप्रमदैर् ( for गङ्गा सदैव ) D5 [आ]त्मसदैर् ( for °वशैर् )

94 V1 missing ( cf v l 91 ) — a) B4 5 उम्रां, T2 3 G नदैर्, M नक्रैर् ( for उस्रां ) B1–3 Dn पुष्टा ( for जुष्टां ) T2 रुशतीं, T3 G M ऋशतीं ( for मिषतीं ) B1 2 -तोय्याम्, B3–5 Dn भोज्याम्; D1–3 3 10 रूपाम् ( for तोयाम् ) D4 6–9 उस्रा जुष्टामिषतां विश्वरूपाम्; T1 नक्रैर्वृतामृशतीं विश्वतोयाम् — After 94a, T1 reads 92a — b) Dn1 इरावतीं, D1–6 S ( except T1 ) इरा वज्रा ( for इरा वज्रीं ) B Dn2 n3 D10 इरावतीं धारि( B1–3 5 D10 र )णीं भूध( B4 च )राणां — c) T2 3 G पुण्य ( for ब्रह्म ) T1 -शाता ( for -कान्तां ) — d) T2 3 G आर्जवात् ( for आत्मवान् ). T1 पुत्रकाम,

न्भगीरथस्तपसोग्रेण गङ्गाम् ।
गामानयत्तामभिगम्य शश्व-
न्पुमान्भयं नेह नामुत्र विद्यात् ॥ ९५
उदाहृतः सर्वथा ते गुणानां
मयैकदेशः प्रसमीक्ष्य बुद्ध्या ।
शक्तिर्न मे काचिदिहास्ति वक्तुं
गुणान्सर्वान्परिमातुं तथैव ॥ ९६
मेरोः समुद्रस्य च सर्वरत्नैः
संख्योपलानामुदकस्य वापि ।
वक्तुं शक्यं नेह गङ्गाजलानां
गुणाख्यानं परिमातुं तथैव ॥ ९७
तस्मादिमान्परया श्रद्धयोक्ता-
न्गुणान्सर्वाञ्जाह्नवीजांस्तथैव ।
भजेद्वाचा मनसा कर्मणा च
भक्त्या युक्तः परया श्रद्दधानः ॥ ९८
लोकानिमांस्त्रीन्यशसा वितत्य
सिद्धिं प्राप्य महतीं तां दुरापाम् ।
गङ्गाकृतानचिरेणैव लोका-
न्यथेष्टमिष्टान्विचरिष्यसि त्वम् ॥ ९९
तव मम च गुणैर्महानुभावा
जुषतु मतिं सततं स्वधर्मयुक्तैः ।
अभिगतजनवत्सला हि गङ्गा
भजति युनक्ति सुखैश्च भक्तिमन्तम् ॥१००
भीष्म उवाच ।
इति परममतिर्गुणाननेका-
ञ्शिलरतये त्रिपथानुयोगरूपान् ।

---

T2 सिद्ध° (for सिद्धिं°)

95 V1 missing (cf v 1 91) —a) B4 सविर्तुं, D2 corrupt, D4-9 सपितॄन्, T1 वसुभि, T2 3 G M सविभु (for °भून्) —b) D1-3 7-9 भागिरथ( D8 °थी )स् (for भगी) —c) S घाम् (for ताम्) —d) B Dn D4-10 T G पुसा (for पुमान्) G2 तत्र (for नेह) B Dn D5-10 T1 च, D2 वा (for न) B3-5 विद्यते, D6 7 9 विंद्यात् (for वि°)

96 V1 missing (cf v 1 91). —a) D2 3 T2 3 G1 2 4 उदाहृता (for °त) B1 सर्वदा (for °था) T1 उदाहृता स यथा तद्गुणाना —b) T2 [ए]कदेश —c) T1 तावद् (for काचिद्) —d) S transp गुणान् and सर्वान्

97 V1 missing (cf v 1 91) B5 D4 5 7 9 T1 2 G om (hapl) 97 D6 om (hapl) 97a–98b —a) D8 य (sic) (for मेरो) B Dn D2 -यत्नै (for रत्नै) —b) B2 D8 M1-4 च (for वा) T3 सख्योदधीना मुदकस्य चैव —c) B1 2 4 Dn D8 10 शक्य वक्तु (by transp), B3 सत्यमुक्त T3 M गुणाना (for जलानां) —d) T3 M संख्यातु वा (for गुणाख्यान) D1 गुणा ख्यान परिपातं तथैव (sic)

98 V1 missing (cf v 1 91) D6 om 98ab (cf v 1 97) —a) B1 (marg) तथैव (for तस्माद्) B Dn D5 8 10 एतान् (for इमान्) T1 वै (for [उ]क्तान्) —b) D4 7 9 जाह्नवीयास्, T2 G4 स्नाह यज्ञास् (for जाह्नवीजांस्) T1 M1-3 सदा (for तथा) B Dn D5 8 10 गुणान्सर्वाञ्जाह्नवीयान्सदैव —c) D4 स भजेद्, T1 3 G1 2 4 भजेर् (for भजेद्) D6-9 वा (for वाचा) D4 6-9 वा (for च) —d) B4 om युक्त B2 (marg as in text) D1-9 पुरुष, B3 परमया, Dn1 n2 D10 श्रद्धया (for परया) T1 भक्त्या युक्त प्राप्यसे सर्वकामान्

99 V1 missing (cf v 1 91) —a) B1 यशसा बिभर्ति, S वितत्येह (M1 3 °च) मिन्द्र (G1 4 °द्धि) (for यशसा वितत्य) —b) T1 G3 प्राप्ता, G1 प्राप्तां (for प्राप्य) T3 G4 M त्वं (for तां) B6 दुरासदां, T1 उपास्य (for दुरापाम्) —c) B6 कृताकृतान्, G4 गगातु तान् (for °कृतान्) M1-3 नचिरेण (for अ°) —d) B4 Dn B3 यथेष्टदिष्टा, T1 °मभ्यान् (for मिष्टान्) B4 Dn D4 10 विह( D4 °त )रिष्यसि, S विचरिष्यसे (for °सि)

100 V1 missing (cf v 1 91) T1 om 100 —a) D4 6-10 T2 G2 M3 महानुभावा (D10 °वो, M1 °व) (for °भावा) —b) T2 महतीं (for सतत) D5 9 स्वर्गयुक्तै, S (T1 om) स्व( M4 स )धर्मयुक्ता (T3 °र्म) (for युक्तै) —c) B1 2 (marg) 3-5 Dn D3 मत जन, D10 मतफल, S (T1 om) जनगुण (for जन जन) —d) B3-5 Dn D10 G3 जगति (for भजति) B1 स्वनक्ति (for यु°) D1-9 भक्तिमत (D3 °मुक्त)

बहुविधमनुशास्य तथ्यरूपा-
न्गगनतलं द्युतिमान्विवेश सिद्धः ॥ १०१
शिलवृत्तिस्तु सिद्धस्य वाक्यैः संबोधितस्तदा ।
गङ्गामुपास्य विधिवत्सिद्धिं प्राप्तः सुदुर्लभाम् ॥ १०२
तस्मात्त्वमपि कौन्तेय भक्त्या परमया युतः ।
गङ्गामभ्येहि सततं प्राप्स्यसे सिद्धिमुत्तमाम् ॥ १०३

वैशंपायन उवाच ।
श्रुत्वेतिहासं भीष्मोक्तं गङ्गायाः स्तवसंयुतम् ।
युधिष्ठिरः परां प्रीतिमगच्छद्भ्रातृभिः सह ॥ १०४
इतिहासमिमं पुण्यं शृणुयाद्यः पठेत वा ।
गङ्गायाः स्तवसंयुक्तं स मुच्येत्सर्वकिल्बिषैः ॥ १०५

इति श्रीमहाभारते अनुशासनपर्वणि सप्तविंशतितमोऽध्यायः ॥ २७ ॥

## २८

युधिष्ठिर उवाच ।
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च यथा भवान् ।
गुणैः समुदितः सर्वैर्वयसा च समन्वितः ।
तस्माद्भवन्तं पृच्छामि धर्मं धर्मभृतां वर ॥ १

---

(for °मन्वम्)

101 V1 missing (cf v 1 91) G1 3 om the ref —$^{a}$) D1 2 गतिर् (for मतिर्) B Dn D10 अशेषान् (for अनेकान्) T G M1 3 4 इति परमगुणाननेकभेदा (T1 °रूपा)न्, M2 इति वरदगुणानिमाननेकान् —D5 om 101$^{b}$–102$^{c}$ —$^{b}$) B4 D3 त्रिपथाश्रयानु, D1 8 °श्रयाव (for नुयोग) B5 रूपवान् (for रूपान्) B1 आभिरतये त्रिपथगाश्रयानुरूपान्, D4 5 7–9 शिलवृत्तये त्रिपथाश्रयानु, T1 विशदगतिस्त्रिपथाश्रयानु; T2 G शिवरतये त्रिपथाश्रया(G4 श्रुगा)नु, T3 शिलरतये त्रिपदाश्रयानुरूपान्, M सि(M3 शि)लरतये त्रिपथापगा, M4 श्रया) नुरूपान् —B1 om (hapl) 101$^{c}$ D10 repeats 101$^{cd}$ after 102 —$^{c}$) T2 3 G अनुगम्य, M गद्य (for °शास्य) T2 3 G सस्य (for तथ्य) T1 बहुविधमुपदिश्य सस्य युक्त —D7 om 101$^{d}$–102$^{b}$

102 V1 missing (cf v 1 91) D6 om 103$^{abc}$, D7 om 102$^{ab}$ (for both, cf. v 1 101) —$^{a}$) B1 D6 T2 G2 शीलवृत्तिस्, D9 om, T1 G1 3 4 M सिल° —$^{b}$) T2 3 G सभावितस् (for संबोधितस्) B1 तथा, D2 त्वया (for तदा) D4 5 8 9 वाक्यसबोधितस्तया —$^{d}$) B Dn D6 10 प्राप (for प्राप्त) — After 102, D10 repeats 101$^{cd}$

103 V1 missing (cf v 1 91) —$^{a}$) B Dn D2 5 10 G2 तथा (for तस्मात्) —$^{c}$) Dn2 अभ्येति, D3 अध्येहि; D4–9 S अभ्येत्य (for °हि) T1 नियत (for सतत)

104 V1 missing (cf v 1 91) —$^{a}$) D5 इद श्रुत्वेति भीष्मोक्त —$^{b}$) D1 2 4 5 7–9 गंगाया स्तवमुत्तमं —$^{d}$) D1 2 4–6 अगमद् (for च्छद्)

105 V1 missing (cf v 1 91) —$^{b}$) B1 श्रद्धया (for शृणुयाद्)· B3 T2 3 G1 3 4 च (for य) D2 3 पठेत्तदा (D8 था); D6 8 9 °त च; D7 °चर; D10 °स्तदा (for °त वा) T1 गगाया नृपति स ह —$^{c}$) T1 शृणुयाद् (for गङ्गाया) —$^{d}$) B1 T1 M1–3 मुच्यते (for स मुच्येत्) S (except T1) व्याधि- (for सर्व). B4 -पातकै (for किल्बिषै) D1–3 स मुच्येतेह किल्बिषै·

Colophon missing in V1 —*Parvan name* B1–4 Dn3 D1 शांति —*Sub-parvan* B Dn D1 2 4 10 T1 दानधर्मे —*Adhy name* B D T1 गंगामाहात्म्यं; T2 शिलोंछसिद्धसवादे तीर्थप्रशसायां गगामाहात्म्यकथन; T3 G1–3 गगाप्रशंसा, G4 M गगाप्रशंसनं —*Adhy no* (figures, words or both) B4 24, D5 26, D7 9 22, D10 25, T2 3 G2 4 67, G1 62, G3 61, M 60 —*Śloka no* Dn1 n3 107

## 28

☞ This adhy is missing in V1 (cf. v. l. 13. 27 91) Dn3 reads 28–31 and S reads 28–30 after 13 2

1 B1 om 1 —$^{a}$) D6 G2 वित्तेन (for वृ°) —$^{b}$) B5 Dn3 D1–3 M1–3 तथा भवान्, T1 दमेन च;

क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तम ।
ब्राह्मण्यं प्राप्नुयात्केन तन्मे व्याख्यातुमर्हसि ॥ २
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
ब्राह्मण्यमथ चेदिच्छेत्तन्मे ब्रूहि पितामह ॥ ३

भीष्म उवाच ।

ब्राह्मण्यं तात दुष्प्रापं वर्णैः क्षत्रादिभिस्त्रिभिः ।
परं हि सर्वभूतानां स्थानमेतद्युधिष्ठिर ॥ ४
बह्वीस्तु संसरन्योनीर्जायमानः पुनः पुनः ।
पर्याये तात कस्मिंश्चिद्ब्राह्मणो नाम जायते ॥ ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर ॥ ६
द्विजातेः कस्यचित्तात तुल्यवर्णः सुतः प्रभुः ।
मतङ्गो नाम नाम्नाभूत्सर्वैः समुदितो गुणैः ॥ ७
स यज्ञकारः कौन्तेय पित्रा सृष्टः परंतप ।
प्रायाद्गर्दभयुक्तेन रथेनेहाशुगामिना ॥ ८
स बालं गर्दभं राजन्वहन्तं मातुरन्तिके ।
निरविध्यत्प्रतोदेन नासिकायां पुनः पुनः ॥ ९
तं तु तीव्रव्रणं दृष्ट्वा गर्दभी पुत्रगृद्धिनी ।

---

T8 तथाह मा (for यथा भवान्) —c) B2 प्रमुदित, B3 5 Dn D10 च विविधै, G M4 समुदितै (for °त) —d) T1 M1 यशसा (for वयसा) D6 om च Dn3 नराधिप (for समन्वित) —After 1cd, B1-3 5 Dn1 n2 D1-10 ins

245* भवान्विशिष्टो बुद्ध्या च प्रज्ञया तपसा तथा ।

While Dn3 S (except T1) ins after 1cd

246* सर्वेषा चैव जातानां सतामेतन्न संशय ।

[Dn3 जतूनां (for जातानां) M असशय T3 सत्यमेतदसशय (for the post half)]

—e) G2 कस्माद्भवंत पृच्छामि —After 1, N (except Dn3) ins

247* नान्यस्त्वदन्यो लोकेषु प्रष्टव्योऽस्ति जनाधिप ।

[B5 Dn1, n2 D5 10 नराधिप (for जना°)]

2 b) D2 8 शूद्रो वा भरतर्षभ —T1 om 2c–3b —c) B Dn1 n2 येन (for केन) —d) Dn3 S (T1 om) तन्मे ब्रूहि पितामह

3 T1 om 3ab (cf. v 1 2) M1-3 om (hapl) 3 —a) D1-3 सुतप्तेन (for सुमहता) —c) D1-3 यो ह्रीच्छेत् (for चेदि°) —d) Dn3 T G M4 कथं शक्यं (for तन्मे ब्रूहि) D7 प्रसादत (for पितामह) D1-6 तन्मे व्याख्यातुमर्हसि

4 D10 reads 4 on marg —a) Dn3 S त्व(G2 अ)ति- (for तात) B3 5 Dn1 n2 D10 दुष्प्राप्य, some MSS दुष्प्राप —b) B5 वर्णैश्च क्षत्रियादिभि, D3 corrupt —c) G3 वर (for पर) D10 सर्व (for सर्व-) T3 -स्थानाना (for -भूताना)

5 Before 5, T2 G2 ins भीष्म —a) B1 G1 संसरन्, D6 संतरेद् (for संसरन्) T1 बहुधा सदस द्योनीर् —b) Dn3 om one पुन —c) Dn3 पर्यायेणापि; D10 पर्यायतस्तु, T1 °येणाथ; T2 G °ये नाम, T3 °येण तु (for °ये तात)

6 c) D3 सवादे (for °दं) —d) D10 T2 G गर्दभस्य (for °भ्याश्च)

7 a) Dn3 S पार्थ (for तात). —b) B1 तस्य (for तुल्य) T3 G पुन (for सुत) B Dn1, n2 त्वभूत्, Dn3 पुरा, D1-3 प्रभो, S पुन (for प्रभु) D10 तुल्यवर्णयुतायुत —D4 reads 7c twice —c) B Dn1 n2 G4 वै, Dn3 T1 G1-3 [आ]सीत् (for [अ]भूत्) —d) D2 प्रमुदितो (for स°)

8 a) T3 यज्ञाधिकार कौंतेय —b) B2 partly damaged B Dn1 n2 [उ]त्सृष्ट (for सृष्ट) Dn3 T1 G1 4 शुभं वन, D2 7 10 परतप, T2 3 G2 3 M शुभ नव (for परतप) —d) B1 3-5 D10 [अ]थ, Dn1, n2 [अ]पि (for [इ]ह) —For 8cd, Dn3 S subst

248* त्वरया त खरैर्युक्तमास्थाय रथमाव्रजत् ।

9 a) D1-6 वाल (for बाल) Dn3 S स बालं गर्दभीपुत्र (M °शाव) —c) B1 निरतुद्यत्, D2 7 निरवध्यत् (for °विध्यत्) —d) D5 7 नासिकाया (for °या)

10 a) B1 तदतीव्र, B2-5 Dn1 n2 D10 तत्र तीव्र (D10 व्र), D1 त ते तीव्र (for त तु तीव्र-) T त दृश्य नासि नि(T3 दु)र्भिण्ण, G1 3 M त दृश्य (M °ष्ट्वा) नसि निर्भिण्ण, G2 4 क्लिश्यमान सुनिर्भिन्न (G4 °ण्ण) —b) T2 3 G गर्दभ (for °भी) Dn3 D2 3 गृद्धिणी, T1 G1 2 4 गद्धिनी, T2 वर्धिनी (for गृद्धिनी) —d)

ततः स भगवान्भुक्त्वा दंपती प्राह धर्मवित् ।
स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो ॥ २९
ततः शय्यागृहं प्राप्य भगवानृषिसत्तमः ।
संविवेश नरेन्द्रस्तु सपत्नीकः स्थितोऽभवत् ॥ ३०
न प्रबोध्योऽस्मि संसुप्त इत्युवाचाथ भार्गवः ।
संवाहितव्यौ पादौ मे जागर्तव्यं च वां निशि ॥ ३१
अविशङ्कश्च कुशिकस्तथेत्याह स धर्मवित् ।
न प्रबोधयतां तं च तौ तदा रजनीक्षये ॥ ३२
यथादेशं महर्षेस्तु शुश्रूषापरमौ तदा ।
बभूवतुर्महाराज प्रयतावथ दंपती ॥ ३३
ततः स भगवान्विप्रः समादिश्य नराधिपम् ।
सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम् ॥ ३४
स तु राजा निराहारः सभार्यः कुरुनन्दन ।
पर्युपासत तं हृष्टश्च्यवनाराधने रतः ॥ ३५
भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः ।
अकिंचिदुक्त्वा तु गृहान्निश्चक्राम महातपाः ॥ ३६
तमन्वगच्छतां तौ तु क्षुधितौ श्रमकर्शितौ ।
भार्यापती मुनिश्रेष्ठो न च ताववलोकयत् ॥ ३७

---

29 $D_5$ om 29 (cf v l 19) $D_1$ om 29 (cf v l 24) $D_8$ om (hapl) 29 — $^a$) $V_1$ B Dn $D_{10}$ तत स भुक्त्वा भगवा( $Dn_1$ °व )न् — $D_8$ repeats $29^c$–$30^d$ after $32^{ab}$ — $^d$) $D_{4\,6\,7\,8}$ (both times) $_9$ मां बाधत (by transp) T G इह (for इति)

30 For the repetition in $D_8$, cf v l 29 $D_5$ om 30 (cf. v l 19) $D_1$ om. 30 (cf v l 24) — $^a$) $D_{2\,8}$ शय्यागत (for °गृहं) — $T_1$ om $30^c$–$32^b$. — $^c$) $V_1$ B (except $B_1$) Dn $D_{10}$ नरेशस्, $G_4$ नृपेंद्रस् (for नरेन्द्रस्) — $^d$) M ततो (for स्थितो)

31 $D_5$ om 31 (cf v l 19) $D_1$ om 31 (cf v l 24) $T_1$ om 31 (cf v l 30) — $^a$) $V_1$ om न $V_2$ प्रबुध्यो, $Dn_1$ प्रबाध्यो (for प्रबोध्यो) — $^b$) $D_{2-4\,6-9}$ स (for [अ]थ) — $^c$) $B_{1\,3}$ समाहितव्यौ, $M_4$ संपादि° (for संवाहि°) $V_1$ $B_{2\,4\,5}$ Dn transp पादौ and मे — $^d$) $V_1$ $B_{1-4}$ च तेनिशं, $D_2$ तवानिशं; $D_8$ च वा निशि, $D_{4\,6-9}$ तथा निशि (for च वां निशि) $B_5$ Dn जागृतव्य च तेनिशं

32 $D_5$ om 33 (cf v l 19) $D_1$ om 32 (cf. v l 24) $T_1$ om $32^{ab}$ (cf v l 30) — $^a$) $B_{2\,3}$ अविशक (for °शङ्कश्) $V_1$ $B_5$ Dn तु (for च) $D_{8\,9}$ अविशश्चैव कुशिकस् — $^b$) $V_1$ B Dn M [उ]वाह (for [आ]ह स) — After $32^{ab}$, $D_8$ repeats $29^c$–$30^d$ $D_9$ om $32^c$–$34^b$ — $^c$) $B_1$ $D_2$ प्राबोधयता $B_5$ Dn $D_{10}$ तौ (for तं) $V_1$ $B_{2-4}$ $D_8$ न प्राबोधयतां तौ च, $D_4$ corrupt — $^d$) $V_1$ $B_{2\,3\,5}$ $Dn_1$ $n_3$ $D_{10}$ तं तथा, $Dn_2$ दंपती (for तौ तदा)

33 $D_5$ om 33 (cf v l 19) $D_1$ om 33 (cf v l 24) $D_9$ om. 33 (cf v l 32) $D_8$ om $33^a$–13 53 $32^b$ — $^a$) $B_1$ यथादेशान्, $B_4$ तयादेशं; $D_{6-8}$ $T_3$ तदा° (for यथा°) $D_{2\,4\,6\,7}$ तौ, S (except $M_2$) तच् (for तु) $V_1$ य च देश महर्षिस्तु — $^d$) S प्रयतौ च (for °ताव्) $G_3$ त प्रति (for दंपती)

34 $D_5$ om 34 (cf v l 19) $D_1$ om 34 (cf v l 24) $D_9$ om $34^{ab}$ (cf v l 32) $D_8$ om 34 (cf. v l 33) — $^b$) $D_2$ स पार्थिव (for नराधिपम्) — $^c$) $B_{1\,4}$ सुस्वा च (for सुष्वाप) — After 34, $T_1$ ins

$323^*$ द्वाविंशेन समुत्थाय निश्चक्राम तपोधन ।

35 $D_5$ om 35 (cf v l 19) $D_1$ om 35 (cf. v l 24) $D_8$ om 35 (cf v l 33) — $^c$) $B_{1\,3}$ $D_{2\,4\,6-8\,10}$ सहृष्टश्, $B_4$ सतुष्टश् (for त हृष्टश्) S पर्युपास्त सुमहृष्टश् — $^d$) $B_4$ तत (for रत)

36 $D_5$ om 36 (cf v. l 19) $D_1$ om 36 (cf v l 24) $D_8$ om 36 (cf v l 33) — $^a$) $M_{1-3}$ द्वाविंशे (for भार्गवस्) $T_1$ सुसहृष्ट (for समुत्तस्थौ) $T_{2\,3}$ $G_{1\,3\,4}$ भार्गवस्तत उत्तस्थौ — $^c$) $B_3$ $D_{10}$ नकिंचिद् (for अकिं°) $B_1$ $D_2$ च, $D_{4\,7\,9}$ [अ]थ (for तु) S नकिंचिदुक्त्वा च ($T_3$ $G_2$ चत्वाय) गृहान् — $^d$) $T_{1\,2}$ G M तपोधन, $T_3$ महामुनि (for °तपा)

37 $D_5$ om 37 (cf v l 19) $D_1$ om 37 (cf v l 24) $D_8$ om 37 (cf v l 33) — $^a$) $D_2$ धावतां (for गच्छतां) $V_1$ $B_{4\,5}$ Dn तौ च, $T_1$ तात (for तौ तु) $D_{4\,6-9}$ तं चानुधावतां चोभौ — $^b$) $D_{4\,6}$ क्षुभितौ (for क्षुधितौ) S पीडितौ, some MSS -कर्षितौ (for कर्शितौ) — $^c$) $B_3$ भार्यां पतिं (for भार्यापती) $D_{2\,4\,6-9}$ नरव्याघ्र (for मुनिश्रेष्ठो) — $^d$) $V_1$ B Dn $D_{7-9}$ तावेतौ न; $D_{10}$ तावुभौ न (for न च ताव्) $D_2$ न च तौ स व्यलोकयत्, S न च तावभ्यवारयत्

तयोस्तु प्रेक्षतोरेव भार्गवाणां कुलोद्वहः ।
अन्तर्हितोऽभूद्राजेन्द्र ततो राजापतत्क्षितौ ॥ ३८

स मुहूर्तं समाश्वस्य सह देव्या महाद्युतिः ।
पुनरन्वेषणे यत्नमकरोत्परमं तदा ॥ ३९

इति श्रीमहाभारते अनुशासनपर्वणि द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

## ५३

युधिष्ठिर उवाच ।
तस्मिन्नन्तर्हिते विप्रे राजा किमकरोत्तदा ।
भार्या चास्य महाभागा तन्मे ब्रूहि पितामह ॥ १

भीष्म उवाच ।
अदृष्ट्वा स महीपालस्तमृषिं सह भार्यया ।
परिश्रान्तो निववृते व्रीडितो नष्टचेतनः ॥ २

स प्रविश्य पुरीं दीनो नाभ्यभाषत किंचन ।
तदेव चिन्तयामास च्यवनस्य विचेष्टितम् ॥ ३

अथ शून्येन मनसा प्रविवेश गृहं नृपः ।
ददर्श शयने तस्मिञ्शयानं भृगुनन्दनम् ॥ ४

विस्मितौ तौ तु दृष्ट्वा तं तदाश्चर्यं विचिन्त्य च ।
दर्शनात्तस्य च मुनेर्विश्रान्तौ संबभूवतुः ॥ ५

---

38 $D_5$ om 38 (cf v l 19) $D_1$ om 38 (cf v l 24) $D_8$ om 38 (cf v l 33) — $^a$) $D_{4\,6-9}$ ततस् (for तयोस्) $V_1$ पृच्छतोर्, $B_1$ पश्य (for प्रेक्ष°) — $^b$) Some MSS भार्गवानां — $^c$) $B_1$ अभूदंतर्हितो राजस्

39 $D_5$ om 39 (cf v l 19) $D_1$ om 39 (cf v l 24) $D_8$ om 39 (cf v l 33) — $^a$) $D_{4\,8\,9}$ मुहूर्ताद् $D_2$ सुमुहूर्तात्समाविश्य, $D_{6\,7}$ स मुहूर्तात्समाश्वास्य, $T_1$ $G_2$ M ततो मुहूर्तमाश्वस्य, $T_{2\,3}$ $G_{1\,3\,4}$ ततो मुहूर्तादाश्वास्य — $^b$) $D_{2\,4\,6-9}$ M महामति, $T_{2\,3}$ G महा($G_2$ om महा)मुने (for द्युति) — $^d$) $D_{7-9}$ तत (for तदा) $T_1$ चकार नृपतिस्तदा, $T_{2\,3}$ G M मकरोत्स महीपति

Colophon om in $D_{1\,2\,5}$ — *Parvan name* $B_{1-4}$ $Dn_3$ शांति — *Sub parvan* $V_1$ $B_{1-4}$ Dn $D_{2\,4\,9\,10}$ दानधर्म — *Adhy name* $V_1$ $B_{2\,4}$ $Dn_3$ $D_{2\,4\,6-10}$ च्यवनकुशिकसंवाद, $B_1$ च्यवनोपाख्यान, $B_5$ $Dn_1$ $n_2$ कुशिकच्यवनसंवाद, $T_2$ धर्मशास्त्रनिर्णये गोमाहात्म्यप्रकरणे विश्वामित्रपरशुरामचरित्रे भार्गवच्यवननिद्रा — *Adhy no* (figures, words or both) $V_1$ 52 (as in text), $D_{10}$ 56, $T_1$ M 81, $T_{2\,3}$ $G_{2\,4}$ 80, $G_1$ 83, $G_3$ 82

53

1 $D_5$ om $1^a$–$13^b$ (cf. v l 13 52 19) $D_1$ om $1^a$–$32^b$ (cf v l 13 52 24) $D_8$ om $1^a$–$32^b$ (cf v l 13 52 33) — $^c$) $B_3$ वा (for च) $T_{2\,3}$ G सु- (for [अ]स्य)

2 $D_{1\,3\,5}$ om 2 (cf v l 1) $D_2$ om (hapl ?) 2–3 — $^a$) $D_{4\,6\,7}$ अथादृष्ट्वा (for अदृष्ट्वा स) — $^b$) $D_{8\,10}$ transp. सह and भार्यया — $^d$) $B_3$ व्रीलितो, S (except $T_1$) व्रीळितो (for व्रीडितो)

3 $D_{1\,3\,5}$ om 3 (cf v l 1) $D_2$ om 3 (cf v l 2) — $^a$) $D_{4\,6-9}$ प्रविश्य च (for स प्रविश्य) — $T_1$ om $3^{cd}$ — $^c$) $T_3$ तदेव

4 $D_{1\,3\,5}$ om 4 (cf v l 1) — $^b$) $V_1$ B $Dn_2$ $n_3$ $D_{6\,9\,10}$ प्रविश्य स्व, $Dn_1$ प्राविशत्स्व (for प्रविवेश) $D_{2\,10}$ $M_4$ नृप — $^c$) $B_3$ भवने (marg शयने as in text)

5 $D_{1\,3\,5}$ om 5 (cf v l 1) — $^a$) M transp दृष्ट्वा and तं $V_1$ B Dn $D_{10}$ विस्मितौ तावृ(Dn समृ)षिं दृष्ट्वा; T G विस्मितस्तु ($T_1$ तौ तौ) तदा ($G_3$ था) दृष्ट्वा — $^b$) $D_{2\,4\,6-9}$ विचिंत्य ह, $T_{2\,3}$ G प्रचिंतयन्, $T_3$ (*inf lin*) प्रचिंत्य तत् (for विचिन्त्य च) — $^c$) $V_1$ B Dn $D_{10}$ तु ($B_{1-3}$ $D_{10}$ च) तदा (for च मुनेर्) S संदर्शनात्तस्य मुनेर् — $^d$) $D_{2\,4\,6-9}$ संभ्रांतौ (for विश्रान्तौ)

6 $D_{1\,3\,5}$ om 6 (cf. v l 1) $T_1$ om $6^{ab}$ — $^a$) $D_{4\,6-9}$ यथास्थाने Dn च तौ, $T_{2\,3}$ G ततो (for तु

यथास्थानं तु तौ स्थित्वा भूयस्तं संववाहतुः ।
अथापरेण पार्श्वेन सुष्वाप स महामुनिः ॥ ६
तेनैव च स कालेन प्रत्यबुध्यत वीर्यवान् ।
न च तौ चक्रतुः किंचिद्विकारं भयशङ्कितौ ॥ ७
प्रतिबुद्धस्तु स मुनिस्तौ प्रोवाच विशां पते ।
तैलाभ्यङ्गो दीयतां मे स्नास्येऽहमिति भारत ॥ ८
तथेति तौ प्रतिश्रुत्य क्षुधितौ श्रमकर्शितौ ।
शतपाकेन तैलेन महार्हेणोपतस्थतुः ॥ ९
ततः सुखासीनमृषिं वाग्यतौ संववाहतुः ।
न च पर्याप्तमित्याह भार्गवः सुमहातपाः ॥ १०
यदा तौ निर्विकारौ तु लक्षयामास भार्गवः ।
तत उत्थाय सहसा स्नानशालां विवेश ह ।
क्लृप्तमेव तु तत्रासीत्स्नानीयं पार्थिवोचितम् ॥ ११
असत्कृत्य तु तत्सर्वं तत्रैवान्तरधीयत ।
स मुनिः पुनरेवाथ नृपतेः पश्यतस्तदा ।
नासूयां चक्रतुस्तौ च दंपती भरतर्षभ ॥ १२
अथ स्नातः स भगवान्सिंहासनगतः प्रभुः ।
दर्शयामास कुशिकं सभार्यं भृगुनन्दनः ॥ १३
संहृष्टवदनो राजा सभार्यः कुशिको मुनिम् ।
सिद्धमन्नमिति प्रह्वो निर्विकारो न्यवेदयत् ॥ १४
आनीयतामिति मुनिस्तं चोवाच नराधिपम् ।
राजा च समुपाजह्रे तदन्नं सह भार्यया ॥ १५

---

तौ ) B1 दृष्ट्वा, S ( T1 om ) गत्वा ( for स्थित्वा ) — $^{b}$ ) T3 G M तत्पादौ ( for भूयस्तं ) T2 तत्पादौ सम वाहतु — $^{c}$ ) Some MSS पार्श्वेण — $^{d}$ ) S सुष्वाप मुनिसत्तम

7 D1 3 5 om 7 (cf. v l 1) — $^{b}$ ) T1 प्राबुध्यत च वीर्यवान्, T2 M सप्रबुध्यत ( M1 2 °ध्याति-, M4 °ध्यापि ) वी°, T3 G3 4 सप्राबुध्यत वी° — T1 om $7^{cd}$ — $^{d}$ ) S ( T1 om ) विवर ( for विकार )

8 D1 3 5 om 8 (cf v l 1) — $^{b}$ ) D8 महा मुनि ( for विशां पते ) — For 8, S subst

324* अथाह भगवांस्तौ तु प्रतिबुद्धो विशां पते ।
तैलाभ्यङ्गं प्रयच्छेतां स्नातुमिच्छामि पार्थिव ।

[ (L 1) T1 तात ( for तौ तु ) T1 om the post. half and the prior half of line 2 — (L 2) T1 भारत ( for पार्थिव ) ]

9 D1 3 5 om 9 (cf v l 1) T3 partly damaged. — $^{a}$ ) V1 B ( except B1 ) Dn D2 transp तथेति and तौ — $^{b}$ ) Some MSS -कर्षितौ

10 D1 3 5 om 10 (of v l 1) — $^{a}$ ) T3 partly damaged D5 om (hapl ) from सुखासीनम् up to भार्गव· (in $10^{d}$ ) — $^{b}$ ) B3 उद्यतौ, T1 पादौ तौ ( for वाग्यतौ ) B1 वाग्यतौ समवाहतु, D3 T2 G2 °तौ संबभूवतु, T3 G1 3 4 वाह्यतौ संबभूवतु — $^{c}$ ) D3 स ( for च ) — $^{d}$ ) M1-3 वाग्यत ( for भार्गव ) T1 स ( for सु )

11 D1 3 5 om 11 (of v l 1) T1 om. $11^{ab}$ — $^{a}$ ) D2 तदा ( for यदा ) D4 6 तौ ( for तु ) — $^{b}$ ) B4 भारत ( for भार्गव ) — $^{d}$ ) S उपागात ( for विवेश ह ) — $^{e}$ ) D4 6-8 क्षिप्रम्, D10 कृतम्, G3 क्षिप्तम् ( for क्लृप्तम् ) — $^{f}$ ) D2 4 6-9 पानीयं ( for स्ना° ) D10 पार्थिवोदितं

12 D1 3 5 om 12 (of v l 1) T1 om $12^{a}$ — $^{a}$ ) V1 B ( except B1 ) Dn D9 च ( for तु ) D10 T2 3 G अस्वीकृत्य च तस्स( T2 3 G1 तत· स )र्वं — T1 om $12^{d}$ — $^{d}$ ) T3 M पार्श्वतस् ( for पश्य ) — $^{e}$ ) B1 2 D2 S तु ( for च )

13 D1 3 om 13, D5 om $13^{ab}$ ( for all, of v l 1) — $^{a}$ ) T2 अत· ( for अथ ) — T1 om $13^{cd}$ — $^{d}$ ) V1 B Dn D2 7. 10 G2 सभार्यं कुरुनदन

14 D1 3 om 14 (of v l 1). — $^{a}$ ) D4 6 9 स ( for सं ) D7 स हृष्ट कुशिको राजा, T1 ददर्श राजा सहृष्ट — $^{b}$ ) B1 D4-6 8 M1 मुने ( for मुनिम् ) D7 सभार्यश्च वदतो मुने ( hypermetric ), T1 सहासनगतं मुनिं — $^{c}$ ) V1 B1 4 5 Dn3 ( marg ) प्राज्ञो ( for प्रह्वो )

15 D1 3 om 15 (of v l 1) T1 om 15-18 — $^{b}$ ) V1 तयोवाच, B1 तदो°, D4 6-9 स प्रो, D10 तथो° ( for तं चो° ) D4 8 S ( T1 om ) जनाधिप ( M1 4 °प ) ( for नरा° ) — $^{c}$ ) V1 B2-5 Dn D2 5-7 10 स राजा ( for राजा च ) B1 समुपाचक्रे ( for °जह्रे ) — $^{d}$ ) D10 S ( T1 om ) तदन्नं भार्यया सह ( M4 also

मांसप्रकारान्विविधाञ्शाकानि विविधानि च ।
वेसवारविकारांश्च पानकानि लघूनि च ॥ १६
रसालापूपकांश्चित्रान्मोदकानथ षाडवान् ।
रसान्नानाप्रकारांश्च वन्यं च मुनिभोजनम् ॥ १७
फलानि च विचित्राणि तथा भोज्यानि भूरिशः ।
बदरेङ्गुदकाश्मर्यभल्लातकवटानि च ॥ १८
गृहस्थानां च यद्भोज्यं यच्चापि वनवासिनाम् ।
सर्वमाहारयामास राजा शापभयान्मुनेः ॥ १९
अथ सर्वमुपन्यस्तमग्रतश्च्यवनस्य तत् ।
ततः सर्वं समानीय तच्च शय्यासनं मुनिः ॥ २०
वस्त्रैः शुभैरवच्छाद्य भोजनोपस्करैः सह ।
सर्वमादीपयामास च्यवनो भृगुनन्दनः ॥ २१
न च तौ चक्रतुः कोपं दंपती सुमहाव्रतौ ।
तयोः संप्रेक्षतोरेव पुनरन्तर्हितोऽभवत् ॥ २२
तत्रैव च स राजर्षिस्तस्थौ तां रजनीं तदा ।
सभार्यो वाग्यतः श्रीमान्न च तं कोप आविशत् ॥ २३
नित्यं संस्कृतमन्नं तु विविधं राजवेश्मनि ।
शयनानि च मुख्यानि परिषेकाश्च पुष्कलाः ॥ २४
वस्त्रं च विविधाकारमभवत्समुपार्जितम् ।
न शशाक ततो द्रष्टुमन्तरं च्यवनस्तदा ॥ २५

---

मुनि )

16 D1 8 om 16 (cf v l 1) T1 om 16 (cf v l 15) — b ) D4-9 शाकांश्च विविधान्मुने — Dn1 om (hapl) 16cd — c ) B Dn8 D2 वेश( D2 °ष )-वार-, D10 S ( T1 om ) लेह्यपिष्ट (for वेसवार-) — d ) T2 8 G पानान्यपि (for पानकानि) D2 पानकान्यलघून्यपि, D8 वन्य च मुनिभोजन ( = 17d )

17 D1, 8 om. 17 (cf. v l 1) T1 om 17 (cf v l 15) G1 partly damaged T2 reads 17ab twice — a ) D5 रसाश्चित्रानपूपांश्च, T2 (both times) 8 G1 8 4 M रसान्वै सूपकांश्चित्रान् — b ) V1 षाडवान्, B1 8 D10 T2 (both times) 8 G षड्रसान्, B4 लड्डुकान्, B6 षाड्गुणान, Dn1 n8 D5 खाडवान्, Dn8 (marg) D4 6-9 मदकान् (for षाडवान्) — c ) D4-9 -विकारांश्च (for प्र) — d ) D6 om भोजनम् D8 पानकानि लघूनि च ( = 16d )

18 D1 8 om 18 (cf v l 1) T1 om 18 (cf. v l 15) Dn8 om. up to तथा (in 18b) — b ) V1 Dn1 n8 D2 10 G2 राज (for तथा) V1 भोग्यानि (for भोज्यानि) — D1 8 om 18c-19b — c ) T2 8 G1 2 4 M -काप्मर्य (for काश्मर्य ) — d ) V1 B Dn D8 10 T2 G1 2 4 फलानि (for वटानि)

19 D1 8 om 19 (cf v l 1) D4, 6 om 19ab (cf. v l. 18) — a ) B2 8 यद्भक्ष्यं, S सभोज्य (for यद्भोज्य) — d ) V1 B Dn तत (for मुने )

20 D1 8 om 20 (cf. v l 1) T1 om 20ab — c ) D4 6-9 सर्वान् (for सर्वं) D5 T1 समानीय (for °नीय) — d ) D5 तथा, T1 यच्च (for तच्च)

21 D1 8 om 21 (cf v l 1) — a ) T1 8 G1 2 4 M शुक्लैर्, T2 शुभ्रैर् (for शुभैर्) D2 समाच्छाद्य (for अव°)

22 D1 8 om 22 (cf v l 1) — a ) V1 B2-5 Dn D8 10 M2 क्रोध, B1 पाप (for कोप) — b ) B2 partly damaged D6 तौ (for सु) V1 B (except B1) Dn D10 महामती (for व्रतौ) — c ) B1 च पश्यतोर् (for संप्रेक्ष) D2 एव (for एव) D5 तयो प्रतीक्षतोरेक — d ) D4 6 तत्रैव (for पुनर्)

23 D1 8 om 23 (cf v l 1) — a ) V1 B1 2 4 5 Dn D9 तथा, B3 अथ (for तत्र) D4 om च — b ) Dn1 तथा (for तस्थौ) — T1 om 23c-25b — c ) B3 धीमान् (for श्री°) — d ) D2 ते, T2 [ए]ष; T8 G2 [ए]नं (for त) V1 B Dn2 n8 D10 न च कोपं (B2 8 रोषं) समाविशत्

24 D1 8 om. 24 (cf v l 1) T1 om 24 (cf v l 23) — a ) V1 B5 Dn2 n8 D2 4 7-10 नित्य (for नित्य) — b ) D2 4 6-9 विधिवद् (for विविधं) — c ) D4 7 8 पुण्यानि (for मुख्यानि) — d ) D5 निष्कला (for पु) D2 M परिषेकश्च पुष्कल, D10 °षेकाश्च पुष्कलान्

25 D1 8 om 25 (cf v l 1) T1 om 25ab (cf v l. 23) — c ) T2 तदा (for ततो) — d ) B2 D6 तथा (for तदा)

26 D1 8 om 26 (cf v l 1) — b ) D6-9 T1 नृप (for नृपम्) — c ) S (except T1 2) मा (for

पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपम् ।
सभार्यो मां रथेनाशु वह यत्र ब्रवीम्यहम् ॥ २६
तथेति च प्राह नृपो निर्विशङ्कस्तपोधनम् ।
क्रीडारथोऽस्तु भगवन्नुत सांग्रामिको रथः ॥ २७
इत्युक्तः स मुनिस्तेन राज्ञा हृष्टेन तद्वचः ।
च्यवनः प्रत्युवाचेदं हृष्टः परपुरंजयम् ॥ २८
सज्जीकुरु रथं क्षिप्रं यस्ते सांग्रामिको मतः ।
सायुधः सपताकश्च सशक्तिः कणयष्टिमान् ॥ २९
किङ्किणीशतनिर्घोषो युक्तस्तोमरकल्पनैः ।
गदाखङ्गनिबद्धश्च परमेषुशतान्वितः ॥ ३०
ततः स तं तथेत्युक्त्वा कल्पयित्वा महारथम् ।
भार्यां वामे धुरि तदा चात्मानं दक्षिणे तथा ॥ ३१
त्रिदंष्ट्रं वज्रसूच्यग्रं प्रतोदं तत्र चादधत् ।
सर्वमेतत्ततो दत्त्वा नृपो वाक्यमथाब्रवीत् ॥ ३२
भगवन्क्क रथो यातु ब्रवीतु भृगुनन्दनः ।
यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः ॥ ३३
एवमुक्तस्तु भगवान्प्रत्युवाचाथ तं नृपम् ।
इतःप्रभृति यातव्यं पदकं पदकं शनैः ॥ ३४
श्रमो मम यथा न स्यात्तथा मे छन्दचारिणौ ।
सुखं चैवास्मि वोढव्यो जनः सर्वश्च पश्यतु ॥ ३५
नोत्सार्यः पथिकः कश्चित्तेभ्यो दास्याम्यहं वसु ।
ब्राह्मणेभ्यश्च ये कामानर्थयिष्यन्ति मां पथि ॥ ३६

---

मा ) — $^{d}$ ) G वाहयात्र ( for वह यत्र )

27 $D_{1\ 8}$ om 27 ( cf v 1 1 ) — $^{c}$ ) $V_1$ $B_{2-4}$ [ऽ]स्ति ( for ऽस्तु ) — $^{d}$ ) $V_1$ अस्ति, $B_{1\ 8}$ न तु, $D_{4\ 6}$ अथ ( for उत )

28 $D_{1\ 8}$ om 28 ( cf v 1 1 ) $Dn_1$ $T_1$ om ( hapl ? ) $28^{a}$–$29^{b}$ — $^{ab}$ ) $T_3$ G तु ( for स ) $G_4$ ततस्, M ऋषिस् ( for मुनिस् ) $V_1$ B ( except $B_1$ ) $Dn_2$ $n_3$ $D_{10}$ transp तेन and राज्ञा — $^{c}$ ) $D_{4\ 6}$ त वच , $D_{7-9}$ न वच ( for च्यवन ) $D_7$ [हृ]ष्ट ( for [हृ]ष्ट ) — $^{d}$ ) $T_2$ $G_{2-4}$ हृष्ट $D_{4-10}$ M परपुरजय ( $D_{7\ 9}$ °य )

29 $D_{1\ 8}$ om 29 ( cf v 1 1 ) $Dn_1$ $T_1$ om $29^{ab}$ ( cf v 1 28 ) $B_8$ om $29^{ab}$ — $^{b}$ ) $B_{4\ 5}$ $Dn_2$ $n_3$ ( marg as in text ) $D_{4-9}$ $G_2$ ( before corr as in text ) $_4$ रथ ( for मत ) — $^{c}$ ) $D_2$ सायुधा सपताकाश्च — $^{d}$ ) $B_1$ $D_2$ -शक्तिकण-, $B_{2\ 8}$ -शक्तितूण , $D_{4-9}$ -शक्तिध्वज ( for शक्ति कण ) $V_1$ $B_5$ Dn $D_{10}$ शक्तीकनक( $V_1$ $B_5$ °कणप , $Dn_3$ °कणय )यष्टिमान्, $B_4$ सशक्तिक सपार्ष्णिमान्, $T_1$ तमानय नृपोत्तम, $T_2$ स्वशक्तिकृतयष्टिक , $T_3$ G सशक्ति कृतयष्टिक

30 $D_{1\ 8}$ om 30 ( cf v 1 1 ) $T_1$ om 30 — $^{a}$ ) $V_1$ $B_{1-5}$ Dn $D_{7\ 9}$ स्वन , $T_{2\ 8}$ G कृत ( for शत ) $B_1$ किंकिणीजालनिर्घोषैर् — $^{b}$ ) $D_{4\ 5}$ युतस् ( for युक्तस् ). $B_{1\ 4\ 5}$ $Dn_1$ $n_2$ $n_3$ ( marg as in text ) तोरण- ( for तोमर ) $D_7$ कपनै , S ( $T_1$ om ) -कर्पणै ( for कल्पनै ) $V_1$ $B_3$ युक्तस्तोरणकंपनै , $D_{4\ 6\ 8\ 9}$ युतस्तोमरकपनै , $D_{10}$ पुरस्तोमरकर्षणै — $^{c}$ ) $V_1$ B ( except $B_1$ ) Dn जाम्बूनद- ( for गदाखङ्ग ) $D_{4\ 6-9}$ -पिनद्धस्तु ( $D_6$ °श्च ) ( for निबद्धश्च )

31 $D_{1\ 8}$ om 31 ( cf v 1 1 ) — $^{c}$ ) $G_1$ partly damaged $B_1$ $D_{4\ 6}$ तथा ( for तदा ) — $^{d}$ ) $D_2$ चात्मान, $D_{5\ 6\ 10}$ $G_4$ आत्मान $T_{2\ 8}$ G तदा ( for तथा )

32 $D_{1\ 8}$ om $32^{ab}$( cf v 1 1 ) — $^{a}$ ) $V_1$ $Dn_1$ $n_2$ $D_{6\ 8\ 10}$ त्रिदण्डं ( for °ष्ट्रं ) — $^{b}$ ) $D_{6\ 7\ 9}$ [अ]दधात् — $T_1$ om $32^{cd}$ — $^{c}$ ) $B_4$ एव ( for एतत् ) $Dn_2$ $D_8$ तथा ( for ततो ) — $^{d}$ ) $D_5$ नृपतिर्वाक्यमब्रवीत्

33 $^{d}$ ) $T_1$ तथा ( for तत्र )

34 $^{a}$ ) $B_4$ T G स ( for तु ) — $^{b}$ ) $D_{4\ 6-9}$ प्रत्युवाच नृप तदा

35 $T_1$ om $35^{ab}$ — $^{a}$ ) $D_5$ मम ( for मम ) — $^{b}$ ) $B_5$ मे द्वन्द्व , $Dn_1$ $n_2$ मच्छंद ; $D_4$ स्वच्छद- ( for मे छन्द- ) $D_{1\ 9}$ $T_2$ M यथा मच्छन्दचारिणा ( $D_1$ $T_2$ $M_1$ णा ), $D_{8\ 6-10}$ $T_3$ G तथा स्वच्छन्दचारिण ( $D_{8\ 5}$ °णा ) — $^{c}$ ) $G_2$ तैर् ( for चैव ) $V_1$ B Dn सुसुख चैव वोढव्यो — $^{d}$ ) $D_8$ सर्वं प्र , $G_4$ सर्वत्र ( for °श्च ) $D_6$ सर्वजनस्य पश्यत

36 $^{a}$ ) $D_7$ om पथिक $Dn_1$ $n_2$ नोत्सार्या पथिका केचित्, $D_6$ $T_{1\ 8}$ G °र्यं पथि कश्चिच्च ( $D_6$ °श्चित्ते, $G_4$ °श्चापि ) — $^{b}$ ) $V_1$ B Dn तेभ्यो दास्ये वसु ह्यहं, S वसु दास्यामि तेऽप्यहं — $T_1$ om $36^{cd}$ — $^{c}$ ) S ( $T_1$ om ) ब्राह्मणाश्चैव ये कामान् — $^{d}$ ) $B_1$ अर्चयिष्यति, $D_{7\ 9}$ अर्प ( for अर्थ° ) $D_3$ $T_3$ $G_{1\ 8}$ मा ( for मां )

सर्वं दास्याम्यशेषेण धनं रत्नानि चैव हि ।
क्रियतां निखिलेनैतन्मा विचारय पार्थिव ॥ ३७
तस्य तद्वचनं श्रुत्वा राजा भृत्यानथाब्रवीत् ।
यद्यद्ब्रूयान्मुनिस्तत्तत्सर्वं देयमशङ्कितैः ॥ ३८
ततो रत्नान्यनेकानि स्त्रियो युग्यमजाविकम् ।
कृताकृतं च कनकं गजेन्द्राश्चाचलोपमाः ॥ ३९
अन्वगच्छन्त तमृषिं राजामात्याश्च सर्वशः ।
हाहाभूतं च तत्सर्वमासीन्नगरमार्तिमत् ॥ ४०
तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रचोदितौ ।
पृष्ठे विद्धौ कटे चैव निर्विकारौ तमूहतुः ॥ ४१
वेपमानौ निराहारौ पञ्चाशद्रात्रकर्शितौ ।
कथंचिदूहतुर्वीरौ दंपती तं रथोत्तमम् ॥ ४२
बहुशो भृशविद्धौ तौ क्षरमाणौ क्षतोद्भवम् ।
ददृशाते महाराज पुष्पिताविव किंशुकौ ॥ ४३
तौ दृष्ट्वा पौरवर्गस्तु भृशं शोकपरायणः ।
अभिशापभयात्त्रस्तो न च किंचिदुवाच ह ॥ ४४
द्वन्द्वशश्चाब्रुवन्सर्वे पश्यध्वं तपसो बलम् ।
क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नैव शक्नुमः ॥ ४५
अहो भगवतो वीर्यं महर्षेर्भावितात्मनः ।
राज्ञश्चापि सभार्यस्य धैर्यं पश्यत यादृशम् ॥ ४६

37 ^a) V1 B2 4 5 Dn D10 सर्वान् (for सर्वं) —^b) G2-4 धन (for धनं) D1 2 M ह (for हि)

38 ^a) D4-9 राजा (for श्रुत्वा) —^b) D4-6 सर्वान्; D7-9 ततो (for राजा) Dn2 n3 तथा (for अथ) T G राजामात्यांस्तथाब्रवीत् — Dn1 om 38^c–39^b —^c) D7 यत्तद् (for यद्यद्) D4-8 तच्च; D9 T1 G2 तत्र (for तत्तत्) —^d) D4-8 अशकया (for अशङ्कितैः)

39 Dn1 om 39^ab (cf. v l 38) —^a) D4 6-9 धन (for ततो) —^b) V1 योग्यम्, B1 मुख्यम् (for युग्यम्)

40 ^a) B4 5 D7 9 अनुगच्छत, D4 6 8 अन्व(D4 ॰नु)गच्छतु D9 om from मृषिं up to वेपमानौ (in 42^a) —^b) D1-8 यानयुग्य (for राजामात्याश्च) D7 om च — T1 om 40^cd —^c) D8 नगरम् (for तत्सर्वम्) —^d) D8 तत्सर्वम् (for नगरम्) V1 B Dn D10 आर्तवत् (for आर्तिमत्)

41 D9 om 41 (cf v l 40) —^a) B1 तौ तु तीक्ष्णाग्रेण तदा —^b) V1 B Dn D4-8 10 प्रतोदितौ (for प्रचो॰) —^c) B1 च तौ चैव, D1 2 M1-8 कटौ चैव; D4-7 च कठे च (for कटे चैव) —^d) Dn2 समूहतु

42 D9 om वेपमानौ (cf v l 40) —^b) B1 D2 4-9 T1 G2 रात्रि (for रात्र) Some MSS कर्षितौ —^c) S धैर्याद् (for वीरौ) —^d) B1 Dn1 D1-5 7-9 T2 तौ, M तद् (for त)

43 T1 om 43 —^a) B1 बहुशोंगेषु (for शो भृश) D8 om, D7 9 तु (for तौ) —^b) V1 B2-5 Dn D1 10 स्रवतौ च (for क्षरमाणौ) B1 स्यदमानक्षतोद्भवौ

44 ^a) D8 च (for तु) —^b) G1 2 4 कोप (for शोक) V1 B Dn समाकुल (for परायण) —^c) B2 8 प्रति, Dn3 T1 अपि, D10 अति (for अभि) B2 5 Dn1 n2 D8 5 T1 8 G1 3 M4 भयत्रस्तो, G4 भयग्रस्तो (for ॰भयात्त्रस्तो) —^d) V1 B1-8 स, B4 D10 S (except T1) त, D1-8 [ए]नं, D4-7 [ए]त्र (for च)

45 ^b) M4 तपतो (for ॰सो) —^d) V1 B Dn D10 [इ]ह (for [ए]व) — V1 B5 ins after 45 B2 8 after 47 B1 after 46^ab

325* ब्राह्मणा एव जायेरन्नान्यो वर्णः कथचन।
ईदृशं रथमारुह्य कोऽन्यो जीवितुमुत्सहेत् ।

[L 1) B8 कदाचन (for कथचन) —(L 2) B2 भवितुम् (for जी॰) ]

46 ^a) M1-8 अथो (for अहो) T1 बत महा (for भगवतो) M8 रूप (for वीर्यं) — After 46^ab, B4 ins 325* B4 D2 om 46^c–47^d —^c) B1 D1 3-7 9 T G1 3 4 [अ]स्य (for [अ]पि)

47 B4 D2 om 47 (cf. v l 46) —^a) B1 D7 ह, D8 10 M च, T2 3 G तु (for हि) —^b) B5 Dn2 D7 9 एन, T2 3 G1 3 4 एक (for एतं) G2 [अ]धरधर्मे समूहतु (sic) —^c) V1 B6 D4 5 वा (for च) B8 विकाराद् (for र) B1 M स, B2 यैर्; D3-6 8 हि (for वै) — After 47, B2 8 ins 325*

श्रान्तावपि हि कृच्छ्रेण रथमेतं समूहतुः ।
न चैतयोर्विकारं वै ददर्श भृगुनन्दनः ॥ ४७

भीष्म उवाच ।

ततः स निर्विकारौ तौ दृष्ट्वा भृगुकुलोद्वहः ।
वसु विश्राणयामास यथा वैश्रवणस्तथा ॥ ४८
तत्रापि राजा प्रीतात्मा यथाज्ञप्तमथाकरोत् ।
ततोऽस्य भगवान्प्रीतो बभूव मुनिसत्तमः ॥ ४९
अवतीर्य रथश्रेष्ठाद्दंपती तौ मुमोच ह ।
विमोच्य चैतौ विधिवत्ततो वाक्यमुवाच ह ॥ ५०
स्निग्धगम्भीरया वाचा भार्गवः सुप्रसन्नया ।
ददानि वां वरं श्रेष्ठं तद्ब्रूतामिति भारत ॥ ५१
सुकुमारौ च तौ विद्वान्कराभ्यां मुनिसत्तमः ।
पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसत्तम ॥ ५२
अथाब्रवीन्नृपो वाक्यं श्रमो नास्त्यावयोरिह ।
विश्रान्तौ स्वः प्रभावात्ते ध्यानेनैवेति भार्गव ॥ ५३
अथ तौ भगवान्प्राह प्रहृष्टश्च्यवनस्तदा ।
न वृथा व्याहृतं पूर्वं यन्मया तद्भविष्यति ॥ ५४
रमणीयः समुद्देशो गङ्गातीरमिदं शुभम् ।
कंचित्कालं व्रतपरो निवत्स्यामीह पार्थिव ॥ ५५
गम्यतां स्वपुरं पुत्र विश्रान्तः पुनरेष्यसि ।
इहस्थं मां सभार्यस्त्वं द्रष्टासि श्वो नराधिप ॥ ५६
न च मन्युस्त्वया कार्यः श्रेयस्ते समुपस्थितम् ।
यत्काङ्क्षितं हृदिस्थं ते तत्सर्वं संभविष्यति ॥ ५७
इत्येवमुक्तः कुशिकः प्रहृष्टेनान्तरात्मना ।
प्रोवाच मुनिशार्दूलमिदं वचनमर्थवत् ॥ ५८
न मे मन्युर्महाभाग पूतोऽस्मि भगवंस्त्वया ।

---

48 $T_1$ om $48^a$–$49^b$ (with the ref) $D_{1-7\ 9}$ om the ref —$^a$) $T_3$ $G_{1\ 3}$ तु (for स) $V_1$ om, Dn $D_{1\ 2\ 6-8}$ $M_{1-3}$ तु (for तौ) $D_{10}$ ततो मुनिर्निर्विकारौ, $G_2$ निर्विकारौ मुनिस्तौ तु —$^b$) $D_{4\ 7\ 9}$ कुरु- (for भृगु-) $B_1$ कुलोद्भव, $Dn_1$ $D_8$ °द्वह $T_{2\ 3}$ $G_{1\ 3\ 4}$ मुनिर्दृष्ट्वा भृगूद्वह — $D_{4\ 6\ 7\ 9}$ om (hapl) $48^c$–$50^d$ —$^c$) $Dn_1$ बहु (for वसु) —$^d$) $T_3$ यदा वैश्रवणस्तदा

49 $D_{4\ 6\ 7\ 9}$ om 49, $T_1$ om $49^{ab}$ (for all, cf v l 48) —$^a$) $B_{1\ 4}$ $D_5$ तथा (for तत्र) —$^b$) $V_1$ Dn यथादिष्टम्, $B_5$ यथादृष्टम् (for यथाज्ञप्तम्) $B_3$ तथाकरोत्, $D_{1,2\ 5}$ उपा° (for अथा°) —$^d$) $D_5$ बभूव भृगुनंदन

50 $D_{4\ 6\ 7\ 9}$ om 50 (cf v l 48) —$^a$) $D_{1-3\ 5}$ रथोपस्थाद्, $M_{1-3}$ रथाच्छ्रेष्ठाद् (for रथश्रे°) — $T_1$ om (hapl) $50^{cd}$ —$^c$) $V_1$ B (except $B_5$) $D_{1-3}$ विमुच्य (for विमोच्य) $D_2$ चैनौ, $D_5$ वैतौ (for चैतौ) $T_2$ विमोचमानौ विधिवत्

51 $^a$) $D_5$ ततो (for स्निग्ध) —$^b$) $T_1$ समाभाष्य (for भार्गव सु) — $T_1$ om $51^{cd}$ —$^c$) $B_1$ $D_{4-10}$ $G_2$ ददामि (for °नि) —$^d$) $V_1$ $B_{2\ 5}$ Dn $D_9$ $T_2$ M त ब्रूताम्, $B_4$ $D_2$ तद्भूतम् (for तद्ब्रूताम्)

52 $^a$) $V_1$ B Dn $D_{10}$ विद्वौ (for विद्वान्) $T_1$ सुसमालोक्य तौ विद्वौ —$^d$) S स स्नेहाद्भरतर्षभ

53 $T_1$ om $53^{cd}$ —$^c$) $V_1$ $B_{2\ 4\ 5}$ Dn $D_6$ च (for स्व) —$^d$) $D_{4\ 6-9}$ $M_4$ [ध्या]वैहि, $D_5$ चेति, $G_4$ [ए]वेह (for [ए]वेति) $V_1$ B Dn $D_{10}$ ऊचतुस्तौ तु भार्गव, $T_{2\ 3}$ $G_{1-3}$ ध्यानेनैवेह भारत

54 $^a$) $D_3$ भार्गव (for भगवान्) —$^b$) $V_1$ $G_4$ तथा (for तदा) —$^c$) $D_{1-3}$ अवृथा; $D_{4\ 6-8}$ अन्यथा (for न वृथा) $M_4$ व्याहृत $D_6$ om from पूर्वं up to व्रत (in $55^c$)

55 $D_6$ om up to व्रत (in $55^c$) (cf v l 54) —$^a$) S [ऽ]यमुद्देशो (for समु°) $D_{1\ 2\ 4\ 5\ 7-9}$ रमणीयं व($D_{1\ 2}$ यव)नोद्देशं, $D_3$ °णीये वनोद्देशे — $T_1$ om. $55^{bc}$ —$^b$) $T_{2\ 3}$ $G_4$ इम (for इदं) —$^c$) $V_1$ $B_4$ Dn $D_{1\ 4\ 5\ 7-10}$ $G_{1\ 3}$ किंचित् (for कं°) $D_{1-3}$ व्रतधरो (for °परो) —$^d$) $D_3$ निवसामि (for °त्स्यामि) M च (for [इ]ह)

56 $^a$) $B_1$ स्वं पुर, $T_2$ स्वगृहं (for स्वपुर) $D_{10}$ $T_3$ G तत्र, $T_1$ शीघ्र (for पुत्र) —$^c$) $D_2$ मा (for मां) —$^d$) $D_3$ नृपोत्तम (for नराधिप)

57 $^a$) $V_1$ वा (for च) —$^b$) S (except $T_1$) त्वां (for ते) —$^d$) $D_{1\ 2\ 4\ 6-9}$ transp तत् and सर्वं $V_1$ $B_{2-5}$ Dn $D_{10}$ हि, $B_1$ ते (for स-)

59 $^a$) $D_{4\ 10}$ transp मे and मन्युर् —$^b$) $V_1$ $B_{2-5}$ Dn पूतौ स्वो, $B_1$ प्रीतौ स्वो, $D_{4\ 6-9}$ पूजितो;

संवृत्तौ यौवनस्थौ स्वो वपुष्मन्तौ बलान्वितौ ॥ ५९
प्रतोदेन व्रणा ये मे सभार्यस्य कृतास्त्वया ।
तान्न पश्यामि गात्रेषु स्वस्थोऽस्मि सह भार्यया ॥ ६०
इमां च देवीं पश्यामि मुने दिव्याप्सरोपमाम् ।
श्रिया परमया युक्तां यथादृष्टां मया पुरा ॥ ६१
तव प्रसादात्संवृत्तमिदं सर्वं महामुने ।
नैतच्चित्रं तु भगवंस्त्वयि सत्यपराक्रम ॥ ६२
इत्युक्तः प्रत्युवाचेदं च्यवनः कुशिकं तदा ।
आगच्छेथाः सभार्यश्च त्वमिहेति नराधिप ॥ ६३
इत्युक्तः समनुज्ञातो राजर्षिरभिवाद्य तम् ।
प्रययौ वपुषा युक्तो नगरं देवराजवत् ॥ ६४
तत एनमुपाजग्मुरमात्याः सपुरोहिताः ।
बलस्था गणिकायुक्ताः सर्वाः प्रकृतयस्तथा ॥ ६५
तैर्वृतः कुशिको राजा श्रिया परमया ज्वलन् ।
प्रविवेश पुरं हृष्टः पूज्यमानोऽथ बन्दिभिः ॥ ६६
ततः प्रविश्य नगरं कृत्वा सर्वाह्णिकक्रियाः ।
भुक्त्वा सभार्यो रजनीमुवास स महीपतिः ॥ ६७
ततस्तु तौ नवमभिवीक्ष्य यौवनं
परस्परं विगतजराविवामरौ ।
ननन्दतुः शयनगतौ वपुर्धरौ
श्रिया युतौ द्विजवरदत्तया तया ॥ ६८
स चाप्यृषिर्भृगुकुलकीर्तिवर्धन-
स्तपोधनो वनमभिराममृद्धिमत् ।
मनीषया बहुविधरत्नभूषितं
ससर्ज यन्नास्ति शतक्रतोरपि ॥ ६९

इति श्रीमहाभारते अनुशासनपर्वणि त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

D5 तुष्टोस्मि, D10 प्रीतोस्मि (for पूतोऽस्मि) — c) D1-3 द्वौ; D5 7 T1 च, D8 तु (for स्वो) D4 सप्रवृत्तौ यौवनस्थौ — d) D4 6 7 9 आयुष्मंतौ (for वपु )

60 b) V1 B Dn D5 10 त्वया कृता (by transp), D4 6 कृता मया — D2 om (hapl) 60cd — d) D4, 6-9 स्वस्थोस्मि विगतज्वर

61 b) V1 B Dn D10 वपुषाप्सरसोपमा; D1-3 मुने दिव्याप्सरःसमां — c) B4 Dn1 n2 D2 युक्ता (for युक्तां) — d) D2 transp मया and पुरा V1 B Dn D10 यथा दृष्टा पुरा मया, D1-3 यथा दृष्टा मयैव च, T1 यथा दृष्टं महत्तप; T2 3 G M यथा दृष्ट्वा (M4 कृत्वा) महत्तप

62 T1 om. 62ab — a) D4-9 भवत्प्रसादात्, T2 3 G3 4 त्वत्प्रसा (for तव प्र) V1 B (except B4) Dn1 n2 D1 तव प्रसादसंवृत्तम्, G1 त्वत्प्रसादात्संप्रवृत्तम् — c) B1 हि (for तु) — d) D5 10 T G2-4 पराक्रमे

63 a) V1 B Dn D10 [प्]न (for [इ]द) — b) D1 कश्यप (for कुशिकं) V1 B Dn D10 कुशिक च्यवनस्तदा (B1-3 या) — c) B1 D1-9 त्वम् (for च) — d) D1-9 इहेति मो (D2 ति च), T1 इहैव तु (for त्वमिहेति) B1 इहेति च नराधिप

64 b) D4 S (except T1) च (for तम्) — c) D4 वै प्रिया; D6-9 च प्रिया (for वपुषा) — d) D4 नगरे D5 चैव (for देव)

65 a) D5 पुनर् (for एनम्) D1-4 6-9 तत पुन समाजग्मुर् — T1 om 65cd — c) T2 3 G क्षत्रिया, M गणका (for गणिका) D4 6-9 बलकायस्थगणका; D5 अलकृता सगणिका — d) D8 G4 तदा (for तथा)

66 a) Partial lacuna in D5 D5 संवृत्त (for तैर्वृत) T2 सर्वतो (for कुशिको) D4 6 7 9 राजन् (for राजा) — T1 om 66bc — b) V1 D10 युत (for ज्वलन्) — c) B5 पुरीं (for पुर) — d) D4 6 7 T1 2 स्तूयमानोय (T1 नश्च) बदिभि

67 b) V1 B2 3 5 Dn3 पूर्वाह्णिकी; B1 4 T2 3 G1 3 4 सर्वाह्णिका (B4 °की), Dn1 n2 D10 पौर्वाह्णिकी (for सर्वाह्णिक) D1-3 5 T1 G2 कृतसर्वाह्णिकक्रिय, D4 6-9 कृतपूर्वाह्णिकक्रिय — d) V1 B Dn D10 महाद्यु (B1 म)ति (for महीपति)

68 a) Dn1 ततो (for तु तौ) D5 प्रसमीक्ष्य (for नवमभिवीक्ष्य) — b) T2 परस्परौ V1 B Dn °रुजाव्

## ५४

भीष्म उवाच ।
ततः स राजा रात्र्यन्ते प्रतिबुद्धो महामनाः ।
कृतपूर्वाह्णिकः प्रायात्सभार्यस्तद्वनं प्रति ॥ १
ततो ददर्श नृपतिः प्रासादं सर्वकाञ्चनम् ।
मणिस्तम्भसहस्राढ्यं गन्धर्वनगरोपमम् ।
तत्र दिव्यानभिप्रायान्ददर्श कुशिकस्तदा ॥ २
पर्वतान्रम्यसानूंश्च नलिनीश्च सपङ्कजाः ।
चित्रशालाश्च विविधास्तोरणानि च भारत ।
शाद्वलोपचितां भूमिं तथा काञ्चनकुट्टिमाम् ॥ ३
सहकारान्प्रफुल्लांश्च केतकोद्दालकान्धवान् ।
अशोकान्मुचुकुन्दांश्च फुल्लांश्चैवातिमुक्तकान् ॥ ४
चम्पकांस्तिलकान्भव्यान्पनसान्वञ्जुलानपि ।
पुष्पितान्कर्णिकारांश्च तत्र तत्र ददर्श ह ॥ ५
श्यामां वारणपुष्पीं च तथाष्टापदिकां लताम् ।

---

(for जराव्) — $^{c}$) T2 3 G1 3 4 सदन (for शयन) — $^{d}$) Dn3 [श्र]न्वितौ, D1–3 5–9 वृतौ (for युतौ) Dn1 n2 G2 तदा (for तया)

69 $^{a}$) V1 B Dn D5 10 अथ (for स च) — $^{d}$) V1 यत्र**, B1–3 5 Dn यत्र पुरि, B4 यत्र भुवि, D5 वै नास्ति (for यत्रास्ति)

Colophon — *Parvan name* B1–4 Dn3 D1 3 शांति — *Sub parvan* V1 B Dn1 n2 D1 2 7 M1 2 4 दानधर्म — *Adhy name* V1 B1 3 4 5 Dn D1–4 6–10 T3 G2 च्यवनकुशिकसंवाद, T2 धर्मनिर्णये कुशिकच्यवनसंवादे च्यवनशुश्रूषायां कुशिकवरप्राप्ति, G1 3 कुशिकच्यवनसंवाद — *Adhy no* (figures, words or both) V1 53 (as in text), D5 50, D10 57, T1 M 82, T2 3 G2 4 89, G3 83 — *Śloka no* D4 66

## 54

1 $^{b}$) D1 प्रवि (for प्रति) D3 जनाधिप, D10 महातपा (for मना) — $^{c}$) D1 2 7 9 -पौर्वाह्णि(D3 °ह्णि)क, S -सर्वाह्णि(T2 G2 °ह्णि)क, some MSS -पूर्वाह्णिक (for पूर्वाह्णिक)

2 D5 reads 2–3 after 14$^{a}$ — $^{a}$) D5 स तत्रैव मनोरम्यं — $^{b}$) B1 तत्र (for सर्व) — $^{f}$) T2 G2 4 तथा (for तदा)

3 For the sequence in D, cf. v. l. 2 — $^{a}$) V1 Dn1 n2 रूप्यसानूंश्, Dn3 रत्न, D6 रम्यशृंगाश् (for °सानूंश्) — $^{b}$) D5 नलिन्यश्, S नलिनीश् (for नलि) D1 6–9 फुल्ल, G4 च सु (for च स) — $^{d}$) D1 ह् (for च) — T1 om 3$^{ef}$ — $^{e}$) D1–9 शाड्वलोपचिता, T2 3 M शाड्वलोपहिता, G शाड्वला वहिता (for शाद्वलोपचिता) — $^{f}$) D6 7 9 कुट्टिमं, G4 मृत्तिका (for -कुट्टिमाम्)

4 D5 om 4$^{a}$–5$^{b}$ — $^{a}$) G4 पुष्पितांश्च (for सहकारान्) T1 च विपुलान् (for प्रफुल्लांश्च) — D1–4 6–9 om (hapl) 4$^{bc}$ — $^{b}$) Dn2 वरान्, T1 अपि (for धवान्) V1 केतकोद्दालिकान्धवान्, B4 °द्दालिकान्धवान्, G1 3 °द्दालकालवान्, M4 °ट्टालकान्धवान् — $^{c}$) B2 Dn1 n2 सह कुदाश्, T1 पिचुमंदाश्, M मुचुलिं(M2 °लिं)दांश् (for °कुन्दाश्) — $^{d}$) T1 मल्लांश् (for फुल्लाश्) B1 [श्च]भि (for [श्च]ति)

5 D5 om 5$^{ab}$ (cf v. l. 4) — $^{a}$) D4 6–9 पनसान् (for तिलकान्) B4 D10 शालान्, S सर्जान् (for भव्यान्) — $^{b}$) V1 D10 बकुलान् (for वञ्जुलान्) D4 6–9 तिलकानर्जुनानपि, T1 असनार्जुनका°, T2 3 G M असनानर्जुना — $^{c}$) B6 पुष्पितान्कर्णिकांश्चैव, D5 श्यामान्सुपुष्पितान्वृक्षांस्

6 T1 om 6–7 — $^{a}$) M2 श्यामान् (for श्यामा) M1–3 वारुण- (for वारण-) D6 T3 पुष्पां (for पुष्पीं) V1 B Dn D1–5 श्यामान्वारणपुष्पां(D5 °पुष्या)श्च, D10 श्यामाश्चारुणपुष्पाश्च, T2 G श्यामा चारणपुष्पा च — $^{b}$) D4 6 T2 [श्र]ष्टापद(T2 °ति)का, D7–9 [श्र]ष्टपदकां (for [श्र]ष्टापदिकां) V1 B5 Dn तथाष्टपदिका लता, B1–4 D1–3 10 तथाष्टापदिका लता, D5 °कानथ — $^{c}$) D1–3 तदाश्लि(D2 3 °श्लि)ष्टा, D4 परिश्लिष्टां, D6 10 T2 3 G क्षिप्ता, D6–9 श्लिष्टा (for क्लृप्ता) M तत्रा श्रम परिक्षिप्त — $^{d}$) D5 स ददर्श (by transp)

तत्र तत्र परिक्रम्य ददर्श स महीपतिः ॥ ६
वृक्षान्पद्मोत्पलधरान्सर्वर्तुकुसुमांस्तथा ।
विमानच्छन्दकांश्चापि प्रासादान्पद्मसंनिभान् ॥ ७
शीतलानि च तोयानि क्वचिदुष्णानि भारत ।
आसनानि विचित्राणि शयनप्रवराणि च ॥ ८
पर्यङ्कान्सर्वसौवर्णान्परार्ध्यास्तरणास्तृतान् ।
भक्ष्यभोज्यमनन्तं च तत्र तत्रोपकल्पितम् ॥ ९
वाणीवादांश्छुकांश्चापि शारिकाभृङ्गराजकान् ।
कोकिलाञ्छतपत्रांश्च कोयष्टिमककुक्कुटान् ॥ १०
मयूरान्कुक्कुटांश्चापि पुत्रकाञ्जीवजीवकान् ।
चकोरान्वानरान्हंसान्सारसांश्चक्रसाह्वयान् ॥ ११
समन्ततः प्रणदितान्ददर्श सुमनोहरान् ।
क्वचिदप्सरसां संघान्गन्धर्वाणां च पार्थिव ॥ १२
कान्ताभिरपरांस्तत्र परिष्वक्तान्ददर्श ह ।
न ददर्श च तान्भूयो ददर्श च पुनर्नृपः ॥ १३
गीतध्वनिं सुमधुरं तथैवाध्ययनध्वनिम् ।
हंसान्सुमधुरांश्चापि तत्र शुश्राव पार्थिवः ॥ १४
तं दृष्ट्वात्यद्भुतं राजा मनसाचिन्तयत्तदा ।
स्वप्नोऽयं चित्तविभ्रंश उताहो सत्यमेव नु ॥ १५
अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम् ।

---

7 T1 om 7 (of v l 6) — a) B om ed रम्यान् (for वृक्षान्) D2 दलान्, D4 7 वरान् (for -धरान्) D5 पद्मोत्पलवराश्चैव — b) D8 अपि (for तथा) — c) V1 B Dn D4 6–10 प्रतिमांश्, D5 -सदृशांश् (for -च्छन्द कांश्) T2 3 G विमान चन्द्रिकाश्चापि — d) V1 B3–5 Dn D10 शैल, B1 अद्रि (for पद्म) D4 6–9 प्रासादान्सर्वकांचनान्

8 a) Some Southern MSS शीतलानि — c) M च (for वि) — d) Dn1 n2 D7 8 शयनं (for °न) S प्रस्तराणि (for -प्रव) B2 (marg as in text) तेषां प्रावरणानि च

9 a) V1 B2 4. 5 Dn D2 रत्न (for सर्व) — b) V1 B1 5 Dn D1–6 G2 परार्ध्यास्तरणावृतान्, T1 णान्वितान्, T2 णानि च — c) Dn2 D4 M1 2 4 भक्ष्यं (for भक्ष्य) — d) B1 कल्पितान् (for °तम्)

10 a) B1 3 4 वीणावादाम् (B1 द), D4–9 वाणीवराम्, D10 तालपादाम्, T1 वारिवाहाम्, T2 3 G पाणिवाहाश्, M पाणिवहाम् (for वाणीवादाम्) V1 B (except B1) Dn D5 चैव, D4 6 वापि (for चापि) — b) D1 4 सारिका, D7–9 सायकान् (D8 का), D10 कपोतान् (for शारिका) B1 राजिकान् (for राज) V1 D5 T2 सारिकान्भृगराजिकान् — T1 om (hapl ?) 10cd — c) Dn1 कोयष्टिमदि, D1–3 जल, T2 3 G °मभि, M4 °मद्द, Madras ed मणि (for मक) V1 B5 Dn2 n3 सकोयष्टिककुकुभान्, B1–4 D10 कोयष्टिवक(B1 चक्र)कुकुभा(B3 °टा)न्, D4–9 ष्टीनथ कुर्कुटान्

11 D4 6–9 (hapl ?) om 11ab — a) D1 कुर्कुजाश्; T1 कुकुराश्; T2 3 G M1–3 कुररांश् (for कुक्कुटांश्) B1 [ए]व (for [अ]पि) D5 मधुरारावककुभान् — b) V1 B Dn D10 दात्यूहाम् (for पुत्रकान्) D3 om (hapl) जीव G2 -जीविकान् D5 पुत्रजीवकजीविकान् — T1 om (hapl ?) 11cd — c) B1 4 वायसान्, D5 जलजान् (for वानरान्) — d) D4 5 चक्रकाह्वयान् (for चक्रसा°) T2 चक्रवाकसमाह्वयान्

12 a) V1 B2 (marg) 4 5 Dn D10 प्रमुदितान्, B1 संमुदि; B2 3 परिवृ, S प्रणदतो (for °दितान्) — D6 om (hapl ?) 12b–13b — b) B1 3 G2 स (for सु) — c) D5 T2 3 G अप्सरस (for रसां) D4 7–9 संघैर् (for संघान्) — d) V1 B1–3 M पार्थिव°, D4 7–9 सर्वश, T1 भारत (for पार्थिव)

13 D3 om 13ab (cf v l 12) — a) T3 G1 3 4 तास्ताभिर्, G2 ह्याता (for कान्ता) V1 परमांस् (for अपरांस्) — b) B1 परियुक्तान् (for ष्वक्तान्) D4 7–9 परस्पर (for ददर्श ह) — T1 om 13cd — c) T2 3 G सदा (for च तान्) D3 तत्र (for भूयो) — d) T3 G पुर (for पुनर्) B4 D4 6–9 पुमं, D1–3 नृप, D5 तदा (for नृप)

14 a) D1–4 G2 स (for सु) D5 गीतध्वनीन्सुमधुरांस् — After 14a, D4 reads 2–3 — b) D3 च (for [ए]व) V1 B4 5 Dn [अ]ध्यापन (for [अ]ध्ययन-) D10 तत्रैवाध्यापनध्वनिं — c) D4 6 G1 स (for सु) B1 हसानां मधुरा वाच, D1–3 5 °ना मधुर चापि, T1 नां च ध्वनिं चापि — d) D4 6 9 तथा, D5 तस (for तत्र) V1 D1 10 पार्थिव (for °व)

15 a) V1 B Dn3 D9 T2 3 G1 4 M3 तद्दृष्ट्वा; D1–3 दृष्ट्वा च (for तं दृष्ट्वा) Dn3 ह्यद्भुत, D5 चाद्भुत

उत्तरान्वा कुरून्पुण्यानथ वाप्यमरावतीम् ॥ १६
किं त्विदं महदाश्चर्यं संपश्यामीत्यचिन्तयत् ।
एवं संचिन्तयन्नेव ददर्श मुनिपुंगवम् ॥ १७
तस्मिन्विमाने सौवर्णे मणिस्तम्भसमाकुले ।
महार्हे शयने दिव्ये शयानं भृगुनन्दनम् ॥ १८
तमभ्ययात्प्रहर्षेण नरेन्द्रः सह भार्यया ।
अन्तर्हितस्ततो भूयश्च्यवनः शयनं च तत् ॥ १९
ततोऽन्यस्मिन्वनोद्देशे पुनरेव ददर्श तम् ।
कौश्यां बृस्यां समासीनं जपमानं महाव्रतम् ।
एवं योगबलाद्विप्रो मोहयामास पार्थिवम् ॥ २०
क्षणेन तद्वनं चैव ते चैवाप्सरसां गणाः ।
गन्धर्वाः पादपाश्चैव सर्वमन्तरधीयत ॥ २१
निःशब्दमभवच्चापि गङ्गाकूलं पुनर्नृप ।
कुशवल्मीकभूयिष्ठं बभूव च यथा पुरा ॥ २२
ततः स राजा कुशिकः सभार्यस्तेन कर्मणा ।
विस्मयं परमं प्राप्तस्तदृष्ट्वा महदद्भुतम् ॥ २३
ततः प्रोवाच कुशिको भार्यां हर्षसमन्वितः ।
पश्य भद्रे यथा भावाश्चित्रा दृष्टाः सुदुर्लभाः ॥ २४
प्रसादाद्भृगुमुख्यस्य किमन्यत्र तपोबलात् ।
तपसा तदवाप्यं हि यन्न शक्यं मनोरथैः ॥ २५
त्रैलोक्यराज्यादपि हि तप एव विशिष्यते ।
तपसा हि सुतप्तेन क्रीडत्येष तपोधनः ॥ २६
अहो प्रभावो ब्रह्मर्षेश्च्यवनस्य महात्मनः ।
इच्छन्नेष तपोवीर्यादन्यांल्लोकान्सृजेदपि ॥ २७

---

(for [अ]त्यद्भुतं) — $^{b}$) B5 G2 चिंतयंस् (for [अ]चिन्तयत्) — B1 om $15^{cd}$ — $^{c}$) D5 त्वमोयं किमु विस्रंभ — $^{d}$) D1 8–9 च (for तु)

16 $^{a}$) D10 अह (for अहो) — $^{b}$) D8 [ऽ]ति (for ऽस्मि)

17 $^{a}$) V1 B Dn D4 T2 G3 च, T1 3 G1 M1–8 तु (for तु) D7 परम् (for महद्) — $^{b}$) T1 corrupt, T2 3 G M सस्य पश्यामि चिंतयन — D5 om (hapl ?) $17^{c}$–$19^{d}$

18 D5 om 18 (cf v l 17) — $^{c}$) T G महार्ह (for °र्हे)

19 D5 om 19 (cf v l 17) — $^{a}$) B3 5 अभ्यगात् (for °यात्) D10 प्रकर्षेण (for प्रह°) — $^{d}$) S मुनिश्च (for च्यवन) D1–8 गत (for च तत्)

20 $^{a}$) G1 [ऽ]न्यञ्च (for ऽन्यस्मिन्) — $^{b}$) D9 ह, M4 तत् (for तम्) — $^{c}$) V1 B1 3–5 Dn3 D2 बृष्या, D5 (marg) 10 M1 बृश्या, D7 om, G3 8 असा (for बृस्या) — $^{d}$) V1 D5 तपमान (for जप) — $^{f}$) M1–8 त नृपं (for पार्थिवम्)

21 $^{a}$) D3 सर्वं (for चैव) — $^{b}$) D1–4 6 7 9 तथा (for ते च) — $^{c}$) D1 3 9 M पर्वताश् (for पादपाश्) — $^{d}$) G1 partly damaged D1 तत्रैव (for सर्वम्)

22 $^{b}$) D8 अनुत्तम (for पुनर्नृप) — $^{c}$) D1–3 कुशवल्कलभूयिष्ठो — $^{d}$) S (except M2) पुर

23 T1 om (hapl) 23 — $^{a}$) D1–8 सभार्य (for स राजा) D8 तत स कुशिको राजा — D6 om $23^{b}$–$29^{c}$ — $^{b}$) D2 सगणस्, D8 तस्यर्षेस् (for सभार्यस्) — $^{d}$) T2 G2 त (for तद्) D2 परम् (for महद्)

24 D6 om 24 (cf v l 23) D4 om $24^{b}$–$29^{a}$ — $^{c}$) D7 8 महा (for यथा) — $^{d}$) D5 चित्रदृष्टा, D7 चित्रा दृष्टा, S दृष्टाश्चित्रा (by transp)

25 D6 om 25 (cf v l 23) D4 om 25 (cf v l 24) — $^{a}$) T1 ऋषि (for भृगु) — B3 om (hapl ?) $25^{c}$–$26^{d}$ D7–9 om (hapl) $25^{c}$–$26^{b}$ — $^{c}$) D8 अवाप्तव्य (for °प्यं हि) — B2 om (hapl) $25^{d}$–$26^{a}$ — $^{d}$) Dn तु (for न)

26 D6 om 26 (cf. v l 23) D4 om 26 (cf v l 24) B3 om 26, D7–9 om $26^{ab}$, B2 om $26^{a}$ (for all, cf v l 25) T1 om 26 — $^{d}$) D5 7–9 शक्यो द्रष्टु (for क्रीडत्येष) V1 B (B3 om) Dn1 n2 शक्यो मोक्षस्तपोबलात्

27 D6 om 27 (cf. v l 23) D4 om 27 (cf v l 24) D3 om (hapl ?) $27^{ab}$ — $^{a}$) T1 महा (for अहो) D2 महर्षेश् D7–9 हि महाश्, M1 विप्रर्षेश् (for ब्रह्म) — $^{c}$) B- 4 D1–8 T G1 3 4 इच्छन्नेव Dn °न्नेष, G2 °न्नेव (for °न्नेष) — $^{d}$) D1–3 5 7–9 लोकानन्यान् (by transp)

ब्राह्मणा एव जायेरन्पुण्यवाग्बुद्धिकर्मणः ।
उत्सहेदिह कर्तुं हि कोऽन्यो वै च्यवनादृते ॥ २८
ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः ।
ब्राह्मण्यस्य प्रभावाद्धि रथे युक्तौ स्वधुर्यवत् ॥ २९
इत्येवं चिन्तयानः स विदितश्च्यवनस्य वै ।
संप्रेक्ष्योवाच स नृपं क्षिप्रमागम्यतामिति ॥ ३०
इत्युक्तः सहभार्यस्तमभ्यगच्छन्महामुनिम् ।
शिरसा वन्दनीयं तमवन्दत स पार्थिवः ॥ ३१
तस्याशिषः प्रयुज्याथ स मुनिस्तं नराधिपम् ।
निषीदेत्यब्रवीद्धीमान्सान्त्वयन्पुरुषर्षभ ॥ ३२
ततः प्रकृतिमापन्नो भार्गवो नृपते नृपम् ।
उवाच श्लक्ष्णया वाचा तर्पयन्निव भारत ॥ ३३
राजन्सम्यग्जितानीह पञ्च पञ्चसु यत्त्वया ।
मनःषष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोऽसि तेन वै ॥ ३४
सम्यगाराधितः पुत्र त्वयाहं वदतां वर ।
न हि ते वृजिनं किंचित्सुसूक्ष्ममपि विद्यते ॥ ३५
अनुजानीहि मां राजन्गमिष्यामि यथागतम् ।
प्रीतोऽस्मि तव राजेन्द्र वरश्च प्रतिगृह्यताम् ॥ ३६

कुशिक उवाच ।

अग्निमध्यगतेनेदं भगवन्संनिधौ मया ।
वर्तितं भृगुशार्दूल यन्न दग्धोऽस्मि तद्बहु ॥ ३७
एष एव वरो मुख्यः प्राप्तो मे भृगुनन्दन ।

---

28 $D_6$ om. 28 ( cf v l 23 ) $D_4$ om 28 ( cf v l 24 ) $T_1$ om 28-29 — [b] ) $V_1$ B ( except $B_6$ ) $Dn_3$ $D_8$ -कर्मिण , $T_{2\,3}$ G कर्मणा ( for °ण ) $D_{10}$ पुण्यास्तान्विद्धि कर्मणा — [c] ) $V_1$ B $D_{10}$ कृत्वैव , $Dn_{1\,n_3}$ कृत्वैव , $M_4$ कृत्वेद ( for कर्तुं हि ) $D_{1-8\,7-9}$ उत्सहेत्कर्तुमेव हि , $D_5$ उत्साह कर्तुमेव हि ; $T_{2\,3}$ G उत्साहमिह कृत्वेदं — [d] ) $D_{10}$ [ऽ]पि ( for ऽन्यो ) — After 28, $B_{1\,4}$ $D_{6\,8\,10}$ $T_{2\,3}$ G M ins

326* ब्राह्मण्यं दुर्लभं लोके तल्लब्ध्वा दुर्लभं तपः ।
सिद्धिस्तत्रापि दुष्प्रापा सिद्धेरपि परा गतिः ।
[ $B_{1\,4}$ om, (hapl.) line 1 ]

29 $D_6$ om $29^{ab1}$ ( cf v l 23 ) $D_4$ om $29^{a}$ ( cf v l 24 ) $T_1$ om 29 ( cf v l 28 ) — [b] ) $D_5$ भवेत् ( for नरैः ) — [c] ) $D_2$ स्व ( for प्र ) — [d] ) $D_{4\,6-9}$ $G_2$ युक्तोस्मि , $D_5$ युक्ता स ( for युक्तौ स्व ) $D_{1-8}$ युक्तौ स्वो धुर्यवद्द्वये

30 [a] ) $D_{4\,6\,7\,9}$ $T_{2\,3}$ G $M_4$ सन् ( for स ) $D_4$ इत्येवं चिंतमानस्य — [b] ) $D_2$ T G च्यवनेन ( for नस्य ) $D_{4\,6-9}$ च ( for वै ) — [c] ) $D_6$ corrupt, $D_{10}$ त , $T_3$ $G_{3\,4}$ $M_{1-2}$ स ( for स ) $V_1$ B Dn $D_{4-10}$ $T_1$ $G_2$ नृपतिं , $T_2$ वचनं , $T_3$ $G_{1\,3\,4}$ च्यवन ( $T_3$ न ); M च नृपं ( for स नृप )

31 [a] ) $V_1$ B Dn $D_{4\,6-10}$ तु ( for तम् ) — [b] ) $V_1$ B Dn $D_{5\,7\,8\,10}$ सोऽभ्यगच्छन् ( for मभ्य ) — $G_1$ om $31^{c}$–$33^{b}$ — [c] ) $D_{4-9}$ च ( for तम् ) — [d] ) $V_1$ B Dn $D_{1\,2\,10}$ $T_1$ च ( for स ) $D_{4-9}$ वंदयामास पार्थिव

32 $G_1$ om 32 ( cf v l 31 ) — [a] ) $D_{4\,5\,10}$ [आ]शिषं $Dn_1$ $D_5$ प्रयुजान , $D_{7-9}$ सम्प्रयुज्याथ ( hypermetric ) ( for प्रयुज्याथ ) — [b] ) $Dn_3$ om स $D_{4\,10}$ नराधिप — [d] ) $Dn_2$ $D_{2\,3\,5}$ $T_{2\,3}$ $G_{2-4}$ पुरुषर्षभ ( $Dn_2$ $D_2$ °भ ), $D_{4\,6-8}$ $T_1$ भरतर्षभ

33 $G_1$ om $33^{ab}$ ( cf v l 31 ) — [b] ) $V_1$ $B_6$ $Dn_3$ $G_{3\,4}$ नृप ( for नृपम् ) $B_{1\,4}$ $D_{10}$ भार्गवो नृपतिं पुनः , $B_{2\,3}$ $D_{1-3}$ वो नृपतौ ( $B_{2\,3}$ °तिं ) नृप

34 [a] ) $T_2$ पूजितानि ; $T_3$ $G_{1\,3\,4}$ निर्जितानि ( for जितानीह ) — [b] ) $V_1$ B ( except $B_4$ ) Dn $D_{3\,4\,6\,8}$ पच स्वय , $D_{1\,2}$ पंचसु तत् , $D_{7\,9}$ पञ्च च यत् ( for पञ्चसु यत् )

35 [a] ) $D_{1-8}$ तत्र ( for पुत्र ) — [b] ) $V_1$ $B_5$ Dn प्र- ( for [त्व]हं ) — [d] ) $D_6$ सुश्लक्ष्णम् ( for सुसूक्ष्मम् ) $D_5$ लक्ष्यते , T G दृश्यते ( for विद्यते )

36 [a] ) M मा ( for मां ) — $D_5$ om $36^{cd}$ — [d] ) $B_3$ $G_1$ $M_{1\,3\,4}$ वर ( for वरश्च )

37 $G_4$ om the ref $D_3$ राजा ( for कुशिक ) $T_1$ om $37^{a}$–$38^{b}$ ( retaining the ref ) — [a] ) $D_7$ $M_4$ मध्ये ( for मध्य- ) $V_1$ $B_{3\,4\,5}$ Dn $M_{1-3}$ [इ]व , $B_{1\,3}$ $D_{4-10}$ $M_4$ [ए]व ( for [इ]दं ) — [b] ) $D_5$ तव ( for मया ) $V_1$ $D_4$ $T_{2\,3}$ $G_2$ $M_{1-3}$ भगवत्संनिधौ मया — [c] ) $T_3$ $G_{3\,4}$ $M_4$ वर्तितु $D_{10}$ मुनि ( for भृगु ) — [d] ) $B_1$ $D_1$ तद्वद , $B_6$ मे बहु ( for तद्बहु )

यत्प्रीतोऽसि समाचारात्कुलं पूतं ममानघ ॥ ३८
एष मेऽनुग्रहो विप्र जीविते च प्रयोजनम् ।
एतद्राज्यफलं चैव तपश्चैतत्परं मम ॥ ३९
यदि तु प्रीतिमान्विप्र मयि त्वं भृगुनन्दन ।
अस्ति मे संशयः कश्चित्तन्मे व्याख्यातुमर्हसि ॥ ४०

इति श्रीमहाभारते अनुशासनपर्वणि चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## ५५

च्यवन उवाच ।
वरश्च गृह्यतां मत्तो यश्च ते संशयो हृदि ।
तं च ब्रूहि नरश्रेष्ठ सर्वं संपादयामि ते ॥ १
कुशिक उवाच ।
यदि प्रीतोऽसि भगवंस्ततो मे वद भार्गव ।
कारणं श्रोतुमिच्छामि मद्गृहे वासकारितम् ॥ २
शयनं चैकपार्श्वेन दिवसानेकविंशतिम् ।
अकिंचिदुक्त्वा गमनं बहिश्च मुनिपुंगव ॥ ३
अन्तर्धानमकस्माच्च पुनरेव च दर्शनम् ।
पुनश्च शयनं विप्र दिवसानेकविंशतिम् ॥ ४
तैलाभ्यक्तस्य गमनं भोजनं च गृहे मम ।
समुपानीय विविधं यद्दग्धं जातवेदसा ।
निर्याणं च रथेनाशु सहसा यत्कृतं त्वया ॥ ५
धनानां च विसर्गस्य वनस्यापि च दर्शनम् ।

---

38 $T_1$ om $38^{ab}$ ( of v l 37 ) — $^b$) $D_{4\,6-9}$ संप्राप्तो ( for प्राप्तो मे ) — $^c$) $V_1$ $B_{1\,2\,4\,5}$ Dn $D_{10}$ मया ब्रह्मन्, $D_5$ समाचार्यं, $T_1$ समाहारै , $T_{2\,3}$ $G_{1\,3\,4}$ M °चारै ( for °चारात् ) $B_3$ प्रीतोसि यन्मया ब्रह्मन्, $G_2$ यत्प्रीतोथ ममाचारै — $^d$) $V_1$ B Dn $D_{4\,6-9}$ कुल त्रा( $D_{4\,6\,8\,9}$ पा )त च मेनघ, $D_{1-3}$ कुल प्रीतोस्मि तेनघ

39 $^a$) $G_3$ एव ( for एष ) — $^b$) T G $M_4$ [ऽ]पि ( for च ) — $^c$) $G_2$ राजफल $D_5$ $M_4$ [ए]तत् ( for [ए]व ) — $^d$) $D_{10}$ [ए]व ( for [ए]तत् ) $V_1$ फलं ( for पर ) $Dn_1$ $n_2$ तपसश्च फल मम , $D_5$ तपस्तत्तत्फल मत

40 $^a$) $V_1$ B Dn $D_{5\,10}$ $T_2$ त्व ( for तु ) — $^b$) $V_1$ B Dn $D_{10}$ वै ( for त्व ) $D_{4\,6-9}$ सत्तम ( for -नन्दन ) — $^c$) $G_3$ अस्मिन् ( for अस्ति ) $D_2$ om मे

Colophon — *Parvan name* $B_{1\,2\,4}$ $Dn_3$ $D_1$ शांति — *Sub-parvan* $V_1$ B $Dn_1$ $n_3$ $D_{1\,2\,7\,10}$ दानधर्म — *Adhy name* $V_1$ $B_{1\,2\,4\,5}$ Dn $D_{2-4\,6-9}$ च्यवनकुशिकसवाद $D_1$ च्यवनभृगुसवाद , $D_5$ च्यावन , $T_2$ परशुरामचरित्रे कुशिकच्यवनसवादे च्यवनदर्शन — *Adhy no* ( figures, words or both ) $V_1$ 54 ( as in text ), $D_4$ 52 , $D_{10}$ 58 , $T_1$ M 83 , $T_{2\,3}$ $G_{2\,4}$ 90 , $G_1$ 85 , $G_3$ 84 — *Sloka no* $D_4$ 35

### 55

1 $B_3$ om 1 ( retaining the ref ) — $^b$) $D_5$ यत्र ( for यश्च ) $T_{2\,3}$ $G_{1\,3\,4}$ सो ( for से ) — $^c$) $D_{4\,6-9}$ तच्च्, $M_4$ स्व ( for तं ) $Dn_1$ $n_2$ $T_1$ प्र , $D_{1-3}$ मे ( for च ) $D_{1-4\,6-9}$ नरव्याघ्र ( for श्रेष्ठ ) — $^d$) $Dn_3$ $D_{10}$ [अ]ह ( for ते )

2 $B_3$ om , $G_2$ राजा ( for कुशिक ) — $^b$) $G_4$ तथा ( for ततो ) — $^d$) $D_{4\,6}$ मद्गृह ( for °हे )

3 $^a$) $D_{10}$ शयने ( for न ) $D_4$ वा ( for च ) $D_5$ [ए]व ( for [ए]क ) — $M_1$ om ( hapl ) $3^c$–$4^d$ — $^c$) $D_{10}$ ( also as in text ) S ( $M_1$ om ) न किंचिद् ( for आकिं° ) D ( except Dn ) च गृहाद् , $G_2$ शयन ( for गमन ) — $^d$) $B_3$ -सत्तम ( for पुगव )

4 $M_1$ om 4 ( cf v l 3 ) — $^b$) $D_3$ दर्शन पुनरेव च — $^c$) $D_{1-3\,10}$ शयित ( for शयन ) $B_{3\,4}$ पुनश्चा परपार्श्वेन

5 $^a$) $B_3$ तैलाभ्यगस्य गमन — $^c$) $D_{1-3\,5}$ यद्दग्ध $D_{4\,6-9}$ तद्दग्ध ( for विविध ) — $^d$) $D_{1\,2\,4-9}$ त्रिधि वज्र, $D_3$ विविध ( for यद्दग्ध ) $D_5$ -वेन्मि — $^f$) $V_1$ $B_5$ $Dn_3$ त्वया कृत ( by transp )

6 $^a$) M हि ( for च ) $Dn_3$ $G_{1\,4}$ $M_4$ विसर्ग च ,

प्रासादानां बहूनां च काञ्चनानां महामुने ॥ ६
मणिविद्रुमपादानां पर्यङ्कानां च दर्शनम् ।
पुनश्चादर्शनं तस्य श्रोतुमिच्छामि कारणम् ॥ ७
अतीव ह्यत्र मुह्यामि चिन्तयानो दिवानिशम् ।
न चैवात्राधिगच्छामि सर्वस्यास्य विनिश्चयम् ।
एतदिच्छामि कार्त्स्न्येन सत्यं श्रोतुं तपोधन ॥ ८

च्यवन उवाच ।

शृणु सर्वमशेषेण यदिदं येन हेतुना ।
न हि शक्यमनाख्यातुमेवं पृष्टेन पार्थिव ॥ ९
पितामहस्य वदतः पुरा देवसमागमे ।
श्रुतवानस्मि यद्राजंस्तन्मे निगदतः शृणु ॥ १०
ब्रह्मक्षत्रविरोधेन भविता कुलसंकरः ।
पौत्रस्ते भविता राजंस्तेजोवीर्यसमन्वितः ॥ ११
ततः स्वकुलरक्षार्थमहं त्वा समुपागमम् ।
चिकीर्षन्कुशिकोच्छेदं संदिधक्षुः कुलं तव ॥ १२
ततोऽहमागम्य पुरा त्वामवोचं महीपते ।
नियमं कंचिदारप्स्ये शुश्रूषा क्रियतामिति ॥ १३
न च ते दुष्कृतं किंचिदहमासादयं गृहे ।
तेन जीवसि राजर्षे न भवेथास्ततोऽन्यथा ॥ १४
एतां बुद्धिं समास्थाय दिवसानेकविंशतिम् ।
सुप्तोऽस्मि यदि मा कश्चिद्बोधयेदिति पार्थिव ॥ १५
यदा त्वया सभार्येण संसुप्तो न प्रबोधितः ।
अहं तदैव ते प्रीतो मनसा राजसत्तम ॥ १६
उत्थाय चास्मि निष्क्रान्तो यदि मां त्वं महीपते ।

D3 °गैस्तु; D1-10 T3 G2 गैश्च (for गैस्य) — b) D1 3 10 धनस्य, D3 T1 G4 जनस्य, T2 3 G1 3 जलस्य (for वनस्य) G2 ज्वलनस्यापि दर्शनं — d) D8 काननानां (for काञ्च) D1-9 महाद्युते (for °मुने)

7 a) Dn2 जावाना, T1 -सोपान (for पादानां) — b) Some MSS पर्यकाणां D5 मचकाना महाद्युते — c) V1 चैव, D5 तत्र (for तस्य)

8 b) V1 B Dn D10 भृगूद्वह, S द्विजर्षभ (for दिवानिशम्) — T1 om 8cd — c) D8-9 [अ]व- (for [अ]धि) — d) D1 [अ]पि, G2 [आ]शु (for [अ]स्य) D5 विनिश्चित (for °श्चयम्) — e) D5 एवम् (for एतद्) — f) D3-9 तवानघ (for तपोधन) D1 2 सर्वं श्रोतु तवा(D1 दा)नघ

9 G2 om the ref — a) T1 अदोष हि (for °षेण) — b) T1 य सदा, T2 तदिद (for य) — c) D3 मयाख्यातुम्, D3 अनाज्ञा (for अनाख्या) D1-3 यदि शक्य समाख्यातुम् — d) D8 मया, D5 एतद् (for एव) D6-9 भारत (for पार्थिव)

10 a) D3 6 7 9 गदत (for व) — c) D3 6 7 9 ते (for यद्)

11 d) V1 D1 3 4 7-9 बलान्वित, G2 M तपो° (for सम)

12 a) D10 ते (for स्व) D9 नाशार्थम् (for रक्षा) V1 B Dn ततस्ते कुलनाशार्थम् — b) D5 त्वामह (for अह त्वा) D1 5 T3 G1-3 समुपागत (for °गमम्) V1 B Dn D10 T2 G4 अह त्वां समुपागत, D4 6-9 अहं त्वां समुपस्थित — c) D8 5 T1 चिकीर्षु (for °र्षन्) D1-8 कौशिकोच्छेदं — d) T1 दिधक्षुश्च (for सदिधक्षु)

13 a) V1 B Dn पुरे, D10 पुर (for पुरा) — c) V1 D4 T2 3 G2 4 किंचिद् T2 3 G आरि(T2 G2 °र)-प्सु° (for आरप्स्ये) D5 नियमे कचिदारप्घे (sic) — d) G1 damaged, G4 इह (for इति)

14 a) V1 B1-3 Dn1 n3 दुष्कर, some MSS दु कृत — c) D1-10 राजेंद्र (for राजर्षे) — d) D4 6-9 असुयेथास् (for न भवेथास्) B1-3 Dn1 n2 n3 (marg) D10 स्वयम्, D1-8 G2 स्वतो (for ततो) V1 B4 5 भवेथास्त्वमतोन्यथा

15 a) B5 Dn D2 M4 एवं (for एता) — c) D1 2 4-7 T2 3 G3 M2 4 मा, G4 वा (for मा)

16 a) B5 यदि, T2 यथा (for यदा) — b) B1 सुप्तोहं, D4 प्रसुप्तो (for स°) D8 वि (for प्र) G2 सुप्तो न प्रतिबोधित — c) Dn3 सोह (for अह) S प्रीतोस्मि (for ते प्रीतो)

17 a) T2 [अ]पि (for [अ]स्मि) Some MSS नि क्रान्तो — b) D1 2 T1 मा (for मा) — c) D1-5 7-9 मूया (for पृच्छे) D1 2 7 9 G4 [पु]न (for [पु]व)

पृच्छेः क्व यास्यसीत्येवं शपेयं त्वामिति प्रभो ॥ १७
अन्तर्हितश्चास्मि पुनः पुनरेव च ते गृहे ।
योगमास्थाय संविष्टो दिवसानेकविंशतिम् ॥ १८
क्षुधितो मामसूयेथाः श्रमाद्वेति नराधिप ।
एतां बुद्धिं समास्थाय कर्शितौ वां मया क्षुधा ॥ १९
न च तेऽभूत्सुसूक्ष्मोऽपि मन्युर्मनसि पार्थिव ।
सभार्यस्य नरश्रेष्ठ तेन ते प्रीतिमानहम् ॥ २०
भोजनं च समानाय्य यत्तदादीपितं मया ।
क्रुध्येथा यदि मात्सर्यादिति तन्मर्षितं च ते ॥ २१
ततोऽहं रथमारुह्य त्वामवोचं नराधिप ।
सभार्यो मां वहस्वेति तच्च त्वं कृतवांस्तथा ॥ २२
अविशङ्को नरपते प्रीतोऽहं चापि तेन ते ।
धनोत्सर्गेऽपि च कृते न त्वां क्रोधः प्रधर्षयत् ॥ २३
ततः प्रीतेन ते राजन्पुनरेतत्कृतं तव ।
सभार्यस्य वनं भूयस्तद्विद्धि मनुजाधिप ॥ २४
प्रीत्यर्थं तव चैतन्मे स्वर्गसंदर्शनं कृतम् ।
यत्ते वनेऽस्मिन्नृपते दृष्टं दिव्यं निदर्शनम् ॥ २५
स्वर्गोद्देशस्त्वया राजन्सशरीरेण पार्थिव ।
मुहूर्तमनुभूतोऽसौ सभार्येण नृपोत्तम ॥ २६
निदर्शनार्थं तपसो धर्मस्य च नराधिप ।

---

18 [a]) V1 B Dn पुनश्चास्मि (by transp), D10 पुनश्चापि — [c]) V1 B1-3 5 Dn D10 ससुप्तो, B4 सहृष्टो (for संविष्टो)

19 [a]) D1-3 मा ह्यसूयेथा, D4, 5 T2 3 G M1-3 नाभ्यसू°, D3 T1 M4 माभ्यसू° (for मामसू°) Dn1 n2 क्षुधितौ मामसूयेथा, D6 7 9 क्षुधितो मा(D8 ना)भ्यसूयेथा — [b]) B4 T2 3 G2-4 चापि, D10 चेति (for वेति) — After 19[ab], the sequence in T1 is 22[c]-23[b], 21, 327*, 22[ab], 23[cd], 25[ab], and 24[ab] T1 om 19[c]-20[d] — [c]) V1 B3-5 Dn एव (for एता) G4 अवस्थाय (for समा°) — [d]) D5 क्षुधितौ, some MSS कर्षितौ (for कर्शितौ) D2 4 5 10 T2 3 G वा (for वां) V1 B4 5 Dn D3 transp मया and क्षुधा

20 T1 om. 20 (cf v 1 19) — [a]) G4 om च T2 3 G न च ते वाप्यसुसूक्ष्मापि

21 For the sequence in T1, cf v 1 19 — [a]) V1 D4 6-9 समासाद्य, D5 T1 2 नीय (for °नाय्य) — [b]) D4 6-9 चेद् (for तदा) — [c]) D4 6-9 क्रुध्यते — [d]) D5 G3 यदि (for इति) Dn D1 3 6 9 च मे, T2 3 G1-3 त्वया (for च ते) — After 21, D10 T G ins

327* रथेन वाहितश्चापि श्रमात्क्रोधोद्भवाय ते ।

[ T3 [अ]सि (for [अ]पि) T1 क्रमात् (for श्र°) ]

22 For the sequence in T1, cf v 1 19 — [a]) D3 आस्थाय (for आरुह्य) — [c]) D1 om सभार्यो B1 om, T3 G2 3 M मा (for मां) T1 वहेरयुक्तस् (for वहस्वेति) — [d]) M तत्र (for तच्च) T2 G2 तदा (for तथा) T1 तथैव कृतवानपि

23 For the sequence in T1, cf v 1 19 Dn1 om from 23 to the end of this adhy — [a]) T2 3 G1 3 अथाविश, G4 अविशक (for °शङ्को) — [b]) B3 त्वयि, D3 तेन (for चापि). V1 B2 5 Dn2 n3 D1 2 M4 तेन ह, B1 3 D3-9 तेनघ (for तेन ते) — [c]) Dn2 G4 om च — [d]) D4 6 7 9 प्रधर्षयेत्, T2 3 G1 3 4, M1-3 [s]भ्यधर्षयत् (for प्रध ) D1-3 T1 M4 न त्वा क्रोधोभ्यव(D3 T1 °ध)र्षयत्

24 For the sequence in T1, cf. v 1 19 Dn1 om 24 (cf v 1 23) — [a]) T1 G3 M तत्र (for तत ) D1 2 7 9 मे (for ते) D5 प्रीतेन येन ते राजन् — [b]) D5 6 8 वपुर् (for पुनर्) D3 G2 एव, T G1 3 4 M एव (for एतत्) D4 8 मया, S तत (for तव) — T1 om 24[cd] — [c]) T3 damaged D4 6-9 [ए]व ते, T2 G तदा, M तथा (for वनं) D5 सभार्यधनभूयस्थ (sic) — [d]) D2 उद्धृत (for तद्विद्धि) D4 6-9 प्रसन्नेन जनाधिप

25 For the sequence in T1, cf v 1 19 Dn1 om 25 (cf v 1 23) — [a]) D4 6-9 transp तत्र and च — T1 om 25[cd] D6 om 25[d] — [d]) B1 3 D5 दिव्य, T3 एव (for दिव्यं) G3 सुदर्शनं (for निद°) T2 G2 दृष्टं जीवत्वदर्शनं, G4 दृष्टं दिव्यप्रदर्शनं

26 Dn1 om 26 (cf v 1 23) — [a]) D5 स्वर्गो दृष्टस् (for स्वर्गोद्देशस्) T2 M तदा (for त्वया) — D4 6 om (hapl) 26[b]-27[c] — [b]) D7-9 M स्व (for स) D1-3 सर्वत (for पार्थिव) — [c]) V1 अपि (for अनु) S [s]य (T1 य) (for ऽसौ) — [d]) G4 नृपात्मज (for नृपोत्तम)

27 Dn1 om 27 (cf v 1 23) D4 6 om 27[abc]

राजा हि धर्मकुशलः प्रथमं भूतिलक्षणम् ॥ ३७
अथ येषामधर्मज्ञो राजा भवति नास्तिकः ।
न ते सुखं प्रबुध्यन्ते न सुखं प्रस्वपन्ति च ॥ ३८
सदा भवन्ति चोद्विग्नास्तस्य दुश्चरितैर्नराः ।
योगक्षेमा हि बहवो राष्ट्रं नास्याविशन्ति तत् ॥ ३९
अथ येषां पुनः प्राज्ञो राजा भवति धार्मिकः ।
सुखं ते प्रतिबुध्यन्ते सुसुखं प्रस्वपन्ति च ॥ ४०
तस्य राज्ञः शुभैरार्यैः कर्मभिर्निर्वृताः प्रजाः ।
योगक्षेमेण वृष्ट्या च विवर्धन्ते स्वकर्मभिः ॥ ४१
स कुलीनः स पुरुषः स बन्धुः स च पुण्यकृत् ।
स दाता स च विक्रान्तो यो ददाति वसुंधराम् ॥ ४२
आदित्या इव दीप्यन्ते तेजसा भुवि मानवाः ।
ददन्ति वसुधां स्फीतां ये वेदविदुषि द्विजे ॥ ४३
यथा बीजानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानसमार्जिताः ॥ ४४
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ।
शूलपाणिश्च भगवान्प्रतिनन्दन्ति भूमिदम् ॥ ४५
भूमौ जायन्ति पुरुषा भूमौ निष्ठां व्रजन्ति च ।
चतुर्विधो हि लोकोऽयं योऽयं भूमिगुणात्मकः ॥ ४६
एषा माता पिता चैव जगतः पृथिवीपते ।
नानया सदृशं भूतं किंचिदस्ति जनाधिप ॥ ४७
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

---

$D_{10}$ (first time) S साह ($T_1$ सोह, $M_{1-3}$ सा हि, $M_4$ मही) कृत्स्ना ($G_2$ त्स्वा) ब्राह्मणार्था ($G_4$ °र्थं) — $^b$) $D_{10}$ (first time) S राजानश् (for श्रेष्) $V_1$ $B_{3-5}$ Dn $D_{4\ 10}$ (first time) T $G_{1\ 2\ 4}$ [अ]सशय — $T_1$ om $37^{cd}$ — $^c$) $M_3$ [अ]पि (for हि) $T_{2\ 3}$ G -कुशल — $^d$) $D_{6-9}$ $T_1$ $G_4$ भूमि ; $T_3$ $G_{1\ 3}$ भूरि (for भूति) $B_4$ लक्षण

38 $D_5$ om 38 (cf v l 37) — $^c$) $V_1$ B Dn प्रबुध्यति — $D_3$ $T_{2\ 3}$ G om (hapl) $38^d$–$40^c$ — $^d$) $V_1$ $B_{1\ 2\ 4}$ $Dn_1$ $n_2$ $n_3$ (also as in text) प्राप्नुवन्ति (for प्रस्वपन्ति)

39 $D_5$ om $39^{ab}$ (cf v l 37) $D_3$ $T_{2\ 3}$ G om 39 (cf v l 38) $D_8$ om (hapl) 39-40 — $^a$) $T_1$ $M_1$ तथा (for सदा) — $^b$) $D_{6\ 7\ 9}$ मही, $T_1$ द्विजा (for नरा) — $D_9$ om $39^c$–$40^b$ $T_1$ om $39^{cd}$ — $^d$) $D_{10}$ राज्य (for राष्ट्र) $D_{4\ 7}$ मम्याविशंति ; M अभ्यावि (for नास्यावि) $B_4$ च (for तत्) $D_{1\ 2}$ मस्या राष्ट्रं विशति त, $D_6$ महाराष्ट्र विशति तत्

40 $D_3$ $T_{2\ 3}$ G om $40^{abc}$ (cf v l 38) $D_8$ om 40, $D_9$ om $40^{ab}$ (for both, cf. v l 39) — $^a$) $D_{4\ 6\ 7}$ शक्तो (for प्राज्ञो) — $T_1$ om $40^{cd}$ — $^c$) $D_{4\ 6\ 7\ 9}$ सुसुख (for सुखं ते) $B_4$ सुसुख प्रतिबुध्यति

41 $^a$) $Dn_1$ यस्य (for तस्य) $B_{3\ 4}$ $Dn_1$ $n_2$ राज्यै, $B_5$ राष्ट्रे, $D_{4-9}$ सत्रैं, $T_{2\ 3}$ G कार्यैं (for आर्यैं) — $^b$) $V_1$ $B_5$ Dn नरा (for प्रजा) — $T_1$ om $41^{cd}$ — $^c$) $B_3$ $Dn_3$ $D_{4-8}$ वृत्त्या, $B_4$ पृथ्या ; $D_{10}$ $G_{1-3}$ दिष्ट्या (for वृष्ट्या) D $_{4-9}$ [अ]पि, $D_3$ हि, $G_3$ [इ]व (for च) — $^d$) $D_5$ वर्धंतेपि (for विवर्धन्ते)

42 $^b$) $G_2$ om (hapl) स बन्धु $D_4$ इ, $D_{6\ 7\ 8}$ हि (for च) $D_3$ कर्मकृत् (for पुण्य°) — $G_{1\ 3}$ om $42^c$–$43^b$ — $^c$) S ($G_{1\ 3}$ om) राजा (for दाता)

43 $G_{1\ 3}$ om $43^{ab}$ (cf v l 42) $T_1$ om $43^{ab}$ — $^a$) S ($T_1$ $G_{1\ 3}$ om) आदित्य इव दीप्येत — $^b$) $G_2$ M मानव (for °वा) $T_{2\ 3}$ $G_4$ तेजसा स्विह मानव — $^c$) $B_1$ $D_{1\ 10}$ ददते, $B_4$ S ददाति, $D_2$ ददते, $D_{3\ 9}$ ददति (for ददन्ति) $D_{4-9}$ ह्यवनिं ($D_5$ °नीं) (for वसुधा) — $^d$) S (except $G_4$ $M_{1\ 2}$) यो (for ये) $B_{3\ 5}$ $D_{6-8}$ $T_3$ विदुषे (for °षि)

44 $^a$) $B_2$ partly damaged $V_1$ $B_{3\ 5}$ Dn सस्यानि (for बीजानि) — $^d$) $V_1$ $B_4$ $Dn_3$ $D_{2\ 6\ 7}$ -समार्जिता

45 $^a$) $Dn_1$ वसवो (for वरुणो) — $^d$) $G_{1\ 3}$ अभि (for प्रति) $T_2$ $G_3$ $M_{1\ 3}$ नदति $D_{6\ 7}$ $G_4$ $M_{1\ 3}$ भूमिप (for °दम्)

46 $^a$) $D_3$ जायते पुरुषा भूमौ — $^b$) $T_{1\ 3}$ G [अ]पि ; $T_2$ [उ]त (for च) — $^c$) M यो लोक (for लोकोऽय) — $^d$) $B_1$ $D_{1\ 2}$ S (except $G_2$) सोय (for योऽय) $D_9$ भूमिं भुक्ते गुणात्मक

47 $^b$) $D_6$ स जगत् (for जगत) $D_8$ स्मृता ; $T_1$ तले (for पते) — $^d$) $B_2$ $G_4$ नराधिप (for जना°) — After 47, $D_{10}$ $T_{2\ 3}$ $G_4$ ins

341* सौवर्णा यत्र प्रासादा वसोर्धाराश्च कामदा ।
गन्धर्वाप्सरसो यत्र तत्र गच्छन्ति भूमिदा ।

बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ॥ ४८
इष्ट्वा क्रतुशतेनाथ महता दक्षिणावता ।
मघवा वाग्विदां श्रेष्ठं पप्रच्छेदं बृहस्पतिम् ॥ ४९
भगवन्केन दानेन स्वर्गतः सुखमेधते ।
यदक्षयं महार्घं च तद्ब्रूहि वदतां वर ॥ ५०
इत्युक्तः स सुरेन्द्रेण ततो देवपुरोहितः ।
बृहस्पतिर्महातेजाः प्रत्युवाच शतक्रतुम् ॥ ५१
सुवर्णदानं गोदानं भूमिदानं च वृत्रहन् ।
ददद्देतान्महाप्राज्ञः सर्वपापैः प्रमुच्यते ॥ ५२
न भूमिदानाद्देवेन्द्र परं किंचिदिति प्रभो ।
विशिष्टमिति मन्यामि यथा प्राहुर्मनीषिणः ॥ ५३
ये शूरा निहता युद्धे स्वर्याता दानगृद्धिनः ।
सर्वे ते विबुधश्रेष्ठ नातिक्रामन्ति भूमिदम् ॥ ५४
भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकगताः शूरा नातिक्रामन्ति भूमिदम् ॥ ५५
पञ्च पूर्वादिपुरुषाः षट् च ये वसुधां गताः ।
एकादश ददद्भूमिं परित्रातीह मानवः ॥ ५६
रत्नोपकीर्णां वसुधां यो ददाति पुरंदर ।

48 $^{d}$) T1 जनाधिप ( for युधिष्ठिर )

49 $^{a}$) T1 G1 8 [अ]पि ( for [अ]थ ) — $^{c}$) D1 4 6–10 G2 8 M1–8 मघवान्, T2 8 G4 भगवान ( for मघवा ) D1-9 वाग्मिना ( for वाग्विदा ) Dn1 G3 श्रेष्ठ — $^{d}$) T1 पप्रच्छ च, G1 8 पर्यपृच्छद् ( for पप्रच्छेद )

50 Before 50, some MSS ins इन्द्र and some मघवा — $^{a}$) T8 G4 येन ( for केन ) — $^{b}$) T G स्वर्गे वै ( for स्वर्गत ) — $^{c}$) V1 B1–8 5 D1 अक्षय्य D3 6–9 महद्यच्च ( for महार्घं च ) D5 10 T1 8 G M यदक्षर( G2 °य्य )महार्यं ( D0 °र्थं ) च — $^{d}$) B1 तद्ब्रूह्म, G2 किं ब्रूहि ( for तद्ब्रूहि ) — After 50, D10 ins an addl colophon [ *Sub parvan* दानधर्म — *Adhy name* बृहस्पतींद्रसंवाद — *Adhy no* 66 ]

51 Before 51, some MSS ins भीष्म — $^{a}$) D1 तु ( for स ) — $^{c}$) V1 B Dn D1–8 10 बृहत्तेजा — $^{d}$) D4–9 पुरदर ( for शतक्रतुम् )

52 Before 52, some MSS ins बृहस्पति — $^{b}$) B1 ( marg as in text ) पृथिवीदानमेव च — After 52$^{ab}$, D10 S ( except T1 ) ins

342* विद्यादानं च कन्यानां दान पापहर परम् ।

— M om 52$^{cd}$ — $^{c}$) V1 B5 Dn1 ददस्तेतान्, B4 Dn2 n8 ते तान्, D1 8 T2 G1 8 ते त, D2 4 T1 8 G3 4 ते तन् D5 ददास्येतन्, D7 9 ददद्देतन्, D10 °स्वेतन् (sic) ( for °देतान् ) B1 D2 8 5 10 T G1–8 महाप्राज्ञ, D1 °प्रज्ञ ( for °प्राज्ञ ) B2 एतत्प्रयच्छमानो हि

53 $^{a}$) D6–9 राजेंद्र ( for देवेन्द्र ) — $^{b}$) T1 इह ( for इति ) — $^{c}$) D4 5 9 इह ( for इति ) D4–10 पश्यामि, S मन्येहं ( for मन्यामि ) — D10 T G ins after 53 M after 55

343* ब्राह्मणार्थे गवार्थे वा राष्ट्रघातेऽथ स्वामिन ।
कुलस्त्रीणा परिभवे मृतास्ते भूमिदे सह ।

[ ( L 1 ) M च ( for वा ) T1 M च ( for ऽथ ) D10 वा पुन , T8 वात्मन , G4 वाग्मिन ( for स्वामिन ) T2 राष्ट्रघाते दवाशिना ( for the post half ) — ( L 2 ) T8 damaged M हता नो ( for मृतास्ते ) D10 T2 G2 M1 8 समा ( for सह ) ]

54 T8 partly damaged — $^{a}$) B1 पुरा ( for शूरा ) S ( T8 damaged ) शयिता ( for निहता ) — $^{b}$) B1–4 Dn D10 रण , M दार ( for दान ) T2 8 -गृध्नत ( for गृद्धिन ) V1 B5 स्वर्याता रणमूर्धनि ( B5 °न ) — $^{d}$) D1 [अ]भ्यक्रामति, D5 6 [अ]त्याक्रा°, D8 9 [अ]भ्युत्क्रा°

55 D8 om (hapl ) 55 — $^{a}$) Dn1 D1 7 9 नि-श्रेयसा, D3 °सैर् ( for °से ) — $^{b}$) G4 सत्यात्मानो ( for त्यक्ता ) — $^{c}$) D8 लोके, D10 T2 8 G1 8 4 लोक ( for -लोक ) Dn1 n2 D1 5 8 युक्ता, D1 मुक्ता ( for शूरा ) — $^{d}$) D8 [अ]त्याक्रामति, D4 [अ]त्युत्क्रा, D9 [अ]भ्युत्क्रा° ( for [अ]तिक्रा° ) — After 55, M ins 343*

56 $^{a}$) V1 B Dn2 n3 D8 9 G2 पूर्वा हि, D1–3 पूर्वे च, D10 पूर्वं हि, T1 पूर्वाश्च ( for पूर्वादि ) — $^{b}$) V1 B1 8 वान्ये, B2 4 Dn3 चान्ये, B5 चास्य, Dn1 n2 अन्ये, D5 9 पूव ( for च ये ) T2 8 G4 M च स्वधा ( T2 °धा ), G1 8 च दिव ( for वसुधां ) D6 पदेव वसुधागता , D7 पदेव वसुधाधिपा , T1 पच ये चोत्तर गता — $^{c}$) V1 G1 8 भूमि ( for भूमिं ) — $^{d}$) D5 भूमिद , D9 G1 8 मानव ( for °व ) T1 प्रतिपाल्यते नर

स मुक्तः सर्वकलुषैः स्वर्गलोके महीयते ॥ ५७
महीं स्फीतां ददद्राजा सर्वकामगुणान्विताम् ।
राजाधिराजो भवति तद्धि दानमनुत्तमम् ॥ ५८
सर्वकामसमायुक्तां काश्यपीं यः प्रयच्छति ।
सर्वभूतानि मन्यन्ते मां ददातीति वासव ॥ ५९
सर्वकामदुघां धेनुं सर्वकामपुरोगमाम् ।
ददाति यः सहस्राक्ष स स्वर्गं याति मानवः ॥ ६०
मधुसर्पिःप्रवाहिन्यः पयोदधिवहास्तथा ।
सरितस्तर्पयन्तीह सुरेन्द्र वसुधाप्रदम् ॥ ६१
भूमिप्रदानान्नृपतिर्मुच्यते राजकिल्बिषात् ।
न हि भूमिप्रदानेन दानमन्यद्विशिष्यते ॥ ६२
ददाति यः समुद्रान्तां पृथिवीं शस्त्रनिर्जिताम् ।
तं जनाः कथयन्तीह यावद्धरति गौरियम् ॥ ६३
पुण्यामृद्धरसां भूमिं यो ददाति पुरंदर ।
न तस्य लोकाः क्षीयन्ते भूमिदानगुणार्जिताः ॥ ६४
सर्वथा पार्थिवेनेह सततं भूतिमिच्छता ।
भूर्देया विधिवच्छक्र पात्रे सुखमभीप्सता ॥ ६५
अपि कृत्वा नरः पापं भूमिं दत्त्वा द्विजातये ।
समुत्सृजति तत्पापं जीर्णां त्वचमिवोरगः ॥ ६६
सागरान्सरितः शैलान्काननानि च सर्वशः ।
सर्वमेतन्नरः शक्र ददाति वसुधां ददत् ॥ ६७
तडागान्युदपानानि स्रोतांसि च सरांसि च ।

57 T8 partly damaged — a) D8 रत्नप्र, T1 रत्नाव (for रत्नोप) — b) M2–4 [s]दाद्भूमिं (for ददाति) D4 वसुधरां (for पुरदर) — c) D10 मुक्तै (for मुक्त) — d) D8 om स्वर्गलोके V1 B4 5 सर्वे, D1 स्वर्गे (for स्वर्ग)

58 a) D6–9 ददन् V1 B Dn D10 T1 राजन् (for राजा) — b) D1–9 समन्विता (for गुणा) — d) B1 तद्विद्धि दानमुत्तम

59 d) T1 मां (for मा) T1 ददाव् (for ददाति) B5 च, D2 5 [इ]व, D4 6–9 [इ]ह (for [इ]ति)

60 D4 om (hapl ?) 60 — a) B1 D10 दुहा (for -दुघा) — b) V1 B Dn D10 गुणान्विता, D1 T8 -पुरोगम (for °गमाम्) — d) V1 B Dn D10 स्वर्गं याति स मानव

61 a) D1–9 प्रदायिन्य, some MSS प्रवाहिण्य (for हिन्य) — d) D1 2 सुरेंद्र वसुधां ददत्

62 Dn1 om 62ab — b) V1 B Dn n3 D1 10 सर्वं, D4 5–7 T1 8 राज्य (for राज) — c) B1 तद् (for हि) B2 D5 प्रदानाद्धि (for नेन) — d) D8 प्रशस्यते (for विशिष्यते)

63 b) D2 T8 G1 शास्त्र, D5 G2 शक्र (for शस्त्र) D8 पृथ्वीं शस्त्रविनिर्जिता — c) D9 G2 सजना (for त जना) Dn3 कथयति स, D1–8 8 9 T1 कथयिष्यति (for यन्तीह) — d) V1 B Dn भवति, T1 तिष्ठति (for धरति) D1–9 यावद्भूमिर्धरिष्यति

64 a) D10 तुल्याम् (for पुण्याम्) V1 B Dn1 n2 मद्धिरसा, Dn3 D1–9 मृदु°, T2 3 G रसभृतां (for ऋद्धरसां) — T2 3 G3 4 om 64c–65d — c) D4 6–9 हीयते (for क्षी) — d) V1 B2 3 5 Dn गुणान्विता (for °र्जिता)

65 T2 3 G2 4 om. 65 (cf v l 64) — a) V1 Dn1 n2 D10 T1 G1 सर्वदा, D8 °त (for °था) — b) B1 (marg as in text) 3 4 D2 5–7 9 10 भूमिम् (for भूतिम्) — T1 om (hapl) 65cd — d) D10 श्रियम् (for सुखम्) Dn1 n2 शमीप्सुना (for °प्सता) — After 65, G1 3 ins

344* स्वनिर्जिता स्वयक्रीता भूता च वार्पयेन्नृप ।

While M ins after 65 G1 3 after 77

345* सुनिर्मिता सुविक्रीता सुभृतां चापि यन्नृप ।

[M4 सुनिर्जितां (for र्मिता) G1 3 सुभृता स्वर्पयेन्नृप (for the post half)]

66 c) D10 यत्; M4 स (for तत्) T1 समुत्सृ जेत्स्वकं पाप

67 a) D1–9 सरित सागरा शैला — b) G2 सागराणि (for काननानि) — c) T2 एव (for एतन्) B1 नर सम्यग्, D1–9 नरश्रेष्ठ (for नर शक्र) — d) D6–8 10 ददन् (for ददत्)

68 B1 D3 9 T8 G4 om (hapl) 68–69 D1 2 om (hapl) 68 — a) G1 3 M तटा(G1 2 °डा)कानि (for तडागानि) T1 2 तटा(T1 °डा)कान्युपपानानि.

स्नेहान्सर्वरसांश्चैव ददाति वसुधां ददत् ॥ ६८
ओषधीः क्षीरसंपन्ना नगान्पुष्पफलान्वितान् ।
काननोपलशैलांश्च ददाति वसुधां ददत् ॥ ६९
अग्निष्टोमप्रभृतिभिरिष्ट्वा च स्वाप्तदक्षिणैः ।
न तत्फलमवाप्नोति भूमिदानाद्यदश्नुते ॥ ७०
दाता दशानुगृह्णाति दश हन्ति तथा क्षिपन् ।
पूर्वदत्तां हरन्भूमिं नरकायोपगच्छति ॥ ७१
न ददाति प्रतिश्रुत्य दत्त्वा वा हरते तु यः ।
स बद्धो वारुणैः पाशैस्तप्यते मृत्युशासनात् ॥ ७२
आहिताग्निं सदायज्ञं कृशभृत्यं प्रियातिथिम् ।
ये भरन्ति द्विजश्रेष्ठं नोपसर्पन्ति ते यमम् ॥ ७३
ब्राह्मणेष्वृणभूतं स्यात्पार्थिवस्य पुरंदर ।
इतरेषां तु वर्णानां तारयेत्कृशदुर्बलान् ॥ ७४
नाच्छिन्द्यात्स्पर्शितां भूमिं परेण त्रिदशाधिप ।
ब्राह्मणाय सुरश्रेष्ठ कृशभृत्याय कश्चन ॥ ७५
अथाश्रु पतितं तेषां दीनानामवसीदताम् ।
ब्राह्मणानां हृते क्षेत्रे हन्यात्त्रिपुरुषं कुलम् ॥ ७६
भूमिपालं च्युतं राष्ट्राद्यस्तु संस्थापयेत्पुनः ।
तस्य वासः सहस्राक्ष नाकपृष्ठे महीयते ॥ ७७
इक्षुभिः संततां भूमिं यवगोधूमसंकुलाम् ।

— b) D4–7 स्नोतांसि सरितोपि च (D5 6 वा) — c) T1 स्नेह, T2 G1 स्नेहात् (for स्नेहान्) — d) D6–7 10 ददन् (for ददत्)

69 B1 D6 9 T3 G4 om 69 (cf v l 68) B4 om (hapl) 69 — a) T1 G3 M4 ओषधीं V1 B2 5 Dn D8 10 वीर्य- (for क्षीर) B8 औषधान्वीर्यसंपन्नान् — b) D4 6 7 समन्वितान् (for फला°) — c) T1 पद्मकोत्पलशैलाश्च, T2 G2 3 M कनकोप(G2 °त्प)लशै° — d) D6–7 10 ददन्

70 b) B1 वा (for च) D10 यज्ञैरिष्ट्वाप्तदक्षिणै — c) T G उपाश्नाति (for अवाप्नोति) — d) D1–3 आप्नुते (for अश्नुते)

71 a) D6 दानाद् (for दाता) D1 8 गृह्णंति — c) T2 G1 पूर्वं (for पूर्व-) D10 हरेद् (for हरन्) — d) M1–8 [ए]व (for [उ]प)

72 b) V1 B6 Dn3 चापि हरेत्, B1 D6 7–10 चाहरते, B2 [अ]पि ह°, B3 T1 च ह°, B4 D4 6 तु ह°, Dn1 n2 [अ]पि च हरेत् (for वा हरते) B4 D3 4 6 च (for तु) — c) D1 2 तौ विद्धौ, D3 नाविद्धौ (for स बद्धो) B1 G2 दारुणै (for वा°) — d) D1 8 तप्येते, D5 नियतो (for तप्यते)

73 T1 om 73–74 — a) B8 आहुताग्निं (for आहि°) D4 आदित्याग्नि महायज्ञ — b) T2 कृशं (for कृश) V1 B Dn D6 8 10 G4 वृत्तिं, D1 -कृत्य, D3 -भूतिं, T3 मृत्यु (for -भृत्य) D4 प्रियातिथि — c) V1 B Dn भजति; D1 2 तरति, T3 G2 हरति (for भरन्ति) D6 द्विज (for द्विज) G1 3 ये हरंति सुरश्रेष्ठ — d) D2 ये, D5 om (for ते) G3 वर्धं (for यमम्) D6 नोपसर्पति तान्यम

74 T1 om. 74 (cf v l 73) — a) V1 B Dn D3 10 ब्राह्मणेष्व(D10 ष्य)नृणीभूत (D8 °त्वा) — b) V1 B Dn D10 पार्थिव स्यात् (for °वस्य) — d) T2 3 G2 3 भृश (for कृश) D2 दुर्लभान् (for -दुर्बलान्) G4 तारयेद्बलदुर्बल

75 D5 om 75 — a) Dn3 M1 नाच्छिद्यात्, D4 9 नोच्छिंद्यात् T3 स्पृशता (for स्पर्शिता) T1 द्विजाग्र स्पर्शिता भूमिर् — T2 om (hapl) 75b–78a — b) T1 नरेण (for प°) — c) V1 B Dn D10 ब्राह्मणस्य, T1 आक्षिप्ता स्यात् (for ब्राह्मणाय) — d) T1 धीमते (for कश्चन) V1 कृशवृत्ते कदाचन

76 T2 om 76 (cf v l 75) — a) V1 B1 Dn1 n2 D10 यथा, B2–5 Dn3 यद्, M8 तथा (for अथ) M4 अथ श्रुत्वा गृहं तेषां (sic) — b) V1 B Dn D2 8 T1 G1 अथ (for अव-) — c) D4 6–9 दत्ते (for क्षेत्रे)

77 T2 om 77 (cf v l 75) M8 om 77 — a) D1–9 राज्याद्, G3 राष्ट्र (for राष्ट्राद्) — b) V1 B5 Dn नर, D1–3 पथि (for पुन) — d) B1 -लोके (for -पृष्ठे) D5 T1 3 G M1 2 4 विधीयते (for मही) — After 77, G1 3 ins 345*, while M1 2 4 ins after 77

346* हृते क्षेत्रे दरिद्राणामश्रुपात सुदारुण ।
इष्टापूर्तं नरस्यास्य हन्यात्त्रिपुरुष कुलम् ।
[cf 76]

78 T2 om 78a (cf v l 75) — a) Dn2 D3 10 संवृता, G1 3 सहिता, M3 4 सतता (for संतता) G4

गोश्ववाहनसंपूर्णां बाहुवीर्यसमार्जिताम् ॥ ७८
निधिगर्भां दददूमिं सर्वरत्नपरिच्छदाम् ।
अक्षयाल्लँभते लोकान्भूमिसत्रं हि तस्य तत् ॥ ७९
विधूय कलुषं सर्वं विरजाः संमतः सताम् ।
लोके महीयते सद्भिर्यो ददाति वसुंधराम् ॥ ८०
यथाप्सु पतितः शक्र तैलबिन्दुर्विसर्पति ।
तथा भूमिकृतं दानं सस्ये सस्ये विसर्पति ॥ ८१
ये रणाग्रे महीपालाः शूराः समितिशोभनाः ।
वध्यन्तेऽभिमुखाः शक्र ब्रह्मलोकं व्रजन्ति ते ॥ ८२
नृत्यगीतपरा नार्यो दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र सदा भूमिप्रदं दिवि ॥ ८३
मोदते च सुखं स्वर्गे देवगन्धर्वपूजितः ।
यो ददाति महीं सम्यग्विधिनेह द्विजातये ॥ ८४
शतमप्सरसश्चैव दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र सदा भूमिप्रदं नरम् ॥ ८५
शङ्खं भद्रासनं छत्रं वराश्वा वरवारणाः ।
भूमिप्रदानात्पुष्पाणि हिरण्यनिचयास्तथा ॥ ८६
आज्ञा सदाप्रतिहता जयशब्दो भवत्यथ ।

---

ऋषिभि सतत भूमिं — $^{b}$) V1 B Dn D10 -शालिनीं, D4 5 T G -शाड्वलां, D6 7 -शाद्वलीं, D8 9 -शाद्वलां (for सकुलाम्) — After 78$^{ab}$, M1–3 ins

347* कदलीवनसाम्राढ्यैं सुपूर्णां स्पर्शयेन्महीम्।

— $^{c}$) D6–9 काष्ठ, T1 2 G1–4 गोष्ठ, M गोष्ठैर् (M4 °ष्टै) (for गोश्व) V1 B4 5 Dn D1 5 पूर्णां धा, D10 सकीर्णां (for सपूर्णां) — $^{d}$) D8 समर्जितां, D7 समन्विता (for समार्जिताम्) V1 बाहुवीर्याभिपालितां, B Dn D10 यद्विपार्जितां, S यो ददाति वसुधरा — After 78, S ins

348* विमुक्त सर्वपापेभ्य स्वर्गलोके महीयते ।

79 $^{a}$) D6–9 ददन् (for ददद्) — $^{c}$) M8 अक्ष याल्लँ (for °याल्लँ)

80 T1 om 80 — $^{a}$) T2 G2 कल्मष (for कलुषं) — $^{b}$) D8 निरजा (for वि°) G1 M8 स (for स) — $^{c}$) D6 om from सद्भि up to दान (in 81$^{c}$)

81 D6 om up to दान (in 81$^{c}$) (cf. v 1 80) — $^{a}$) T1 पातित — $^{b}$) D6 7–9 स्नेह (for तैल) Dn8 विसर्पते (for °ति) D1–4 स्नेहबिंदु प्रसर्पति — M1 om (hapl) 81$^{cd}$ — $^{d}$) G4 सत्रे सत्रे (for सस्ये सस्ये) V1 B5 Dn1 n2 D1–6 8 9 T1 वि(D8 4 प्र)-वर्धते (for विसर्पति)

82 $^{a}$) D1–9 ये रणाग्रेषु भूपाला — $^{b}$) D. शोभिन (for शोभना) — $^{c}$) D1 2 प्र (for ऽभि) D8 शूरा (for शक्र)

83 $^{a}$) D4 S (except T1) नृत्त (for नृत्य) D6 6 7 9 धरा (for परा) — $^{b}$) D5 विभूषणा (for पिता) — D1 T8 G3 4 M8 om (hapl) 83$^{c}$–85$^{b}$ — $^{c}$) B1 विप्रेंद्र, D10 पुष्पाणि (for देवेन्द्र) — $^{d}$) V1 B Dn तथा (for सदा) D1–10 नर (for दिवि) T1 2 G1 8 M1 2 4 ब्रह्मलोके धराप्रद

84 D1 T3 G3 4 M8 om 84 (cf v 1 83) T1 om 84–85 — $^{a}$) D8–9 स (for च) — $^{c}$) D3 कृत्स्नां (for सम्यग्)

85 D1 T3 G3 4 M8 om 85$^{ab}$ (cf v 1 83) T1 om 85 (cf v 1 84) — $^{a}$) D2–10 T2 अप्सरसां — $^{b}$) D2–4 6–9 विभूषित D6 दिव्यमालाविभूषितं — $^{c}$) V1 D3 6–7 10 तिष्ठति B1 विप्रेंद्र (for देवेन्द्र) — After 85$^{c}$, N ins

349* ब्रह्मलोके धराप्रदम्।
उपतिष्ठन्ति भूतानि

[(L 1) Cf 83$^{d}$ D8 लोक D4 6–8 प्रदान् (for प्रदम्) — D5 om line 2 — (L 2) V1 B1 5 Dn1 n2 D4 6–8 पुष्पाणि, Dn8 पुण्यानि (for भूतानि)]

— $^{d}$) M4 भूमिदान (for सदा भूमि) T2 8 G M दिवि (for नरम्)

86 $^{a}$) D1 2 4 6–10 शस्त्रो (for शङ्खं) G2 चित्र (for छत्रं) D8 शस्त्रो वरासन छत्र, D5 सस्थो भ्रमासने छत्र (sic) — $^{b}$) Dn1 G2 वराश्व (for °श्वा) B5 Dn1 n2 -वाहन, D2 4 -वारणान् (for °णा) — D4 6 7 9 om (hapl.) 86$^{c}$–87$^{b}$ — $^{c}$) D1–3 5 8 10 दानस्य; S प्रदान (G2 °नि, M न) (for प्रदानात्) — $^{d}$) B3 M8 निचयस्, B4 निलयस् (for निचयास्) T2 G2 तदा, G4 सदा (for तथा)

87 D4 6 7 9 om 87$^{ab}$ (cf v 1 86) — $^{b}$) T1 [उ]त (for [अ]थ) V1 B Dn D8 10 जयशब्दा व(Dn1 ब्दव, D8 10 ब्दो व)सूनि च, D5 °ब्दा भवंत्यथ

भूमिदानस्य पुष्पाणि फलं स्वर्गः पुरंदर ॥ ८७
हिरण्यपुष्पाश्चौषध्यः कुशकाञ्चनशाड्वलाः ।
अमृतप्रसवां भूमिं प्राप्नोति पुरुषो ददत् ॥ ८८
नास्ति भूमिसमं दानं नास्ति मातृसमो गुरुः ।
नास्ति सत्यसमो धर्मो नास्ति दानसमो निधिः ॥ ८९
एतदाङ्गिरसाच्छ्रुत्वा वासवो वसुधामिमाम् ।
वसुरत्नसमाकीर्णां ददावाङ्गिरसे तदा ॥ ९०
य इमं श्रावयेच्छ्राद्धे भूमिदानस्य संस्तवम् ।
न तस्य रक्षसां भागो नासुराणां भवत्युत ॥ ९१
अक्षयं च भवेद्दत्तं पितृभ्यस्तन्न संशयः ।
तस्माच्छ्राद्धेष्विदं विप्रो भुञ्जतः श्रावयेद्द्विजान् ॥ ९२
इत्येतत्सर्वदानानां श्रेष्ठमुक्तं तवानघ ।
मया भरतशार्दूल किं भूयः श्रोतुमिच्छसि ॥ ९३

इति श्रीमहाभारते अनुशासनपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

## ६२

युधिष्ठिर उवाच ।
कानि दानानि लोकेऽस्मिन्दातुकामो महीपतिः ।
गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम ॥ १
केन तुष्यन्ति ते सद्यस्तुष्टाः किं प्रदिशन्त्युत ।

---

— $^c$) V1 B Dn1 n2 D8 5 10 G2 पुण्यानि, T1 सर्वस्य (for पुष्पाणि) — $^d$) D5 मूल (for फल) D5 फल-प्रद (for पुरंदर)

88 T1 om 88 — $^a$) T2 8 G4 पुष्पाणि (for °श्च) — $^b$) T2 8 G2-4 M बृहत्कांचन (for कुशकाञ्चन-) V1 B Dn D1-3 7-9 -शाद्वला, M1-3 -शाड्वला — $^c$) D2 -प्रस्नवा, T2 8 G1. 2 4 M -प्रभवा (for प्रसवां) — $^d$) M1 8 4 आप्नोति (for प्रा°) D5-9 T2 G1 8 ददन् (for ददत्)

89 $^b$) D1-4 8 9 T1 G4 राज, D5 राज्ञा, D7 T8 -भूमि, T2 मन्त्र- (for मातृ) — $^c$) D10 सत्यात्परो (for सत्यसमो) G4 मंत्रो (for धर्मो) — $^d$) M न दानसदृशो निधि

90 Before 90, B1-4 Dn3 T2 3 G1 8 4 ins भीष्म — $^a$) T2 G1 8 4 आगीरसाच् — $^b$) D1 2 वसुधाधिप, D8 °धा नृप (for °मिमाम्) — $^c$) B4 बहु (for वसु) D4 6-9 समायुक्ता (for °कीर्णां) — $^d$) T2 G1 8 4 [आ]गीरसे

91 $^a$) V1 B1 8-5 Dn1 n2 D1-10 T1 G1 8 M3 4 य इद, D3 इम न (by transp) — $^b$) V1 B Dn D10 सभव (for संस्तवम्) — $^c$) G1 M2 8 भोगो (for भागो) D5 न तस्य क्षीणो भोगस्तु — $^d$) T1 च विद्यते (for भवत्युत) D5 सुराणां वल्लभो भवेत्

92 $^a$) D8 T G4 आक्षय्यं — $^b$) D1 6-9 पितॄणां (for पितृभ्यस्) D10 तु (for तन्) — $^c$) D5 श्राद्धे तु (for श्राद्धेषु) V1 B1-5 Dn D10 विद्वान्, D1-3 विप्रान् (for विप्रो) — $^d$) M भुञ्जानान् (for भुञ्जत) D6 7 9 पितॄन् (for द्विजान्)

93 $^a$) D1 अथ (for सर्व-) G2 -देवानां, M4 -भूताना (for -दानानां) — $^b$) B4 तदा (for तव) — $^c$) D5 यथा भारतशार्दूल

Colophon — *Parvan name* B1 2 4 Dn8 D1 2 शांति — *Sub parvan* V1 B Dn D1 2 6-10 M2 8 दानधर्म — *Adhy name* V1 B5 Dn इंद्रबृहस्पतिसंवाद, B1-3 D10 बृहस्पतींद्रसंवाद, B4 भूमिदाने बृहस्पतींद्रसंवाद, D1-8 5-7 T8 G2 4 M भूमिदानप्रशंसा, D4 दानप्रशंसा, D8 9 भूमिप्रशंसा, T2 दानप्रशंसायां बृहस्पतिपुरंदरसंवादे भूदानमाहात्म्यकथन — *Adhy no* (figures, words or both) V1 62, D6 57, D10 67, T1 M 90, T2 8 G2 4 97, G1 96, G8 91 — *Śloka no* D1 92

62

1 $^c$) D4 पुण्याधिकेभ्यो निप्रेभ्यो

2 $^b$) V1 B5 Dn transp तुष्टा and किं D8-9 प्रदद(D8 9 °द)ति (for प्रदिशन्ति) V1 B Dn D1-5 10

शंस मे तन्महाबाहो फलं पुण्यकृतं महत् ॥ २
दत्तं किं फलवद्राजन्निह लोके परत्र च ।
भवतः श्रोतुमिच्छामि तन्मे विस्तरतो वद ॥ ३

भीष्म उवाच ।

इममर्थं पुरा पृष्टो नारदो देवदर्शनः ।
यदुक्तवानसौ तन्मे गदतः शृणु भारत ॥ ४

नारद उवाच ।

अन्नमेव प्रशंसन्ति देवाः सर्षिगणाः पुरा ।
लोकतन्त्रं हि यज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥ ५
अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः ॥ ६
अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः ।
अन्नेन धार्यते सर्वं विश्वं जगदिदं प्रभो ॥ ७
अन्नाद्गृहस्था लोकेऽस्मिन्भिक्षवस्तत एव च ।
अन्नात्प्रभवति प्राणः प्रत्यक्षं नात्र संशयः ॥ ८
कुटुम्बं पीडयित्वापि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥ ९
ब्राह्मणायाभिरूपाय यो दद्यादन्नमर्थिने ।
निदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ॥ १०
श्रान्तमध्वनि वर्तन्तं वृद्धमर्हमुपस्थितम् ।
अर्चयेद्भूतिमन्विच्छन्गृहस्थो गृहमागतम् ॥ ११
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।

---

च ( for [उ]त ) — M transp $2^{cd}$ and $3^{ab}$ — $^{c}$) Dn3 ( marg as in text ) G4 M सर्वमेतन् ( for शंस मे तन् ) T G1-3 सर्वमेतन्महाराज — $^{d}$) M पुण्यतमं ( for °कृतं )

3 T1 om $3^{ab}$ M transp $2^{cd}$ and $3^{ab}$ — $^{a}$) B3 दत्तं किं फलमाप्नोति — $^{c}$) T2 3 G2 4 भगवन् ( for भवतः ) — $^{d}$) D1-3 5 विस्तरशो ( for °रतो )

4 $^{a}$) B3 इमं सर्वं, B4 इदं सर्वं, D2 इदमर्थं ( for इम° ) — $^{b}$) T1 2 दिव्य ( for देव ) — $^{c}$) V1 B Dn D10 वाक्य ( for तन्मे ) — $^{d}$) T1 G3 M1-3 वदतः ( for ग ) D3 पार्थिव ( for भारत ) V1 B Dn D10 तन्मे निगदतः शृणु

5 G2 om the ref $5^{ab}$ = ( var ) 14, App I ( No 4 ) line 2154 — $^{b}$) D1 ऋषि ( for सर्षि ) B3 4 D10 T1 तथा, D5 सुरा, G4 तदा, M सदा ( for पुरा ) V1 B1 2 5 Dn देवा ऋषिगणास्तथा — $^{c}$) D3 T1 च ( for हि ) V1 Dn1 n2 D1-9 सज्ञाश्च ( for य )

6 D9 om ( hapl ) 6-7 $6^{ab}$ = 14, App I ( No 4 ) line 2155 — $^{a}$) B1 दत्त ( for दान ) — $^{d}$) B1. 3 4 अर्हन्ति ( for इच्छन्ति )

7 D9 om 7 ( cf v l 6 ) $7^{ab}$ = ( var ) 14, App I ( No 4 ) line 2156 — $^{a}$) Dn3 D4 6-8 ऊर्जेस्वर ( for स्करं ) — $^{b}$) T2 3 प्राणश्चान्ने प्रतिष्ठित — $7^{cd}$ = ( var ) 14, App I ( No 4 ) line 2267 — $^{cd}$) M1-3 अन्ने स ( for अन्नेन ) T2 3 G2 4 साध्यते ( for धार्यते ) D10 G2 transp सर्वं and विश्व D3 इत, ( also इति ) ( for इद ) B1 G4 विभो ( for प्रभो ) D4-8 सर्वं ( D4 om सर्वं ) मन्ने प्रतिष्ठित ( for $7^{d}$ )

8 $^{a}$) G1 3 4 गृहस्थो ( for °स्था ) — $^{b}$) M हि ( for च ) V1 B Dn D10 भिक्षवस्तापसास्तथा ( B3 °दा ) — $8^{cd}$ = ( var ) 14, App I ( No 4 ) line 2268 — $^{c}$) V1 B1 3 4 5 Dn D10 अन्नाद्भवति वै प्राणा, T1 अन्नात्प्राण प्रभवति — $^{d}$) T1 प्रत्यह ( for °क्ष )

9 = ( var ) 14, App I ( No 4 ) lines 2269-70 — $^{a}$) Some MSS कुटुम्ब V1 B Dn D10 तु ( for [अ]पि ) Bom ed and Kumbh ed कुटुम्बिने सीदते च — $^{d}$) G4 गतिम् ( for भूतिम् )

10 $^{a}$) D5 भूताय ( for रूपाय ) — $^{b}$) Dn3 S ( except G4 ) यद्द ( Dn3 T G2 यो द ) दाति ( for यो दद्याद् ) — $^{c}$) Dn3 D3 4 6-9 T2 3 G2 4 M4 निधि ( for निधिं ) — $^{d}$) D1 3 T3 परलौकिकम् T2 अन्न न ( for आत्मन )

11 = ( var ) 14, App I ( No 4 ) lines 2271-72 — $^{a}$) D5 आर्तम् ( for श्रान्तम् ) — $^{b}$) D2 अर्हम्, D4 6 7 9 गृहम्, G1 3 अतम् ( for अर्हम् ) T1 गृहस्थो गृहमागतं — $^{c}$) T3 भूमिम् ( for भूतिम् ) B2 इच्छन्वै ( for अन्विच्छन् ) — D4 om $11^{d}$–$12^{b}$ — $^{d}$) D1 आगमत् ( for °तम् ) T1 प्रियातिथिमुपस्थित

12 D4 om $12^{ab}$ ( cf v l 11 ) T1 om 12 $12^{ab}$ = 14, App I ( No 4 ) line 2273 — $^{a}$) T2 भित्त्वा

अन्नदः प्राप्नुते राजन्दिवि चेह च यत्सुखम् ॥ १२
नावमन्येदभिगतं न प्रणुद्यात्कथंचन ।
अपि श्वपाके शुनि वा न दानं विप्रणश्यति ॥ १३
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
श्रान्तायादृष्टपूर्वाय स महद्धर्ममाप्नुयात् ॥ १४
पितॄन्देवानृषीन्विप्रानतिथींश्च जनाधिप ।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ॥ १५
कृत्वापि पापकं कर्म यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन युज्यते ॥ १६
ब्राह्मणेष्वक्षयं दानमन्नं शूद्रे महाफलम् ।
अन्नदानं च शूद्रे च ब्राह्मणे च विशिष्यते ॥ १७
न पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव वा ।
भिक्षितो ब्राह्मणेनेह जन्म वान्नं प्रयाचितः ॥ १८
अन्नदस्यान्नवृक्षाश्च सर्वकामफलान्विताः ।
भवन्तीहाथ वामुत्र नृपते नात्र संशयः ॥ १९
आशंसन्ते हि पितरः सुवृष्टिमिव कर्षकाः ।
अस्माकमपि पुत्रो वा पौत्रो वान्नं प्रदास्यति ॥ २०
ब्राह्मणो हि महद्भूतं स्वयं देहीति याचते ।

---

(for हित्वा) — b) M4 सुशीघ्रो (for °लो) — D4 reads 12cd (repeating 12a) after 350* — c) T2 अन्नत (for °द) G4 राज्य (for राजन्) — d) D4 (first time) यथा, G4 भयात् (for च यत्) T2 विजिते इ महत्सुख

13 b) M4 प्रणुद्येत् (for °द्यात्) B Dn D1 कदाचन (for कथं°) — c) T2 द्युति (for शुनि) D6 7 9 अपि श्वपाकं मुनिं राजन् (hypermetric) — d) Dn8 दत्त (for दान) B1 -प्रशस्यते (for प्रणश्यति) B6 न दानं प्रविनश्यति, T1 8 G M नान्नदानं प्रण(T1 विन)श्यति, T2 नान्नदानं प्रतिष्ठित

14 a) Dn1 n2 आर्ताय (for श्रान्ताय) T2 G2 -रूपाय (for पूर्वाय) — d) D10 M1 2 4 सु (for स) D1-5 7-9 महा; D6 om (for महद्) T2 8 G2 4 स महत्त्वमवाप्नुयात्, G1 8 महद्धर्ममवा°.

15 =(var) 14, App I (No 4) lines 2281-82 — a) T G2 पितॄ (for पितॄन्) D1-9 तथा (for ऋषीन्) — b) D1-9 नराधिप (for जना°) — c) D4 6-9 ये नरा प्रीणयत्यन्नैस्, D5 प्रीणयंत्यन्नैर्लोकांस् (submetric) — d) D4 5 तेषां (for तस्य) D6-9 तेषां पुण्यतमं महत्, M1-3 तस्य पुण्य महत्फलं

16 =(var) 14, App I (No 4) lines 2283-84 — a) D5 तु, G1 [अ]ति (for [अ]पि) Dn8 D1 6-9 T8 पातक (for पापक) Dn1 n2 कृत्वातिपातक कर्म, D10 °पि पाप पुरुषो — d) Dn1 n2 मुह्यते, D10 T1 लिप्यते (for युज्यते) D. न स पापे प्रमुच्यते

17 a) D6 7 ब्राह्मणेपि (for °ष्पु) T2 8 G2 4 [पु]न यद् (for [अ]क्षय). M1-3 दत्तम् (for दानम्) — b) M महत्फल — T1 om 17c-18b — c) V1 B Dn D1-4 M2 हि (for the first च). M4 चेद् (for the second च) — d) D5 ब्राह्मणेषु (for °णे च)

18 T1 om 18ab (cf v 1 17) — a) D5 ग्रामं*, G1 8 -शरणं (for च°) — b) D6-9 व्रतम् (for देशम्) V1 B4 5 Dn D2 5-10 M2 च (for वा) D4 न स्वाध्यायमत तथा —T1 reads 18cd after 21ab — c) D6-9 M1-3 भिक्षता (for भिक्षितो) T8 G [अ]त्र (for [इ]ह) T1 2 भिक्षवे ब्राह्मणे वा (T1 °णाया)त्र. — d) V1 B2 (marg) 4 5 Dn1 n2 n8 (orig) D1 4 9 दद्यादन्न, B1 2 (orig) 8 Dn8 (marg) जन्म चान्नं, D5-8 दद्याच्चान्नं (for जन्म वान्न) D2 प्रयच्छत (for प्रयाचित) D10 दद्याच्चान्न च याचत, T G दद्यादेवाविचारत (T1 °यन्). — After 18, D4 6 7 9 ins

350* आशयाभ्यागत विप्र भोजनार्थमुपस्थितम्।

— After the above, D4 reads 12cd (repeating 12a)

19 T1 om 19 D5 transp 19 and 20 — a) S (T1 om) अन्नदस्यान्नदा वृक्षा — b) V1 B Dn D1 5 10 फलप्रदा (for -फलान्विता) — c) V1 B Dn M1-3 चेह च, D6 चाथ वा; D10 ह्यत्र च, T2 8 G [इ]ह तथा (for [इ]हाथ वा) — d) B6 Dn1 n2 D5 M4 नृपतेर् (for °ते)

20 D5 transp 19 and 20 — a) B1 D8 आशसंति, D5-9 आशास्य(D5 °स)ते (for आशासन्ते) D8 [इ]ह, M1-3 [अ]पि (for हि) — b) T2 8 G4 सद्वृष्टिम् (for सुवृ°) D1 2 कार्षका, D3 कार्षिका, D4 6-9 कर्षुका — c) D4 transp पुत्रो and वा B2 कदास्माक कुले पुत्र — d) D2 6 om (hapl) पौत्रो वा D. प्रयच्छति (for प्रदास्यति)

21 D3 om 21 — b) V1 B1 2 5 Dn2 n3 D5 10 याचति, Dn1 याति च, D6 7 9 याचित (for याचते).

अकामो वा सकामो वा दत्त्वा पुण्यमवाप्नुयात् ॥ २१
ब्राह्मणः सर्वभूतानामतिथिः प्रसृताग्रभुक् ।
विप्रा यमभिगच्छन्ति भिक्षमाणा गृहं सदा ॥ २२
सत्कृताश्च निवर्तन्ते तदतीव प्रवर्धते ।
महाभोगे कुले जन्म प्रेत्य प्राप्नोति भारत ॥ २३
दत्त्वा त्वन्नं नरो लोके तथा स्थानमनुत्तमम् ।
मृष्टमृष्टान्नदायी तु स्वर्गे वसति सत्कृतः ॥ २४
अन्नं प्राणा नराणां हि सर्वमन्ने प्रतिष्ठितम् ।
अन्नदः पशुमान्पुत्री धनवान्भोगवानपि ॥ २५
प्राणवांश्चापि भवति रूपवांश्च तथा नृप ।
अन्नदः प्राणदो लोके सर्वदः प्रोच्यते तु सः ॥ २६
अन्नं हि दत्त्वातिथये ब्राह्मणाय यथाविधि ।
प्रदाता सुखमाप्नोति दैवैश्चाप्यभिपूज्यते ॥ २७
ब्राह्मणो हि महद्भूतं क्षेत्रं चरति पादवत् ।
उप्यते तत्र यद्बीजं तद्धि पुण्यफलं महत् ॥ २८
प्रत्यक्षं प्रीतिजननं भोक्तृदात्रोर्भवत्युत ।
सर्वाण्यन्यानि दानानि परोक्षफलवन्त्युत ॥ २९
अन्नाद्धि प्रसवं विद्धि रतिमन्नाद्धि भारत ।
धर्मार्थावन्नतो विद्धि रोगनाशं तथान्नतः ॥ ३०
अन्नं ह्यमृतमित्याह पुराकल्पे प्रजापतिः ।

— After $21^{ab}$, $T_1$ reads $18^{cd}$ — $^{a}$) $D_{1\,2}$ सर्वे, $T_1$ M तु स ( for वा स )

22 $^{a}$) $D_9$ om from ब्राह्मण up to दत्त्वा त्वन्नं ( in $24^{a}$ ) — $^{c}$) $V_1$ B Dn $D_8$ $M_4$ यदधि, $D_{1-8}$ समभि ; $D_{4\,10}$ $M_{2\,8}$ यमाधि ( for यमाभि- )

23 $D_9$ om 23 ( cf v. l 22 ) — $^{a}$) M चेन् ( for च ) — $^{b}$) $D_{1-8}$ ददतोर्ध्व ( for तदतीव ) $B_{1\,3\,4}$ $D_8$ वि ( for प्र ) $B_2$ $D_5$ $G_2$ -वर्तते ( for -वर्धते ) — $T_1$ om $23^{cd}$ — $^{cd}$) $V_1$ B Dn $D_{1\,2\,4\,7\,8\,10}$ $T_{2\,3}$ G -भागे, $D_{5\,6}$ भोग ( for भोगे ) $V_1$ B Dn $D_{10}$ transp जन्म and प्रेत्य $V_1$ B Dn $D_{4\,5\,10}$ चाप्नोति ( for प्रा° ) $Dn_3$ $D_{1-3}$ मानव ( for भारत )

24 $D_9$ om up to त्वन्नं ( in $24^{a}$ ) ( cf v l 22 ) — $^{a}$) $D_{1\,2}$ हि ( for तु ) — $T_1$ om $24^{bc}$ — $^{b}$) $Dn_1$ यथा, $T_{2\,3}$ G तस्य ( for तथा ) — $^{c}$) $Dn_2$ $n_3$ नित्यं, $T_{2\,3}$ $G_2$ $M_{1\,3\,4}$ स्विष्ट ( for मृष्ट ) $D_{4\,6\,7\,9}$ च ( for तु ) $V_1$ $B_5$ $D_{10}$ नित्यमिष्टान्नदायी तु, $B_{1-4}$ $Dn_1$ $D_8$ नित्य मिष्टान्न ; $G_{1\,3\,4}$ $M_2$ स्विष्टमिष्टान्न — $^{d}$) S भवति ( for वसति ) $B_5$ $T_1$ सत्कृतं

25 $^{a}$) $D_4$ अत्र, $D_{10}$ अन्नात् ( for अन्न ) — $^{b}$) $D_8$ अन्ने प्राणा प्रतिष्ठिता — $T_3$ om (hapl) $25^{c}$–$31^{d}$ — $^{d}$) $D_6$ पुत्रवान् ( for भोग )

26 $T_3$ om 26 ( cf v l 25 ) $T_1$ om $26^{ab}$ — $^{a}$) $D_{4\,6-9}$ प्राणवान्सुभगश्चापि — $^{b}$) S ( $T_{1\,3}$ om ) नराधिप ( for तथा नृप ) — $^{d}$) $T_2$ सर्वत ( for द ) $D_1$ M च स, $D_5$ सुधै, $T_{1\,2}$ G हि स ( for तु स )

27 $T_3$ om 27 ( cf v l 25 ) — $^{a}$) $B_3$ om, $Dn_3$ तु ( for हि ) — $^{b}$) $D_6$ विशेषत ( for यथा विधि ) — $^{c}$) $T_2$ सर्वम् ( for सुखम् ) — $^{d}$) $V_1$ B Dn $D_{10}$ दैवतैश्चापि पू( $Dn_3$ °भिपू )ज्यते, $D_5$ दैवैश्चाद्धाभिपूज्यते

28 $T_3$ om 28 ( cf v l 25 ) — $^{a}$) $M_{1\,3}$ ब्राह्मणा ( for °णो ) $M_4$ क्षेत्रं ( for भूत ) — $^{b}$) $V_1$ B Dn $D_{10}$ क्षेत्रभूत युधिष्ठिर, $M_4$ इह क्षेत्र च पादवत् — $^{c}$) $Dn_1$ $T_1$ $G_{1-3}$ यत्र यद्, $D_{4\,6-9}$ यत्र तद्, $T_2$ यद्धि यद् ( for तत्र यद् ) — $^{d}$) $T_2$ भवेत् ( for महत् ) $M_{1-3}$ तद्धि पुण्य महत्फल

29 $T_3$ om 29 ( cf v l 25 ) $T_1$ om 29 — $^{a}$) $D_{4\,6\,7\,9}$ प्रत्यक्षे ( for °क्षं ) $M_{1-3}$ जनकं ( for °नं ). — $^{b}$) $Dn_1$ $n_2$ भोक्तुर्दातुर् ( for भोक्तृदात्रोर् ) — $D_{2\,8}$ om ( hapl ) $29^{cd}$ $D_{10}$ om $29^{c}$–$30^{b}$ — $^{c}$) $D_{1\,2\,6\,7\,9}$ [ इ ]हान्न, $G_4$ $M_{1\,4}$ [ अ ]न्नानि ( for [ अ ]न्यानि ). — $^{d}$) $Dn_3$ $D_{4\,7-9}$ $T_2$ $G_4$ परोक्षे ( for °क्ष )

30 $T_3$ om. 30 ( cf v l 25 ) $D_{10}$ om $30^{ab}$ ( cf v l 29 ) — $^{a}$) $T_2$ $G_2$ प्रभव ( for प्रसवं ) $V_1$ $B_{2\,4\,5}$ $Dn_1$ $n_3$ याति ; $B_{1\,3}$ $Dn_2$ यांति ( for विद्धि ) — $^{b}$) $V_1$ $B_{2-5}$ Dn $G_{1\,3\,4}$ रतिर् ( for रतिम् ) $D_{1-3\,5}$ च पार्थिव ; $D_{6-9}$ च भारत ; M फल पर ( for हि भारत ). $B_1$ $T_2$ $G_2$ रतिरन्नाद्धि पार्थिव ( $B_1$ जायते ), $D_4$ °रन्नाच्च भारत, $T_1$ रन्नाद्भवत्यपि — $T_1$ om $30^{cd}$ — $^{c}$) $T_2$ $G_4$ सर्वार्थाव् ( sic ), $G_3$ सर्वार्थम् ( for धर्मार्थाव् ) $D_2$ ह्यन्नतो ( for अ° ) — $^{d}$) $B_1$ नाशस् S ( $T_{1\,3}$ om. ) [ आ ]त्मन ( for [ अ ]न्नत )

31 $T_3$ om 31 ( cf v l 25 ) $31^{ab}$ = ( var ) 14,

अन्नं भुवं दिवं खं च सर्वमन्ने प्रतिष्ठितम् ॥ ३१
अन्नप्रणाशे भिद्यन्ते शरीरे पञ्च धातवः ।
बलं बलवतोऽपीह प्रणश्यत्यन्नहानितः ॥ ३२
आवाहाश्च विवाहाश्च यज्ञाश्चान्नमृते तथा ।
न वर्तन्ते नरश्रेष्ठ ब्रह्म चात्र प्रलीयते ॥ ३३
अन्नतः सर्वमेतद्धि यत्किंचित्स्थाणु जङ्गमम् ।
त्रिषु लोकेषु धर्मार्थमन्नं देयमतो बुधैः ॥ ३४
अन्नदस्य मनुष्यस्य बलमोजो यशः सुखम् ।
कीर्तिश्च वर्धते शश्वत्त्रिषु लोकेषु पार्थिव ॥ ३५
मेघेष्वम्भः संनिधत्ते प्राणानां पवनः शिवः ।
तच्च मेघगतं वारि शक्रो वर्षति भारत ॥ ३६
आदत्ते च रसं भौममादित्यः स्वगभस्तिभिः ।
वायुरादित्यतस्तांश्च रसान्देवः प्रजापतिः ॥ ३७
तद्यदा मेघतो वारि पतितं भवति क्षितौ ।
तदा वसुमती देवी स्निग्धा भवति भारत ॥ ३८
ततः सस्यानि रोहन्ति येन वर्तयते जगत् ।
मांसमेदोस्थिशुक्राणां प्रादुर्भावस्ततः पुनः ॥ ३९
संभवन्ति ततः शुक्रात्प्राणिनः पृथिवीपते ।
अग्नीषोमौ हि तच्छुक्रं सृजतः पुष्यतश्च ह ॥ ४०
एवमन्नं च सूर्यश्च पवनः शुक्रमेव च ।

---

App I (No 4) line 2287 — [a]) D3 एव (for इति) D2 [आ]हु (for [आ]ह) — [b]) T2 -काले (for कल्पे) — T1 om $31^{cd}$ — [c]) D4 8 T2 G2 M1 3 4 दिवं भुव (by transp) — [d]) D1 2 5–9 द्यन्ने (for अन्ने)

32 =(var) 14, App (No 4) lines 2288–89 — [a]) D6 -प्रणाशे हि (hypermetric) (for प्रणाशे) T1 क्षीयते (for भिद्यन्ते) — [c]) D4 अल (for बल)

33 [a]) B3 प्ररोहाश्च, M4 संस्कारा स (for आवाहाश्च) B1 G4 आहाराश्च विहाराश्च — [b]) D8 T1 यज्ञश्च (for यज्ञाश्च) D2 न वा (for तथा) — [c]) V1 B (except B1) Dn D5 10 M2 नि (for न) — T1 om $33^{d}$–$34^{c}$ — [d]) B1 3 4 चास्ते, D8 चाने, M चानु (for चात्र) D8 प्रमीयते (for प्रली°) D1 2 4 5 ब्रह्म चानुप्र(D4 °त्र प्र, D5 °षु प्र)मीयते, D6 7 9 ब्रह्म वा न प्र(D9 वात्रै प्र)मीयते, T2 अन्नत्रास प्रहीयते, T3 G ब्रह्म चानुप्रहीयते

34 T1 om $34^{abc}$ (cf v 1 33) — [a]) D4 अन्न वत, D6–9 T2 3 G1 3 4 अन्नाद् (for °त) T2 3 G2 सत्यम् (for सर्वम्) — [b]) B1 T2 3 G1 3 स्थास्नु, G3 स्थालु (for स्थाणु) — [c]) T2 धर्मात्मा (for °र्थम्) — [d]) T2 3 G2 4 सदा; G3 इतो (for अतो)

35 [b]) V1 B Dn D10 यशांसि च, D6 7 यशोतुल (for यश सुखम्) — [d]) D8 भारत (for पार्थिव)

36 M1–3 transp 36 and 37 — [a]) V1 B Dn मेघेपूर्वं; D5 मेघश्चाम्भ, D10 G4 मेघेषु क, T1 G2 °षूद, T3 °षूदकं (hypermetric), M1–3 पूष, M4 °त्वप (for °ष्वम्भ) Dn3 सविधत्ते T2 मेघेषु उदकं धत्ते, G1 3 °घूदकमादत्ते — [b]) D1–3 T1 प्राणिनां (for प्राणाना) T2 पावन (for प°) V1 B Dn D10 पति (for शिव) D4 6–9 प्राणिना प(D8 9 पा)वनः पति, D5 प्राणाना पावन शिव — [c]) D6 om (hapl) from तच्च up to पति (in $38^{b}$) T2 कृत (for गतं)

37 =(var) 14, App I (No 4) lines 2291–92 D6 om 37 (cf v 1 36) M1–3 transp 36 and 37. — [a]) V1 B Dn रसान्भौमान् (for रसं भौमम्) — [b]) D5 आदित्यश्च, T2 3 G4 °त्यस्य, M1 इम स्व (for °त्य स्व-) — T1 om $37^{cd}$ — [c]) D1 G4 M तं च, D4 5 7 9 सैव, T2 3 G1–3 स्व च (for ताश्च) B2 Dn1 वायुरादित्यतसाश्च, D8 गश्चैव — [d]) S (T1 om) रस Dn1 n2 D5 7 9 प्रवर्षति, D4 प्रकर्षति, D8 च वर्षति (for प्रजापति)

38 =(var) 14, App I (No 4) lines 2293–94 D6 om up to पति (in $38^{b}$) (cf v 1 36) — [a]) B1 यद्यदा, T2 3 G2 4 तद्यथा, G1 3 तद्द्यान् (for तद्यदा) — [d]) D5 पार्थिव (for भारत)

39 =(var) 14, App I (No 4) lines 2295–96 — [a]) B1 शस्यानि — [c]) B5 S शुक्लाना (for -शुक्राणा) — B3 om (hapl ?) $39^{d}$–$40^{c}$ — [d]) Dn1 भात पुन, D6 7 पुनस्तत (by transp) D5 प्रादुर्भावा परस्तत, D5 र्भावास्ततस्तत

40 B3 om $40^{abc}$ (cf v 1 39) D5 om $40^{a}$–$41^{b}$ — [a]) B5 T G M1 शुक्लात् (for शुक्रात्) — [b]) T1 2 -तले (for -पते) — T1 om $40^{cd}$ — [c]) G2 अग्निष्टोमो (for अग्नीषोमौ) B5 T2 3 G1 3 4 M1 शुक्लं,

एक एव स्मृतो राशिर्यतो भूतानि जज्ञिरे ॥ ४१
प्राणान्ददाति भूतानां तेजश्च भरतर्षभ ।
गृहमभ्यागतायाशु यो दद्यादन्नमर्थिने ॥ ४२

भीष्म उवाच ।

नारदेनैवमुक्तोऽहमदामन्नं सदा नृप ।
अनसूयुस्त्वमप्यन्नं तस्माद्देहि गतज्वरः ॥ ४३
दत्त्वान्नं विधिवद्राजन्विप्रेभ्यस्त्वमपि प्रभो ।
यथावदनुरूपेभ्यस्ततः स्वर्गमवाप्स्यसि ॥ ४४
अन्नदानां हि ये लोकास्तांस्त्वं शृणु नराधिप ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ।
नानासंस्थानरूपाणि नानास्तम्भान्वितानि च ॥ ४५
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ॥ ४६
अनेकशतभौमानि सान्तर्जलवनानि च ।
वैडूर्यार्कप्रकाशानि रौप्यरुक्ममयानि च ॥ ४७
सर्वकामफलाश्चापि वृक्षा भवनसंस्थिताः ।
वाप्यो वीथ्यः सभाः कूपा दीर्घिकाश्चैव सर्वशः ॥ ४८
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ।
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च ॥ ४९
क्षीरं स्रवन्त्यः सरितस्तथा चैवान्नपर्वताः ।
प्रासादाः पाण्डुराभ्राभाः शय्याश्च कनकोज्ज्वलाः ।
तानन्नदाः प्रपद्यन्ते तस्मादन्नप्रदो भव ॥ ५०

D4 शुक्रे ( for शुक्र ) — $^d$ ) V1 B Dn सृजत , D10 8 ( T1 om ) प्रजात ( for प्रजन ) D1–8 पुण्यतश् ( for पुण्य° ) D4 6–9 प्रजा° प्रजनयिष्यत ( D4 °वि )

41 =( var ) 14, App I ( No 4 ) lines 2297–98 D5 om 41$^{ab}$ ( of v l 40 ) — $^a$ ) V1 B Dn D10 अन्नाद्धि, D6 7 अन्नं हि ( for अन्नं च ) T1 पर्जन्य , T8 G4 M4 सूर्यं च ( for सूर्यश्च ) G1 8 एवमग्निं च सूर्यं च — $^b$ ) T1 सूर्यं, T2 8 G शुक्र ( for शुक्रम् ) — T1 om 41$^{cd}$ — $^c$ ) M पृष ( for एव ) Dn8 स्थितो ( for स्मृतो ) — $^d$ ) V1 B Dn D10 ततो , T2 8 G1–8 तिर्यग् ( for यतो )

42 $^a$ ) G1 प्राण D6–9 भूतानि, M1–8 रमा ( for °नां ) — $^c$ ) Dn1 n2 [अ]थ ( for [आ]शु ) — $^d$ ) M1–8 ददाति ( for दद्याद् )

43 T2 8 G om the ref — $^b$ ) D1–8 सतामन्नं, D10 प्रादा ; T1 अन्न दधि, T2 8 G अन्नदान ( for अदामन्न ) — $^c$ ) D5 अतन्द्रितस्, D6–9 अन्न भूयस् ( for अनसूयुस् ) D4 T8 G4 अनसू( D4 °अभू )यस्त्वमापन्नं — $^d$ ) T2 8 G2 4 तत पर ( for गतज्वर )

44 $^b$ ) V1 B2 Dn1 n2 इति ( for अपि ) — $^c$ ) G2 -भूतेभ्यस् ( for रूपे° )

45 $^a$ ) D1–4 अन्नदाने, D10 T1 °दानाद् ( for °दाना ) — $^b$ ) D2 8 शृणुष्व ( for त्व शृणु ) V1 B1–4 Dn D8 10 जनाधिप ( for नरा ) D1 5 तान्शृणुष्व जनाधिप, D8 7 9 तास्त्व शृणुष्व पार्थिव — 45$^{cdef}$ =( var ) 14, App I ( No 4 ) lines 2299–2300 — $^d$ ) T2 ( *sup lin* as in text ) महात्मन — T1 om 45$^{ef}$ — $^e$ ) V1 B2 Dn1 तारा ( for नाना ) D6 10 G1 8 M2 सस्थानि ( for न- ) B5 Dn2 D5 तारासंस्थानि रूपाणि — $^f$ ) D5 -शोभान्वितानि, D10 T2 8 G4 स्तभयु ( for -स्तम्भान्वि° ) D6 7 9 [अ]पि ( for च )

46 =14, App I ( No 4 ) lines 2301–2302 D5 om ( hapl ) 46$^{ab}$ — $^a$ ) Dn3 वक्र-, T8 इन्द्र ( for चन्द्र ) — T1 om ( hapl ) 46$^{cd}$ — $^d$ ) M चराणि स्थावराणि च

47 47$^{ab}$ =( var ) 14, App I ( No 4 ) line 2303 — $^b$ ) V1 B Dn -चराणि, D5 धराणि ( for वनानि ) — D5 om ( hapl ) 47$^{cd}$ — $^c$ ) V1 B Dn1 n2 D8 वैदूर्यार्कं D6–9 -प्रभाभाञ्जि ( for प्रकाशानि ) — $^d$ ) D1–8 6–9 रुक्मरूप्य , D4 T1 G रूप्यरुक्म ( for रौप्य° )

48 48–50 =( var ) 14, App I ( No 4 ) lines 2304–2310 — $^a$ ) D10 कर्म- ( for काम ) G1 8 फल ( for फलाश् ) — $^b$ ) G4 सन्श्रिता ( for सस्थिता ) B8 4 वृक्षा भवनमास्थिता — $^c$ ) T2 वापी ( for वीथ्य ) — $^d$ ) T G [अ]पि ( for [ए]व )

49 D6 om 49 — $^b$ ) D10 नियुक्तानि ( for युक्तान्यथ ) — $^c$ ) D5 भक्ष्य भोज्य च पेय च

50 $^a$ ) T1 क्षीर ( for क्षीरं ) V1 B Dn D1–10 T2 स्रवति ( for स्रवन्त्य ) — $^b$ ) Dn3 तथा चैवानुपूर्वश — $^c$ ) B D4 T G M1 3 4 पांडराभ्राभा , D2 पांडुरा रम्या , D6 7 °रा शुभ्रा ( for °राभ्राभा ) — $^d$ ) B2 कन्याश् ( for शय्याश् ) Dn1 n2 D3 शय्याश्च कांचनोज्वला , D2 शातकुम्भाश्च सोज्वला , T8 शय्याश्च कनकोपला — $^e$ ) V1 B Dn D10 तानि ( for तान् )

एते लोकाः पुण्यकृतामन्नदानां महात्मनाम् । तस्मादन्नं विशेषेण दातव्यं मानवैर्भुवि ॥ ५१

इति श्रीमहाभारते अनुशासनपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

# ६३

युधिष्ठिर उवाच ।
श्रुतं मे भवतो वाक्यमन्नदानस्य यो विधिः ।
नक्षत्रयोगस्येदानीं दानकल्पं ब्रवीहि मे ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
देवक्याश्चैव संवादं देवर्षेर्नारदस्य च ॥ २
द्वारकामनुसंप्राप्तं नारदं देवदर्शनम् ।
पप्रच्छैनं ततः प्रश्नं देवकी धर्मदर्शिनी ॥ ३
तस्याः संपृच्छमानाया देवर्षिर्नारदस्तदा ।
आचष्ट विधिवत्सर्वं यत्तच्छृणु विशां पते ॥ ४
नारद उवाच ।
कृत्तिकासु महाभागे पायसेन ससर्पिषा ।
संतर्प्य ब्राह्मणान्साधूँल्लोकानाप्नोत्यनुत्तमान् ॥ ५
रोहिण्यां प्रथितैर्मांसैर्माषैरन्नेन सर्पिषा ।
पयोऽनुपानं दातव्यमानृण्यार्थं द्विजातये ॥ ६
दोग्ध्रीं दत्त्वा सवत्सां तु नक्षत्रे सोमदैवते ।

---

51 $^{a}$) T2 पुण्यकृता (for °कृताम्) — $^{b}$) T2 3 अन्नदानं, G1 3 4 °दानान् (for °दाना) D8 नराधिप (for महात्मनाम्) — $^{c}$) V1 B6 Dn D2 प्रयत्नेन (for विशेषेण)

Colophon om in D1 3 — *Parvan name* B1 2 4 Dn3 शांति — *Sub-parvan* V1 B Dn D1-7 9 10 M दानधर्म — *Adhy name* B1 अन्नदानविधि, B2 अन्नप्रदानप्रशंसा, B4 Dn3 D5 T2 3 अन्नदानप्रशसा, D6-9 M अन्नप्रशंसा, G3 4 अन्नदानप्रशसन — *Adhy no* (figures, words or both) V1 63, D10 68, T1 89, T2 3 G2 4 98, G1 93, G3 92, M 91 — *Śloka no* D4 52

## 63

1 $^{a}$) D6 om मे — $^{b}$) D7 [s]वधि (for विधि) — $^{c}$) D3 -योगेपि, D6 7 9 -कल्पस्य (for -योगस्य) — $^{d}$) D1 3 निबोध, D8 वदस्व; D4 ब्रवीतु (for °हि)

2 $^{c}$) D8 सवादे (for °द) D1 6-8 देवक्या सह सवादं — $^{d}$) V1 B Dn D10 M1 महर्षेर् (for देव°)

3 D2 om 3$^{ab}$ — $^{a}$) G4 समनु (for अनुसं) — $^{b}$) B3 वेददर्शन, M1-3 देवदर्शिन (for °र्शनम्) — $^{c}$) V1 B1-3 5 Dn T G2 4 [इ]द, B4 D1 3-10 [इ]मं (for [ए]न) V1 B1 2 Dn वच, D3 4 तव, T G नृप (for तत) — $^{d}$) V1 B2-5 Dn D5 10 दर्शन (D6 °नी), B1 D6 -दर्शिनं (for °नी)

4 $^{a}$) G1 3 अस्या (for तस्या) T1 त, T2 G तु (for सं-) M तस्या तु पृच्छमानायां — $^{b}$) V1 B Dn D10 तत, D4 (also as in text) 6-9 T3 G M1 तथा (for तदा) — $^{d}$) Dn1 n2 D3 तच्छृणुष्व (for यत्त च्छृणु) D8-7 नराधिप (for विशां पते) D8 9 यत्त च्छृणु नराधिप

5 $^{b}$) D1 2 [ए]व (for स) — D9 om (hapl) 5$^{c}$-6$^{b}$ — $^{c}$) G सर्वाल्ँ (for साधूल्ँ) — $^{d}$) T3 G4 प्राप्नोति (for आ°) D1 2 [अ]नुत्तम

6 D9 om 6$^{ab}$ (cf v l 5) — $^{a}$) M पार्षतैर् (for प्रथि°) B1-3 D8 मार्गैर्; D5 माषैर् (for मांसैर्) V1 B4 5 Dn D10 रोहिण्या प्रस्रवैर्मार्गैर् — $^{b}$) G2 घृतैर् (for माषैर्) M अन्नै स (for अन्नेन) D3 तथा चान्नेन सर्पिषा, T2 3 G1 अन्नेन सह सर्पिषा — $^{c}$) V1 B Dn D2 5 8 M2 [s]न्नपानं, D4 6 7 9 [s]न्नदान (for ऽनुपान) — $^{d}$) V1 B2-5 Dn D1 3 अनृणार्थं, D2 आनृणार्थं, D3 6 7 9 आ(D8 अ)नुपौर्व्यं (for आनृण्यार्थं)

7 $^{a}$) B4 D2 3 च, T3 वै (for तु) — $^{b}$) T2 3 सौम (for सोम-) T3 G4 M1 देवते (for दै°) D4 नक्षत्रे सोमदेवतै — $^{c}$) D1-3 गच्छेत, D6 गच्छते, T1

गच्छन्ति मानुषाल्लोकात्स्वर्गलोकमनुत्तमम् ॥ ७
आर्द्रायां कृसरं दत्त्वा तैलमिश्रमुपोषितः ।
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥ ८
अपूपान्पुनर्वसौ दत्त्वा तथैवान्नानि शोभने ।
यशस्वी रूपसंपन्नो बह्वन्ने जायते कुले ॥ ९
पुष्ये तु कनकं दत्त्वा कृतं चाकृतमेव च ।
अनालोकेषु लोकेषु सोमवत्स विराजते ॥ १०
आश्लेषायां तु यो रूप्यमृषभं वा प्रयच्छति ।
स सर्वभयनिर्मुक्तः शात्रवानधितिष्ठति ॥ ११
मघासु तिलपूर्णानि वर्धमानानि मानवः ।
प्रदाय पुत्रपशुमानिह प्रेत्य च मोदते ॥ १२
फल्गुनीपूर्वसमये ब्राह्मणानामुपोषितः ।
भक्षान्फाणितसंयुक्तान्दत्त्वा सौभाग्यमृच्छति ॥ १३
घृतक्षीरसमायुक्तं विधिवत्षष्टिकौदनम् ।
उत्तराविषये दत्त्वा स्वर्गलोके महीयते ॥ १४
यद्यत्प्रदीयते दानमुत्तराविषये नरैः ।
महाफलमनन्तं च भवतीति विनिश्चयः ॥ १५
हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः ।

G1. 3 M1-8 ऊध्यते (for गच्छन्ति) Dn2 D3 8 लोकान् (for लोकात्) T2 3 G2 4 M4 ऊध्यते मानुषाँल्लोकान् — d) D1-5 7-9 स्वर्गवासम् (for लोकम्)

8 a) D5 6 कृसरा; D7 9 कृशरा (for कृसर) M4 दाता (for दत्त्वा) — D10 T2 3 G2 repeat 8bc after 10a — b) V1 B Dn G1 M4 तिल- (for तैल) — D1 3-7 9 repeat 8cd after 16ab — d) D5 (first time) कुरधानांश् (for क्षुरधाराश्) T1 क्षुरसाराश्च पातितान् (s10)

9 a) Hypermetric V1 B Dn3 D4 6-9 पूपान्, Dn1 पुष्ये, D3 सूपान्, D5 एतान् (for अपूपान्) M दद्यात् (for दत्त्वा) D8 पुनर्वसौ तथापूपास् — b) D1-8 तत्र (for तथा) — d) Dn1 T2 3 G1 2 4 बहुक्षो G3 om कुले T1 जायते प्रथिते कुले

10 a) V1 B1-3 5 Dn पुष्येण, B4 पुष्ये च (for पुष्ये तु) — After 10a, D10 T2 3 G2 repeat 8bc — b) V1 B Dn D1 2 4, 8 10 वा (for the first च) D1 2 4 6-9 वा (for the second च) — c) Dn2 पापेषु (for लोकेषु) B1 (marg) स्वप्रकाशेषु लोकेषु; D9 (marg sec m) अभिवरसर्वलोकेषु — d) Dn2 T2 3 G2 4 सु- (for स)

11 a) B2 D5 8 T1 G M4 आश्लेषासु, B3. 4 D1-4 6 7 9 अश्लेषासु (for आश्लेषायां) D8 तथा, D5 च यो (for तु यो) — b) D6-9 वृषभं (for ऋ°) — c) D5 G3 सर्पं (for सर्वं) D4 corrupt, D6-9 स सर्वसुखसंयुक्तं — d) B5 Dn1 n2 समवान् (for शात्र°) D1 6-9 विमानम (D8 नान)धिगच्छति

12 a) D1-3 वारि (for तिल) — After 12ab, D7 ins

351* ताम्राणि तिलपात्राणि त्रिंशत्पलमितानि तु ।

— c) M पुत्री (for पुत्र) — d) D2 om from प्रेत्य up to पुण्यान्ना (in 17b) B1 जायते (for मोदते)

13 D2 om 13 (cf v l 12) D8 om (hapl. ?) 13-14 — a) Some MSS फाल्गुनी (for फ°) — b) T1 G1 3 M ब्राह्मणेभ्य (for णानाम्) T2 3 G2 4 ब्राह्मण समुपोषित — c) Some MSS भक्ष्यान् M1-3 पानीय (for फाणित) G1 3 M1 2 संपृक्तान् (for संयु°) D1 भक्षाहारेण संयुक्तान्, D10 भक्ष फाणित संयुक्त, T1 corrupt, T2 3 पानीयं तक्रसमिश्रं (T3 °युक्तान्), G2 4 फाणितं तक्रसमिश्र — d) V1 B2 Dn D4 अर्छति, B3-5 D6-9 अर्हति, T G2 इच्छति (for ऋ)

14 D2 om 14 (cf. v l 12) D8 om 14 (of v l 13) T1 om 14ab — a) G4 दधि (for घृत) — b) B1 स्वस्तिकौदक, D6 7 9 G3 M4 षष्टिकोदन; T2 3 G1 2 4 M1-3 षाष्टिको° (for षष्टिकौ°) — c) G3 उत्तराषाढयोर्दत्त्वा — d) B1 सर्वे; G4 स्वर्गे (for स्वर्ग)

15 D2 om. 15 (cf v l 12) — c) V1 B Dn D10 तद् (for च) — d) D4 6-9 [इ]द (for [इ]ति) D5 भवतीह विनिश्चित, T G तत्तत्भवति भूरिश; M दत्तं भवति भूरिश

16 D2 om 16 (cf v l 12) — b) T1 चतुर्युजम् (for °र्युक्तम्) — After 16ab, D1 3-7 9 repeat 8cd D1 3-7 9 om 16cd — c) D8 आप्नोति (for प्रा°) T2 3 च पराल्ँ (for परमाल्ँ) — d) T1 पुण्यै, T2 3 G M पुण्यान् (for पुण्य) G1 नाम (for -काम).

प्राप्नोति परमाँल्लोकान्पुण्यकामसमन्वितान् ॥ १६
चित्रायामृषभं दत्त्वा पुण्यान्गन्धांश्च भारत ।
चरत्यप्सरसां लोके रमते नन्दने तथा ॥ १७
स्वातावथ धनं दत्त्वा यदिष्टतममात्मनः ।
प्राप्नोति लोकान्स शुभानिह चैव महद्यशः ॥ १८
विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदाम् ।
सप्रासङ्गं च शकटं सधान्यं वस्त्रसंयुतम् ॥ १९
पितृन्देवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते ।
न च दुर्गाण्यवाप्नोति स्वर्गलोकं च गच्छति ॥ २०
दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति ।
नरकादींश्च संक्लेशान्नाप्नोतीति विनिश्चयः ॥ २१
अनुराधासु प्रावारं वस्त्रान्तरमुपोषितः ।
दत्त्वा युगशतं चापि नरः स्वर्गे महीयते ॥ २२
कालशाकं तु विप्रेभ्यो दत्त्वा मर्त्यः समूलकम् ।
ज्येष्ठायामृद्धिमिष्टां वै गतिमिष्टां च विन्दति ॥ २३
मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः ।
पितृन्प्रीणयते चापि गतिमिष्टां च गच्छति ॥ २४
अथ पूर्वास्वषाढासु दधिपात्राण्युपोषितः ।
कुलवृत्तोपसंपन्ने ब्राह्मणे वेदपारगे ।
प्रदाय जायते प्रेत्य कुले सुबहुगोकुले ॥ २५

17 D2 om up to पुण्यान्ग (in $17^b$) (cf v l 12) — $^a$) V1 B1, 2 4 5 Dn D10 T1 G1 2 M4 वृषभ (for °ऋ°) — D6 om (hapl) $17^b$–$18^a$ — $^b$) B2 Dn1 n2 पुण्य- (for पुण्यान्) B5 शोभने; T1 पुष्कलान् (for भारत) — $^c$) V1 B Dn D2 5 T3 चरति (for चरति) — $^d$) V1 B Dn D2 रमते, D5 T G चरते (for रमते) D2 5 7 10 नदते (for °ने)

18 D6 om $18^a$ (cf v l 17) — $^a$) V1 B2 4 5 Dn D4 7–10 स्वात्याम् (for स्वाताव्) T3 G2 M अपि (for अथ) D5 स्वातीष्वथ धन दद्याद्, T2 स्वाता-विष्टतमं दत्त्वा — $^b$) T3 G4 अर्थिन (G4 °ना) (for आत्मन) — $^c$) D1 2 G4 M1–3 सु, D6 om (for स) — $^d$) G1 3 लोके (for चैव)

19 B1 om $19^{ab}$ — $^b$) D1–3 च सुव्रता (D3 °त), T1 पयस्विनीं, T2 3 G4 सुसमता, G1–3 [अ]थ समता, M3 तु दुग्धदा (for च दु°) — T1 om $19^{cd}$ — $^c$) D3 8 10 सोपा (D10 प) सग, M1 3 सप्रसर्ग (for सप्रा) V1 om from शकट up to विन्दति (in $21^b$) — $^d$) D3 सवाद्य (for सधान्य) G3 वसु- (for वस्त्र) B2 3 D1 2 10 -समित (for सयुतम्) T2 3 G1 2 4 सधान्य वसुसत्तम, M सवाद्य वसुसंयु (M4 °मि) त

20 V1 om 20 (cf v l 19) — $^a$) D5 T1 3 G2 पितृ (for पितृन्) G1 3 च देवान् (by transp) — $^b$) D5 T2 [अ]नतम्, D9 [अ]क्षय्यम् (for [आ]नन्त्यम्) — T1 om $20^c$–$21^d$ — $^d$) T3 स्वर्गं (for स्वर्ग) Dn2 लोके (for लोक). T2 3 G स (for च)

21 V1 om $21^{ab}$ (cf v l 19) T1 om 21 (cf v l 20) — $^a$) T2 3 G M1, 3 4 यथेष्टं (for यथोक्तं) D3 दत्त्वा युगशत चापि — $^b$) D6–9 गतिम् (for वृत्तिम्) D4 गतिमिष्टा स गच्छति — $^c$) G1 3 स क्लेशान्; G2 सक्लेश (for शान्) D1–3 नरकाश्चैकविंशान्वै — $^d$) B1 सु- (for नि) D1–3 न प्राप्नोतीह (D3 ति) निश्चय

22 $^a$) D1 3 प्रवर, T1 शकट (for प्रावार) — $^b$) V1 B2 4 5 Dn1 n2 वस्त्रान्न (B4 °स्त्राणा, Dn1 °रान्न) समुपोषित, B3 उष्ट्राश्च समु°, D5 वस्त्राम्बरमु°, T1 M वस्त्रोत्तरमु° — $^c$) G1 partly damaged T1 युग्य (for युग) D5 साम्र, D6 वापि (for चापि) — $^d$) T1 स्वर्गलोके (for नर स्वर्गे)

23 $^a$) D3 T2 3 G2–4 M काळ (for काल) — $^b$) V1 om दत्त्वा D1–3 T2 3 G2 4 विप्र, T1 चैव (for मर्त्य) B3 दत्त्वानन्य ससूलकान् — $^c$) D1 3 4 6–9 वृद्धिम्, D3 गतिम् (for ऋद्धिम्) B1 ऋद्धा (for इष्टा) D4 च (for वै) — $^d$) B2 D4 6–10 स (for च) V1 B1 3–5 Dn D1 4 6–10 गच्छति (for विन्दति)

24 D3 om (hapl) 24 — $^a$) D6–9 दद्याद् (for दत्त्वा) — $^c$) B3 G1 3 वा (for च) D1–9 स पितृन्प्रीणयति वै — $^d$) D3 9 स (for च) B4 D6 7 10 T G विंदति (for गच्छति) D5 स्वर्गलोक च गच्छति

25 $^a$) D4 6–9 प्रदाय (D4 °दीय) पूर्वाषाढासु — $^b$) B1 पूर्वाणि (for पात्राणि) — $^c$) T1 शील- (for कुल) — $^e$) V1 B5 Dn1 n2 D4 6–10 पुरुषो (for प्रदाय) B1 om जायते — $^f$) V1 B Dn1 n3 गोधने, Dn2 D10 S शोभने (for -गोकुले)

26 $^a$) B3 उदमन्थ, D5 ओदनस्तु, D10 दधिमथ; T1 उदपात्र, T2 3 G4 इदमध (G4 ध), G1–3 इद

उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम् ।
दत्त्वोत्तरास्वषाढासु सर्वकामानवाप्नुयात् ॥ २६
दुग्धं त्वभिजिते योगे दत्त्वा मधुघृताप्लुतम् ।
धर्मनित्यो मनीषिभ्यः स्वर्गलोके महीयते ॥ २७
श्रवणे कम्बलं दत्त्वा वस्त्रान्तरितमेव च ।
श्वेतेन याति यानेन सर्वलोकानसंवृतान् ॥ २८
गोप्रयुक्तं धनिष्ठासु यानं दत्त्वा समाहितः ।
वस्त्ररश्मिधरं सद्यः प्रेत्य राज्यं प्रपद्यते ॥ २९
गन्धाञ्शतभिषग्योगे दत्त्वा सागुरुचन्दनान् ।
प्राप्नोत्यप्सरसां लोकान्प्रेत्य गन्धांश्च शाश्वतान् ॥ ३०
पूर्वभाद्रपदायोगे राजमाषान्प्रदाय तु ।
सर्वभक्षफलोपेतः स वै प्रेत्य सुखी भवेत् ॥ ३१
औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति ।
स पितॄन्प्रीणयति वै प्रेत्य चानन्त्यमश्नुते ॥ ३२
कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति ।
सा प्रेत्य कामानादाय दातारमुपतिष्ठति ॥ ३३
रथमश्वसमायुक्तं दत्त्वाश्विन्यां नरोत्तमः ।
हस्त्यश्वरथसंपन्ने वर्चस्वी जायते कुले ॥ ३४
भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै ।
गाः सुप्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ॥ ३५

---

मन्थं, M गुळ( M₁ °ण )पिंड (for उदमन्थ) G₁ सु- (for स) — b) B₂ G₄ प्रभूत (for प्रभूत-) D₄ 6-9 मणि (for मधु) B₆ Dn₁ n₂ प्रभूतमधिफाणित, T₁ °पयसा सदा — d) Dn₃ D₅-7 9 T₁ G₄ सर्वान् (for सर्व) D₁-3 उपाश्नुते, D₅ M क्षवाप्नुते, D₈ 9 °श्नुते, T₂ 3 G °प्यते (for °नुयात्)

27 T₁ om. 27 — a) D₁ 3 6-9 च, D₆ वा (for तु) D₂ [अ]भिजिति, D₄ हिते, D₅ जिता, D₁₀ M जितो (for जिते) G₂ लोके (for योगे) — b) D₆ om मधु B₁ 3-5 Dn₁ n₂ D₉ 10 घृतप्लुत (for -घृता) D₇ दत्त्वा घृतमधुप्लुत — c) Dn₃ (marg) मनुष्येभ्य (for मनीषिभ्य)

28 a) G₁ 3 श्रावणे (for श्र°) Some MSS कबलं (for कम्बलं) — b) G₄ partly damaged V₁ B₆ Dn₁ n₂ D₈ वा (for च) — d) Dn₁ D₁ 2 4 6-9 स्वर्गं, G₄ सर्वाल्ँ (for सर्व) D₁₀ समावृतान् (for असवृ) D₃ स्वर्गलोकमसंशयं, D₅ स्वर्गलोक न सशय

29 a) B₁ गोमयुक्तं (for गोप्र°) D₈ M₁-3 धनिष्ठायां, T₂ 3 G श्रविष्ठासु (for धनि°) — c) Dn₁ n₂ D₄ 6-9 राशिधन; D₁-3 रश्मिमय, D₁₀ धन (for °धर) D₅ अर्करश्मिसम सद्यो, S वस्त्ररश्मिसमायुक्त — d) D₅ स्य प्रेत्य (for प्रेत्य राज्य) D₈ उपाश्नुते, T₂ G₄ प्रवर्तते (for प्रपद्यते) T₂ वत्से राज्य प्रवर्तते

30 a) V₁ B Dn₁ n₂ D₁-10 गन्धाञ्शतभिषायोगे — D₈ om (hapl) 30b-31a — b) Dn₂ D₄ 5 7 9 10 सागरु, S चाग( M₁ °गु )रु (for सागुरु) — c) V₁ B₁-3 5 Dn D₃ सवान्, D₂ लोके (for लोकान्) — d) D₈ S शोभनान् (for शाश्वतान्) D₁₀ सदाभिलषिताभूमि

31 D₃ om 31a (cf v l 30) — a) Dn₂ T₁ पूर्वभाद्रपदायोगे, D₁ 3 4 6 7 9 पूर्वभद्र°, T₂ 3 G M पूर्वप्रौष्ट° — D₂ om (hapl) 31b-32a — b) T₁ G₁ 3 अजमांसं, T₂ 3 G₂ 4 छागमांस; M राजन्मास (for °माषान्) B₆ प्रदाय च, D₁ 3 T₁ °य वै, D₅ °पयेत् (for °य तु) — c) D₃ भक्ष्य (for भक्ष) T₂ 3 G -फलोपेत B₃ 4 सर्वभक्ष्य( B₄ °भोग )बलोपेत

32 D₂ om 32a (cf v l 31) — c) D₁-3 5 [पु]च (for वै)

33 a) D₃ कास्योपदोहां धेनु वै, D₄ 6-9 °दोहि (D₇ 9 ह )नीं धेनु — b) T₃ रेवत्या D₆ 7 9 हस्ते य सप्रयच्छति — c) D₁ 2 6 7 T₁ G₄ M₃ 4 स-, D₄ सं (for सा) T₃ प्रीत्या (for प्रेत्य) T₁ आप्नोति (for आदाय) — d) T₂ G₄ गच्छति (for तिष्ठति) T₁ इहापि सुखमेधते

34 b) T₁ [अ]श्विन्यां (for °न्या) V₁ B₂ 4 5 Dn D₂ 5 8-10 T₂ G₂ नरोत्तम — c) D₃ T₂ 3 सपन्नो, G₄ सपूर्णे (for सपन्ने) G₂ हस्त्यश्वरथमापन्नो

35 b) D₆-9 प्रदापयेत्, T₁ ददाति वै, T₃ G₄ प्रदाय च (for °य वै) — c) G₁ 3 स (for सु-) D₄ स्वर्गलोकमवाप्नोति, D₆ 7 स गोलोकमवा°; D₈ 9 गोलोक समवा — d) M₃ प्राप्य (for प्रेत्य) — After 35, Dn₁ reads 13 64 1, repeating it in its proper place

36 Dn₁ D₂ om 36 with the ref — a) T₂ 3 G₄

स्वधीतस्यापि च फलं दृश्यतेऽमुत्र चेह च ।
इहलोकेऽर्थवान्नित्यं ब्रह्मलोके च मोदते ॥ १०
दमस्य तु फलं राजञ्शृणु त्वं विस्तरेण मे ।
दान्ताः सर्वत्र सुखिनो दान्ताः सर्वत्र निर्वृताः ॥ ११
यत्रेच्छागामिनो दान्ताः सर्वशत्रुनिषूदनाः ।
प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः ॥ १२
युज्यन्ते सर्वकामैर्हि दान्ताः सर्वत्र पाण्डव ।
स्वर्गे तथा प्रमोदन्ते तपसा विक्रमेण च ॥ १३
दानैर्यज्ञैश्च विविधैर्यथा दान्ताः क्षमान्विताः ।
दाता कुप्यति नो दान्तस्तस्माद्दानात्परो दमः ॥ १४
यस्तु दद्यादकुप्यन्हि तस्य लोकाः सनातनाः ।
क्रोधो हन्ति हि यद्दानं तस्माद्दानात्परो दमः ॥ १५
अदृश्यानि महाराज स्थानान्ययुतशो दिवि ।
ऋषीणां सर्वलोकेषु यानीतो यान्ति देवताः ॥ १६
दमेन यानि नृपते गच्छन्ति परमर्षयः ।
कामयाना महत्स्थानं तस्माद्दानात्परो दमः ॥ १७
अध्यापकः परिक्लेशादक्षयं फलमश्नुते ।
विधिवत्पावकं हुत्वा ब्रह्मलोके नराधिप ॥ १८

—d) D1 7 8 10 चासम्, D6 प्रासम् (for [अ]वासम्)

10 G4 om 10 (cf v l 9) —a) B1, 4 D1-8 अधीतस्य (for स्व°) —b) D6 वेह च, M1-8 चैव ह (for चेह च) B8 दृश्यते चेह शर्मणे, D5 प्रत्यक्षमिह दृश्यते —c) V1 B Dn G1 [ऽ]थ वा (for ऽर्थवान्) —d) D4 6-9 पर- (for ब्रह्म-)

11 G4 om 11 (cf. v l 9) —a) D4-9 च (for तु) —b) D5 शृणुष्व (for शृणु त्व) V1 T1 तु, T2 8 G1-8 M1-8 च (for मे) — D8 om (hapl) 11c G2 om 11c-13b

12 G4 om 12 (cf v l 9) G2 om 12 (cf. v l 11) T1 om 12ab —a) T2 विप्रा (for दान्ता) —b) D9 सर्वे (for सर्व) Some MSS निसूदना D2 सर्वत्राप्यरिसूदन —c) D1 8 10 T2 हि (for च) D10 यं तात (for यद्दान्ता) D2 प्रापयतीह यद्दाता, D4-9 यत्प्रार्थयते दांताश्च; T1 8 G1 8 M प्रार्थयते हि यद्दांता —d) D3 [ऽ]त्र (for तन्) S (G2 4 om) असंशयं (for न संशय)

13 G4 om 13 (cf. v l 9) G2 om 13ab (cf v l 11) T2 om 13ab —a) T8 G8 M1 8 4 पूज्यंते (for यु°) —c) V1 B Dn D6 10 यथा (for तथा) D4 6-9 T2 3 G2 M8 [अ]नु (for प्र) — T1 om 13d-14a

14 G4 om 14 (cf. v l 9) T1 om 14a (cf v l 13) —a) D1 मानैर् (for दानैर्) D3 वित्तैर् (for विविधैर्) —b) V1 B Dn D2 8 10 T1 तथा (for यथा) — After 14ab, N ins

368* दानाद्दमो विशिष्टो हि दान किंचिद्द्विजातये ।

[ D1-4 6-9 वै (for हि) B2 5 Dn1 n2 दद्द्, D4-9 इति (for दान) B1 दद्याद्, D1 8-10 केचिद् (for किंचिद्) D1-4 6-10 विजानते (for द्विजातये) ]

— T1 om 14cd —c) T2 M8 दातास्, T8 दात (for दान्तस्) —d) V1 B Dn D1 10 परं; S (T1 G4 om) वरो (for परो) T2 नर (for दम)

15 G4 om 15ab (cf v l 9) D4 6 7 9 om (hapl) 15 T1 om. 15c-18a M2 om 15c-17d D8 om 15cd —c) D8 ह (for हि) V1 B Dn2 D1 2 10 दत्त, D8 वृत्त (for दानं) —d) V1 B Dn D8 पर, T2 8 G M1 8 4 वरो (for परो) — T2 3 G M1 3 4 ins after 15 T1 after 15ab

369* विद्यादानात्पर नास्ति वेदविद्या महाफला ।

[ T1 G1 8 महाबला (for °फला) ]

16 T1 M2 om 16 (cf v l 15) T2 8 G M1, 8 4 om (hapl) 16-17 —a) D4-9 अदृश्यत (for °श्यानि) —d) Dn1 D3 ते, D4-9 स (for [इ]तो)

17 T1 M2 om 17 (cf v l 15) T2 8 G M1 3 4 om 17 (cf v l 16) V1 B3 Dn2 om 17ab —a) B4 D10 [ए]तानि, D4-9 तानि (for यानि) —c) Dn2 महास्थानात् (for महत्स्थान) —d) V1 B1 2 4 5 Dn दानात्पर, B3 परतर (for दानात्परो)

18 T1 om 18 (cf v l 15) —b) T4 3 G1 4 अक्षय्य (for °य) —d) D4-7 9 महीयते, T2 3 G M1-8 यथा (T2 गता) नृप (for नराधिप) D3 मर्त्यलोके महीयते

19 D6 om (hapl) 19 —a) D4 5 8 9 च (for हि) —b) D4 5 7 9 न्यायत मे (for °मित्रा )

अधीत्यापि हि यो वेदान्न्यायविद्भ्यः प्रयच्छति ।
गुरुकर्मप्रशंसी च सोऽपि स्वर्गे महीयते ॥ १९
क्षत्रियोऽध्ययने युक्तो यजने दानकर्मणि ।
युद्धे यश्च परित्राता सोऽपि स्वर्गे महीयते ॥ २०
वैश्यः स्वकर्मनिरतः प्रदानाल्लभते महत् ।
शूद्रः स्वकर्मनिरतः स्वर्गं शुश्रूषयार्च्छति ॥ २१
शूरा बहुविधाः प्रोक्तास्तेषामर्थांश्च मे शृणु ।
शूरान्वयानां निर्दिष्टं फलं शूरस्य चैव ह ॥ २२
यज्ञशूरा दमे शूराः सत्यशूरास्तथापरे ।
युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः ॥ २३
बुद्धिशूरास्तथैवान्ये क्षमाशूरास्तथापरे ।
आर्जवे च तथा शूराः शमे वर्तन्ति मानवाः ॥ २४
तैस्तैस्तु नियमैः शूरा बहवः सन्ति चापरे ।
वेदाध्ययनशूराश्च शूराश्चाध्यापने रताः ॥ २५
गुरुशुश्रूषया शूराः पितृशुश्रूषयापरे ।
मातृशुश्रूषया शूरा भैक्ष्यशूरास्तथापरे ॥ २६
सांख्यशूराश्च बहवो योगशूरास्तथापरे ।
अरण्ये गृहवासे च शूराश्चातिथिपूजने ।
सर्वे यान्ति पराल्लँलोकान्स्वकर्मफलनिर्जितान् ॥ २७
धारणं सर्ववेदानां सर्वतीर्थावगाहनम् ।

---

— $^c$) $G_2$ धर्म (for -कर्म) $V_1$ $B_{1\,2\,4\,5}$ $Dn_1$ $n_3$ -प्रशंसी तु, $Dn_2$ सा तु, $D_1$ सा च (for °सी च) $T_1$ स सर्वकामसंयुक्त — $^d$) $T_1$ स्वर्गलोके (for सोऽपि स्वर्गे)

20 $D_8$ $G_2$ om (hapl) 20 — $^c$) $D_{4-9}$ $M_{1-3}$ त्रात (for त्राता) — $^d$) $D_{4-9}$ स्वर्गे सोपि (by transp)

21 $^a$) $D_{1\,3}$ स्वकर्मणि (for र्मनि) — $D_{6\,7\,9}$ om (hapl) $21^{bc}$ — $^b$) $D_{1\,8}$ फलं (for महत्) — $^c$) $V_1$ $G_4$ स्वधर्म (for स्वकर्म-) — $^d$) $B_6$ $D_{4-6}$ [अ]र्हति, S (except $M_3$) [इ]च्छति (for [ऋ]च्छति) $B_2$ स्वर्गं शुश्रूषणे विभो

22 $T_1$ $M_3$ om (hapl) $22^{ab}$ — $^b$) $V_1$ B Dn $D_{1\,2\,9\,10}$ मर्थांस्तु, $D_2$ मर्थानि (for मर्थांश्च) $D_5$ ते (for मे) — $^c$) $B_3$ corrupt, $D_{4-9}$ शूरात्मना हि निर्दिष्ट, $T_2$ °न्विधात्रा निर्दिष्टान् — $^d$) $V_1$ $B_4$ Dn $D_{2\,3,\,4\,8}$ $T_2$ हि (for ह) — For $22^{cd}$, $T_1$ subst.

370* शूराणा चापि निर्दिष्ट फलं च नियत शृणु ।

23 $D_3$ om $23^{ab}$ — $^a$) $T_1$ सत्य, $T_2$ $G_4$ $M_{1-3}$ यज्ञे (for यज्ञ) $V_1$ दया; B $Dn_3$ $D_{10}$ दम, $D_{1\,2\,4-9}$ तप-, $T_{2\,3}$ $G_{2\,4}$ सत्य (for दमे) — $^b$) $T_1$ यज्ञ, $T_{2\,3}$ $G_{2\,4}$ दमे, $M_1$ सत्वे, $M_{2-4}$ सत्ये (for सत्य) $D_5$ [ए]व हि (for [अ]परे) — $D_4$ om (hapl) $23^c$–$26^d$ $D_{7\,9}$ om (hapl) $23^c$–$24^b$ — $^c$) $D_1$ $T_2$ $M_{1-3}$ युद्धे (for युद्ध) $D_8$ [अ]न्ये (for [उ]क्ता) — $^d$) $D_{1\,2}$ तथापरे, $D_5$ च पावना (for च मानवा) — After 23, $Dn_1$ $n_2$ $D_{5\,8\,10}$ read $27^{ab}$

24 $D_4$ om 24, $D_{7\,9}$ om $24^{ab}$ (for all, cf. v l 23) $Dn_1$ $D_{5\,10}$ om (hapl) $24^{ab}$ — $^a$) $V_1$ $Dn_2$ वृद्धि (for बुद्धि) — $D_2$ om (hapl.) $24^c$–$25^b$ — $^c$) $T_{2\,3}$ $G_{2\,4}$ M आर्जवेन (for वे च) — $Dn_2$ om (hapl) $24^d$–$26^a$ $D_8$ om (hapl) $24^d$–$25^c$ $T_1$ om (hapl) $24^d$–$25^a$ — $^d$) $V_1$ $B_{1-3\,5}$ $D_1$ समे; $M_{1-3}$ सम्यग् (for शमे) $D_8$ $T_{2\,3}$ G $M_4$ सम($G_3$ °मा)वर्तंत मानवा

25 $D_4$ om 25 (cf v l 23) $Dn_2$ om 25, $D_2$ om $25^{ab}$, $D_8$ om $25^{abc}$, $T_1$ om $25^a$ (for all, cf v l 24) — $^a$) $V_1$ B $Dn_1$ $n_3$ $D_{10}$ तैस्तैश्च, $D_{5-7\,9}$ एतैश्च (for तैस्तैस्तु) — $^b$) $Dn_3$ $D_8$ वा (for च) — $^d$) $V_1$ B $Dn_3$ $D_{10}$ $M_4$ [अ]ध्ययने (for [अ]ध्यापने) $D_{6-9}$ $T_{1\,3}$ $G_{1\,3\,4}$ M तथा (for रता) $T_2$ वेदस्याध्यापने तथा, $G_2$ शूराश्चापि र* तथा

26 $D_4$ om 26 (cf. v l 23) $Dn_2$ om $26^a$ (cf v. l 24) — $^a$) $T_1$ -शुश्रूषणे (for षया) — $^b$) $T_1$ मातृशुश्रूषणे तथा — $G_3$ om (hapl.) $26^{cd}$ — $^c$) $V_1$ $B_3$ $Dn_3$ मातु (for मातृ) $D_{6-9}$ राजन् (for शूरा) $T_1$ पितृशुश्रूषणे शूरा — $^d$) Some MSS भैक्ष- (for भैक्ष्य)

27 $Dn_1$ $n_2$ $D_{5\,8\,10}$ read $27^{ab}$ after 23 — $^b$) $Dn_2$ योगे (for योग) — $Dn_3$ $D_{3\,5}$ read $27^{cd}$ twice — $^c$) $B_{1\,3}$ $D_8$ (second time) $G_{1\,3}$ अरण्य- (for °ण्ये) $D_1$ अरण्यगृहवासेषु; $D_2$ °ण्यगुरुवासे च — $^d$) $D_5$ (second time) S भोजने (for -पू°) $Dn_3$ $D_{3\,5}$ (all first time) त्यागे शूरास्तथापरे — $^e$) $D_6$ ते वै (for सर्वे) — $D_4$ om $27^f$ — $^f$) $T_1$ धर्म (for कर्म) $G_{1-3}$ स्वर्गकर्मविनिर्जितान्

सत्यं च ब्रुवतो नित्यं समं वा स्यान्न वा समम् ॥ २८
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २९
सत्येन सूर्यस्तपति सत्येनाग्निः प्रदीप्यते ।
सत्येन मारुतो वाति सर्वं सत्ये प्रतिष्ठितम् ॥ ३०
सत्येन देवान्प्रीणाति पितॄन्वै ब्राह्मणांस्तथा ।
सत्यमाहुः परं धर्मं तस्मात्सत्यं न लङ्घयेत् ॥ ३१
मुनयः सत्यनिरता मुनयः सत्यविक्रमाः ।
मुनयः सत्यशपथास्तस्मात्सत्यं विशिष्यते ।
सत्यवन्तः स्वर्गलोके मोदन्ते भरतर्षभ ॥ ३२
दमः सत्यफलावाप्तिरुक्ता सर्वात्मना मया ।
असंशयं विनीतात्मा सर्वः स्वर्गे महीयते ॥ ३३
ब्रह्मचर्यस्य तु गुणाञ्शृणु मे वसुधाधिप ।
आ जन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह ।
न तस्य किंचिदप्राप्यमिति विद्धि जनाधिप ॥ ३४
बह्व्यः कोट्यस्त्वृषीणां तु ब्रह्मलोके वसन्त्युत ।
सत्ये रतानां सततं दान्तानामूर्ध्वरेतसाम् ॥ ३५
ब्रह्मचर्यं दहेद्राजन्सर्वपापान्युपासितम् ।
ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते ॥ ३६
प्रत्यक्षं च तवाप्येतद्ब्राह्मणेषु तपस्विषु ।
बिभेति हि यथा शक्रो ब्रह्मचारिप्रधर्षितः ।
तद्ब्रह्मचर्यस्य फलमृषीणामिह दृश्यते ॥ ३७
मातापित्रोः पूजने यो धर्मस्तमपि मे शृणु ।
शुश्रूषते यः पितरं न चासूयेत्कथंचन ।

---

28 a) D2 8 5–9 G M पारणं ( for धा° ) B5 D8 -देवानां ( for वेदाना ) D1 शरण सर्वदेवानां, T2 पारण सर्वतीर्थाना, Madras ed पारणं सर्वदेये च — b) G3 सप्त- ( for सर्व ) — d) T2 सत्यं ( for सम ) D1–9 स्याद्वा ( by transp )

29 = 1 69 22, 12 ( var ) 156 26, = ( var ) Mārkandeya P 8 42, = ( var ) Rām 2, App I ( No 18 lines 15-16 ), Hitopadeśa IV 129 — d) T2 8 G एकं ( for एव ) D1–8 [अ]तिरिच्यते ( for विशिष्यते )

30 = ( var ) Viddha-Cān 5 19 — c) Dn1 n2 D4 7–9 सत्येन मरुतो वांति — d) सत्ये सर्वं ( by transp )

31 T1 om $31^{ab}$ — a) D1–8 वेदान् ( for देवान् ) V1 B Dn D10 सत्येन देवा प्रीयते — b) S ( T1 om ) च ( for वै ) V1 B Dn D10 पितरो ब्राह्मणास्तथा — c) V1 B2–5 Dn D2 10 परो धर्मस् ( for परं धर्मं ) — d) D4–9 सत्यजेत्, S लोपयेत् ( for लङ्घ° )

32 T1 om. $32^{ab}$ — b) D8 -दर्शना ( for विक्रमा ) — e) B1 S सत्य ( for स्वर्ग- ) — f) G4 मोदंते पुरुषर्षभ

33 T1 om 33 — a) T2 फलावाप्तिम् ( for °वाप्तिर् ) — b) V1 B1 2 4 Dn3 उक्त, T3 G उक्त ( for उक्ता ) — d) B1 D10 सत्यात्, T2 3 G2 4 स च, Bom ed स वै ( for सर्वं ) D1–9 स्वर्गलोके महीयते

34 a) V1 B Dn D10 च गुण, D5 च गुणान् ( for तु गुणान् ) — b) V1 B2 4 5 Dn D1 10 स्व ( for मे ) — c) D2 त ( for तु ) — d) D3 नर ( for इह ) — f) V1 om विद्धि V1 B Dn D2 5 10 G2 नराधिप ( for जना° )

35 T1 om $35^{ab}$ — a) D8 G2 ऋषीणां, D4–9 मुनीना ( for त्वृषीणा ) D2 च ( for तु ) — b) T2 महीयते ( for वसन्त्युत ) T3 G M ब्रह्मलोकमितो ग( G1 3 °द्वाग )ता

36 a) D1 सहेद्, D2 महद्, D3 स ते, T1 हरेद् ( for दहेद् ) — b) V1 उपोषित, B3 उपासतां; D2 सूदति, T1 अशेषत ( for उपासितम् ) — T1 om $36^{cd}$ — d) D1 ब्रह्म वै, D8 ब्रह्मैव ( for ब्राह्मणो ) T2 ब्राह्मणो ह्यपरुध्यते ( sic )

37 a) V1 B Dn D8 हि, D2 तु ( for च ) V1 B Dn D10 T2 3 तथा हि, T1 G तथापि ( for तवापि ) D5 प्रत्यक्षं तदवाप्येतद् — c) S ( except B3 ) च ( for हि ) B1 G4 तथा, D1–10 सदा ( for यथा ) — d) T2 3 G2 4 M1–3 ब्रह्मचर्यं ( for °चारि ) D4 प्रदर्पित ( for -प्रधर्षित ) — e) D3 ब्रह्मचर्यस्य च फलम् — f) B4 T2 3 G2 4 M1 2 विद्यते, M3 विद्दते ( for दृश्यते )

38 a) D6–9 मातृ ( for माता ) D4 . पितृ ( for -पित्रो ) — c) D5 शुश्रूषणे ( for षते ) D1–9 च ( for य ) — d) V1 B Dn D1–3 10 कदाचन ( for कथं° ) — e) D5–9 T1 च ( for वा ) V1 B Dn D10 मातर भ्रातर वा( V1 चा )पि — f) G1 वा ( for च )

मातरं वानहंवादी गुरुमाचार्यमेव च ॥ ३८
तस्य राजन्फलं विद्धि स्वर्लोके स्थानमुत्तमम् ।
न च पश्येत नरकं गुरुशुश्रूपुरात्मवान् ॥ ३९

इति श्रीमहाभारते अनुशासनपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

# ७५

युधिष्ठिर उवाच ।
विधिं गवां परमहं श्रोतुमिच्छामि तत्त्वतः ।
येन ताञ्शाश्वताँल्लोकानखिलानश्नुवीमहि ॥ १
भीष्म उवाच ।
न गोदानात्परं किंचिद्विद्यते वसुधाधिप ।
गौर्हि न्यायागता दत्ता सद्यस्तारयते कुलम् ॥ २
सतामर्थे सम्यगुत्पादितो यः
स वै क्लृप्तः सम्यगिष्टः प्रजाभ्यः ।
तस्मात्पूर्वं ह्यादिकाले प्रवृत्तं
गवां दाने शृणु राजन्विधिं मे ॥ ३
पुरा गोषूपनीतासु गोषु संदिग्धदर्शिना ।
मान्धात्रा प्रकृतं प्रश्नं बृहस्पतिरभाषत ॥ ४

---

39 $^{a}$) $D_{1-3}$ तस्य शक्र, $D_{4\ 6-9}$ तस्यानंत, $D_{5}$ सद्नंत, $T_{1}$ $G_{1-3}$ M तस्य पार्थ, $G_{4}$ शुश्रूषार्थ (for तस्य राजन्) — $^{b}$) $D_{4\ 5\ 8\ 9}$ स्वर्लोक (for के) $V_{1}$ B Dn $D_{6\ 10}$ अर्चित (for उत्तमम्) $D_{3}$ $T_{2}$ स्वर्गस्था ($T_{2}$ °र्गे स्था)नमनुत्तमं — $^{c}$) $B_{2}$ $D_{4-6\ 8-10}$ पश्येत्स (for पश्येत) — $^{d}$) $V_{1}$ B Dn $D_{1}$ -शुश्रूषया (for पुर्)

Colophon — *Parvan name* $B_{1\ 3\ 4}$ $D_{1}$ शांति — *Sub-parvan* $V_{1}$ B Dn $D_{1\ 2\ 4-10}$ $M_{1\ 3\ 4}$ दानधर्मं — *Adhy name* $V_{1}$ $B_{1-3\ 5}$ $Dn_{2}$ $n_{3}$ $D_{10}$ गोलोकप्रश्ना ($D_{10}$ °श्न), $B_{4}$ गोलोकप्रश्ने यक्षेंद्रसंवाद, $Dn_{1}$ गोलोकप्रशस्तय; $D_{1-3}$ व्रतनियमफलानि; $T_{2}$ धर्मशास्त्रनिर्णये दानप्रकरणे गोमाहात्म्ये सर्वव्रतफलनिरूपण, $T_{3}$ सत्यविधि, $M_{1}$ सत्यप्रशसनं, $M_{2\ 3}$ दमसत्यप्रशसनं — *Adhy no* (figures, words or both) $V_{1}$ $D_{3}$ 75, $D_{4}$ 66, $D_{10}$ 82, $T_{1}$ M 103, $T_{2\ 3}$ $G_{2\ 4}$ 110, $G_{1\ 3}$ 104 — *Śloka no* $Dn_{2}$ 41, $D_{4}$ 37

## 75

1 $D_{4}$ transp 1 and 2 — $^{a}$) $G_{1}$ *partly damaged* $V_{1}$ B Dn $D_{10}$ पर श्रोतुम्, $M_{1-3}$ प्रदानेह (for परमह) — $^{b}$) $V_{1}$ B Dn $D_{10}$ इच्छामि नृप तत्त्वत — $^{c}$) $T_{2}$ [इ]माश्, $T_{3}$ $G_{4}$ [इ]ह, $G_{3}$ [ए]ताञ् (for ताञ्) $D_{13}$ येन तासा च ताँल्लोकान् — $^{d}$) $V_{1}$ $B_{1\ 2\ 5}$ $Dn_{3}$ प्राप्नुयादि($B_{1}$ $Dn_{3}$ °मि)ह, $B_{4}$ आप्नुयादिह, $D_{6\ 8-10}$ आप्नुयामहि, $G_{1\ 3}$ अश्नुवामहे, $G_{4}$ अनधीमहि (sic) (for अश्नुवी°) $B_{3}$ सुखिनामाप्नुयामिह, $Dn_{1}$ $n_{2}$ अर्थिना प्राप्नुयादिह, $D_{5}$ निखिलान्प्राप्नुयादिह, $D_{7}$ निखिलानाप्नुयाम्यहं

2 $D_{4}$ transp 1 and 2 — $^{a}$) $T_{2}$ परम (hypermetric) (for पर) $D_{8}$ नास्ति (for किंचिद्) — $^{c}$) $D_{8}$ न्यायार्जिता (for °गता) $D_{1}$ om दत्ता $D_{4\ 6\ 7\ 9}$ हिरण्योपागता दत्ता, $D_{5}$ गौर्हिरण्यं गजा दत्ता — $^{d}$) $G_{1}$ damaged $D_{1}$ [s]खिलं (for कुलम्)

3 $T_{1}$ om 3 — $^{a}$) $Dn_{2}$ $G_{1\ 3}$ M अर्थं, $T_{3}$ $G_{4}$ मर्थं (for अर्थे) $T_{2}$ $G_{2}$ सतामर्थं सम्यगिस्था($G_{2}$ °गुक्त्था) दितो य — $^{b}$) $D_{1\ 3}$ सर्वं (for स वै) $B_{3}$ क्लृप्ते, $G_{2}$ गुप्त (for क्लृप्त) $V_{1}$ $B_{1\ 2}$ (marg) $_{3-5}$ Dn प्राप्य, $D_{10}$ S ($T_{1}$ om) इज्य (for इष्ट) $D_{4-9}$ स वै क्लृ($D_{4}$ क्षि)प्त सम्यगीज्यप्रयोगात् — $^{c}$) $V_{1}$ B $Dn_{1}$ $n_{3}$ $D_{10}$ -काल (for काले) S ($T_{1}$ om) तस्मात्काल सम्यगिज्याप्रवृत्त — $^{d}$) $V_{1}$ B Dn $D_{10}$ $G_{1\ 2}$ गोदानार्थं ($D_{10}$ °र्थे), $G_{3\ 4}$ M गवां दानार्थं (for गवां दाने)

4 $^{a}$) $M_{3}$ वि (for [उ]प) $D_{4-9}$ पुराणेष्वभिगीतासु; $T_{1}$ पुरा गोष्ठवितानेन, $T_{2}$ G $M_{2}$ पुरा गोष्ठे निलीनासु, $T_{3}$ $M_{1\ 3}$ पुरा गोष्ठनिपीतासु — $^{b}$) $T_{1}$ गोष्ठ-

द्विजातिमभिसत्कृत्य श्वः कालमभिवेद्य च ।
प्रदानार्थे नियुञ्जीत रोहिणीं नियतव्रतः ॥ ५
आह्वानं च प्रयुञ्जीत समङ्गे बहुलेति च ।
प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् ॥ ६
गौर्मे माता गोवृषभः पिता मे
दिवं शर्म जगती मे प्रतिष्ठा ।
प्रपद्यैवं शर्वरीमुष्य गोषु
मुनिर्वाणीमुत्सृजेद्गोप्रदाने ॥ ७

स तामेकां निशां गोभिः समसख्यः समव्रतः ।
ऐकात्म्यगमनात्सद्यः कल्मषाद्विप्रमुच्यते ॥ ८
उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने ।
त्रिविधं प्रतिपत्तव्यमर्थवादाशिषः स्तवाः ॥ ९
ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञो
गर्भोऽमृतस्य जगतश्च प्रतिष्ठा ।
क्षितौ *राधःप्रभवः शश्वदेव
प्राजापत्याः सर्वमित्यर्थवादः ॥ १०

---

(for गोषु) D₃ [श्र]संदिग्ध , D₆ संनिभ- (for सं-दिग्ध-) G₂ दर्शन (for -दर्शिना) D₄ ₆₋₉ गोषु संभिन्नदर्शिन — ᶜ) D₁₋₉ मोषात्तु (for °त्रा) B₂ सु , T₁ च (for प्र).

5 ᵃ) Dn₂ अति (for अभि) D₆ सस्कृत्य (for सत्कृत्य) T G₁₋₃ M₁₋₈ द्विजानामन्त्र्य सत्कृत्य, G₄ द्विजाना मंत्रवत्कृत्य — ᵇ) B₂ स्व (for श्व) D₃ काल्यम् (for कालम्) B₁ उपपद्य , B₃ उपवेद्य, D₁₋₉ उपपाद्य (for अभिवेद्य) D₁ ₈ श्व काल्यमुपवेद्य (D₈ °द्य) च, D₁₀ S प्रोक्त कालमुपोष्य च — ᶜ) B₂ Dn₁ n₂ S गो (for प्र) D₁₀ T₂ ₃ G₂ -दानार्थे V₁ B Dn₁ D₅ ₁₀ T₁ G₄ प्र (for नि) — ᵈ) D₂ रोहिणीर् G₃ च (for नि)

6 T₁ om 6ᵃᵇ — ᵃ) T₂ आह्वानार्थं (for °नं च) — ᵇ) M₁₋₃ सगवे (for समङ्गे) D₁₀ T₂ ₃ G M₄ सगवे बहुलेपि च — ᶜ) D₄ ₆ ₇ ₈ मध्ये (for मध्यम्) T₁ प्रविश्य प्रयतो गोष्टम्

7 ᵃ) D₉ reads from गौर्मे up to गमनात् (in 8ᵈ) twice B₄ om the first मे B₃ transp मे and माता B₃ D₄ ₆₋₈ ₉ (both times) गौर्वृषभ , Dn₁ D₅ T₁ M₂ वृषभ (for गोवृ) — ᵇ) D₅ ₉ (both times) दिव (for दिवं) D₁₀ सर्वं, S (except M₄) गर्भं (for शर्म) D₁₋₈ ₉ (both times) जगतश्च (for °ती मे) — ᶜ) D₁₋₈ प्रपद्यैकां, D₄ °द्येत , D₅₋₈ ₉ (both times) °द्ये ता (for °द्यैवं) G₁ गोष्ठ (for गोषु) — ᵈ) V₁ B D₂ ₅ ₁₀ G₃ M₂ पुनर्, D₄ मृदुर्, D₆₋₈ ₉ (both times) मृदु (for मुनिर्)

8 For the repetition in D₉, cf v 1 7 T₁ om 8-9 — ᵃ) B₃ गतामेका, T₂ G₄ विना°, G₂ सीतामेतां (for स तामेकां) D₁₋₄ ₆₋₈ ₉ (both times) सममामेति वै गोभि — ᵇ) D₁₋₈ ₉ (both times) शील° (for सख्य) B₁ सम गत , T₁ ₂ G M₄ समावृत (for समव्रत) — ᶜ) D₄ ₅ ₈ ₉ (both times) M₄ एकात्म , D₁₀ एकाधि , T₂ एकार्थ (for ऐकात्म्य) G₁ सम्यक् (for सद्य) — ᵈ) B₂ ₄ Dn D₈ ₅ T₂ ₃ G₂ ₄ M₁₋₃ कलुषाद् (for कल्म°).

9 T₁ om 9 (of v 1 8) — ᵃ) B₅ उत्सृज्य (for °ष्ट) ❀ Cn उत्सृष्ट वृषवत्सो यया सार्धं सा उत्सृष्टवृषवत्सेति गौडा । ❀ — ᶜ) V₁ B Dn D₂ ₁₀ Cn त्रिदिवं, D₁ विविधं (for त्रि°) M₁₋₃ पत्तव्या (for °व्यम्) D₁₋₉ त्रिविध प्रतिपत्तव्यश्च, T₂ ₃ G °धा प्रतिपत्तव्या ❀ Cn त्वया दात्रा प्रदेया, त्रिदिवं च प्रतिपत्तव्यं गन्तव्यम् । अर्थवादमन्त्रोक्ता आशिषश्च तव भविष्यन्तीति योज्यम् । ❀ — ᵈ) V₁ B Dn G₃ तव, D₁₋₃ तथा (for स्तवाः) D₄ ₆ ₈ चार्थवादाशिषस्तत ; D₅ ₁ ₀ चार्थवाद शिव स्तव

10 ᵃ) T₂ ₃ G₂ ₄ ऊर्जस्विन्या (for °स्विन्य) B₃ ऊर्जस्वलश्च, D₆₋₉ T₁ ऊर्ध्वमेधाश्च (for ऊर्ज°) B₃ Dn₁ n₂ D₈ ₆ G₁ यज्ञे, D₃ गर्भो, T₂ G₃₋₅ M यज्ञा (for यज्ञो) — ᵇ) D₃ यज्ञो, D₅ गावो (for गर्भो) Dn जगतोस्य, D₁₋₉ T₂ G₄ जगत (for °तश्च) — ᶜ) T₁ रोग्ग कामप्रवह , T₂ ₃ G रोग्ग (T₂ °द) प्रभव , M रोग्ग प्रवह (for *राधःप्रभव) V₁ B Dn D₅ ₁₀ क्षिते रोधप्रवह (B₃ ₄ Dn₁ D₅ ₁₀ ह प्र)वह शाश्वदेव, D₁₋₃ क्षितावृ कर्मप्रवाहा पुण्यभावा (D₂ °वा), D₅ ₆₋₉ क्षितावृकर्म प्रवहा पुण्यभावा — ᵈ) Dn₁ n₂ D₂₋₉ प्राजापत्य (for °पत्या) B₁ सत्यमेव (for सर्वमिति) D₁₀ S प्राजापत्य (D₁₀ °त्य, G₂ ₃ M₂ ₄ °त्या) सर्वमित्यप्रवाद (T₁ °द , T₂ M °दा)

11 ᵃ) D₅₋₉ प्रणुदत, G₂ ₃ प्रणर्दतु (for प्रणु) T₂ G⁴ सूर्यास् (for सौ) — ᵇ) D₁ सौराम्, D₃ तुल्या (for तथा) M₄ °नाय (for या om, D₁ सौरास्,

गावो ममैनः प्रणुदन्तु सौर्या-
स्तथा सौम्याः स्वर्गयानाय सन्तु ।
आम्नाता मे ददतीराश्रयं तु
तथानुक्ताः सन्तु सर्वाशिषो मे ॥ ११
शेषोत्सर्गे कर्मभिर्देहमोक्षे
सरस्वत्यः श्रेयसि संप्रवृत्ताः ।
यूयं नित्यं पुण्यकर्मोपवाह्या
दिशध्वं मे गतिमिष्टां प्रपन्नाः ॥ १२
या वै यूयं सोऽहमद्यैकभावो
युष्मान्दत्त्वा चाहमात्मप्रदाता ।
मनश्च्युता मनएवोपपन्नाः
संधुक्षध्वं सौम्यरूपोग्ररूपाः ॥ १३
एवं तस्याग्रे पूर्वमर्धं वदेत
गवां दाता विधिवत्पूर्वदृष्टम् ।
प्रतिब्रूयाच्छेषमर्धं द्विजातिः
प्रतिगृह्णन्वै गोप्रदाने विधिज्ञः ॥ १४
गां ददानीति वक्तव्यमर्घ्यवस्त्रवसुप्रदः ।
ऊधस्या भरितव्या च वैष्णवीति च चोदयेत् ॥ १५

---

नाय ) T1 संत ( for सन्तु ) — c ) V1 B Dn D10 आत्मानं मे मातृवत्थाश्रयतु, D1-8 आहूतो मे ददतो ह्याश्रयं तु, D4 6-9 य आत्मानं ददतीर्नाश्रय तु; D5 आत्मानं ददतीताश्रयं तु ( sic ), T1 सर्वान्कामानभित स्वर्गस्थो, T2 3 G2 4 M2 आम्नाता मामनधी( T2 M2 ती )ताश्रयं तु, G1 3 M4 आम्नातानामामनीताश्रयं तु, M1 3 आम्नाता मामनतीता श्रयंतु — d ) V1 तथानुयुक्ता, B1 तथा रक्ता, B4 D4-9 तथायुक्ता, D2 3 तथानुरक्ता, T1 युष्माभिरुक्ता, T3 तदानुक्ता ( for तथा° ) D8 ते ( for मे )

12 T1 om. 12ab — a ) D10 सर्गे सर्गे; Cn शोषो त्सर्गे ( for शेषो ) Some unused MSS देहसौख्ये ( for °मोक्षे ) ❀ Cn शोषोत्सर्गे क्षयरोगोपतापापनये क्षयरोगा दिनिवृत्तौ । ❀ — b ) T2 सरस्वत्यां, T3 G2 4 M1 4 °त्या ( for °त्य ) V1 B Dn D5 श्रेयसे, D6 7 9 °सी ( for °सि ) D10 दृत्ता ( for वृत्ता ) — T1 transp 12cd and 13ab — c ) G3 ध्रुव ( for यूय ) V1 B Dn1 सर्वपुण्योप ( for पुण्यकर्मोप ) D2 वाह्यां, D4-9 T G1 3 4 M -वाहा, G2 वाह ( for -वाह्या ) Dn1, n2 D10 यूय नित्य सर्वपुण्योपवाह्यां ( D10 °ण्यप्रवाहा ) — d ) D4-9 दिशंतु ( for दिशध्वं ) V1 B3 4 5 Dn D1 6 7 9 10 T1 प्रसन्ना ( for प्रपन्ना ) — After 12, D8 reads from संधुक्षध्व ( in 13d ) up to एव त ( in 14a )

13 For the sequence in D8, cf v 1 12 T1 transp 12cd and 13ab — a ) B1 3 D4 यो वै यूयं, T1 सौम्यायायं ( for या वै यूयं ) B1 Dn1 n2 D2 3 अद्यैव, D4 6-9 अप्येक, M4 अन्यैक ( for अद्यैक ) — b ) D2 मत्वा ( for दत्वा ) B1 सोहम्, D8 7 वाहम्, T2 3 G M1 3 देहम् ( for चाहम् ) T1 युष्मान्दत्वा श्रेयस सप्रवृत्यै, M4 °त्वा देहधर्मात्मप्रदाता ( sic ) — c ) T2 3 G4 मनश्च्युतो ( for °ता ) ❀ Cn मनएवोपपन्ना मदीयममतास्पदीभूता । ❀ — d ) D1 सर्वा संरक्षध्वं, D2 सर्वाश्रक्षध्वं, D3 संरक्षध्वं ( for संधु° ) D1 3 सौम्य- ( for सौम्य ) B4 रूपा स्वरूपा, T2 3 G M1-3 रूपाण्यदेहा ( for रूपोग्ररूपा ) B8 सर्वा संधुक्षध्व सौम्यरूपा

14 For the sequence in D8, cf. v 1 12 — a ) D5 7 9 तस्या ( for तस्याग्रे ) D4 सर्वम् ( for पूर्वम् ) D1 10 पूर्वं; D8 एतद् ( for अर्धं ) S दानस्याग्रे पूर्व- मेतद्वदेत — b ) D10 पूर्वमिष्टं, Bom ed पूर्वदृष्ट ( for °दृष्टम् ) — B5 om 14c-16b — c ) G4 M2 3 इति ( for प्रति ) T1 शेषमस्य, T2 शेषधर्मा, T3 G2 4 चैव धर्मं, G1 शेषधर्मं, G3 देशधर्म्यं; M1-3 चैव धर्म्यं ( for शेषमर्धं ) — d ) T2 G2 प्रदान्वै ( for गृह्णन्वै ) V1 om गोप्रदाने विधिज्ञ°

15 B5 om 15 ( cf. v 1 14 ) — a ) V1 Dn D5 गोप्रदानी, B8 स गोप्रदानी ( hypermetric ), D6-9 गां ददामि, G4 गवां ददानि ( for गां द° ) — b ) V1 B1 3 4 अर्घवस्त्र, D10 अर्घ्यं गृह्य ( for अर्घ्यवस्त्र ) D1-3 अर्घ्यं सु( D3 °र्घ्यंसु )व्रावरप्रदं, D4-9 अर्घ( D5 8 °र्घ्य )पात्रे पु- ( D8 8 9 °श्रु )रस्कृता; S अर्घ्यमुत्सृज्य सुव्रत ( G1 3 °त ) — c ) D10 T2 3 G4 ऊढव्या, T1 ऊधव्या ( for °स्या ) D1 भवितव्या ( for भरि ) V1 B1 3 4 Dn Cn ऊर्ध्वास्या भवितव्या च ( B4 वै ); B3 उर्जस्विन्यो भवितव्या; D4-9 क्षुधशे चरितशे च, G1 3 M4 ऊढव्या हरितव्या च, G2 ऊढव्या भरितव्याश्च, M1-3 ऊढव्या भरितव्येति ❀ Cnp ऊधस्यां तुभ्य संप्रददे । ( also ) वत्सधेनुं भवितव्या । ❀ — d ) D8 चोदना; D5 7 नोदयेत् ( for चो° ) D1 2 वैष्णवीमिति चोदना, D4 °वीं च न चोदयेत् ❀ Cnp स्व गृहाणेति चोदना । ❀

16 B5 om 16ab ( cf. v 1 14 ) T1 om. 16, T2

द्विजातिमभिसत्कृत्य श्वः कालमभिवेद्य च ।
प्रदानार्थे नियुञ्जीत रोहिणीं नियतव्रतः ॥ ५
आह्वानं च प्रयुञ्जीत समङ्गे बहुलेति च ।
प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् ॥ ६
गौर्मे माता गोवृषभः पिता मे
दिवं शर्म जगती मे प्रतिष्ठा ।
प्रपद्यैवं शर्वरीमुष्य गोषु
मुनिर्वाणीमुत्सृजेद्गोप्रदाने ॥ ७
स तामेकां निशां गोभिः समसख्यः समव्रतः ।
ऐकात्म्यगमनात्सद्यः कल्मषाद्विप्रमुच्यते ॥ ८
उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने ।
त्रिविधं प्रतिपत्तव्यमर्थवादाशिषः स्तवाः ॥ ९
ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञो
गर्भोऽमृतस्य जगतश्च प्रतिष्ठा ।
क्षितौ *राधःप्रभवः शश्वदेव
प्राजापत्याः सर्वमित्यर्थवादः ॥ १०

---

(for गोषु) D2 [श]सदिग्ध, D5 सनिभ (for सदिग्ध-) G2 दर्शन (for दर्शिना) D1 6-9 गोषु संभिन्नदर्शिन — c) D1-9 माधातु (for °त्रा) B2 सु, T1 च (for प्र)

5 a) Dn2 अति (for अभि) D5 -सस्कृत्य (for सत्कृत्य) T G1-3 M1-8 द्विजानामन्त्र्य सत्कृत्य, G4 द्विजाना मन्त्रवत्कृत्य — b) B2 स्व (for श्व) D2 काल्यम् (for कालम्) B1 उपपद्य, B3 उपवेद्य, D1-9 उपपाद्य (for अभिवेद्य) D1 8 श्व काल्यमुपवेद्य (D8 °इय) च, D10 S प्रोक्त कालमुपोष्य च — c) B2 Dn1 n2 S गो (for प्र) D10 T2 8 G2 -दानार्थं V1 B Dn1 D5 10 T1 G4 प्र (for नि) — d) D2 रोहिणीर् G4 च (for नि)

6 T1 om 6ab — a) T2 आह्वानार्थं (for °न च) — b) M1-8 संगवे (for समङ्गे) D10 T2 8 G M4 सगवे बहुलेपि च — c) D4 5 7 8 मध्ये (for मध्यम्) T1 प्रविश्य प्रयतो गोष्ठम्

7 a) D9 reads from गौर्मे up to गमनात् (in 8c) twice B4 om the first मे B3 transp मे and माता B3 D4 6-8 9 (both times) गौर्वृषभ, Dn1 D6 T1 M2 वृषभ (for गोवृ). — b) D6 9 (both times) दिव (for दिव) D10 सर्वं, S (except M4) गर्भं (for शर्म) D1-8 9 (both times) जगतश्च (for ती मे) — c) D1-8 प्रपद्यैकां, D4 °द्येत, D5-8 9 (both times) °द्ये ता (for द्यैव) G1 गोष्ठ (for गोषु) — d) V1 B D2 5 10 G3 M2 पुनर्, D4 मृदुर्, D6-8 9 (both times) मृदु (for मुनिर्)

8 For the repetition in D9, cf. v l 7 T1 om 8-9 — a) B3 गतामेकां, T2 G4 सिता°, G3 सीतामेकां (for स तामेका) D1-4 6-8 9 (both times) समतामेति वै गोभि — b) D1-8 9 (both times) शील (for सख्य) B1 सम गत, T2 8 G M4 समावृत (for समव्रत) — c) D4 5 8 9 (both times) M4 एकात्म, D10 एकाधि-, T2 एकार्थं (for ऐकात्म्य) G1 सम्यक् (for सद्य) — d) B3 4 Dn D8 6 T2 8 G2 4 M1-8 कलुषाद् (for कल्म°)

9 T1 om 9 (of v l 8) — a) B5 उत्सृज्य (for °ष्ट-) ❀ Cn उत्सृष्ट वृषवत्सो यया सार्धं सा उत्सृष्टवृषवत्सेति गौडा । ❀ — c) V1 B Dn D2 10 Cn त्रिदिव, D1 त्रिविधं (for त्रि°) M1-8 पत्तव्या (for °व्यम्) D1-9 त्रिविध प्रतिपत्तव्यश्, T2 8 G °धा प्रति पत्तव्या ❀ Cn त्वया दात्रा प्रदेया, त्रिदिवं च प्रति पत्तव्य गन्तव्यम् । अर्थवादमन्त्रोक्ता आशिषश्च तव भविष्यन्तीति योज्यम् । ❀ — d) V1 B Dn G8 तव, D1-8 तथा (for स्तवा) D4 5 8 चार्थवादाशिषस्तव; D6 7 9 चार्थवाद शिव स्तव

10 a) T2 8 G2 4 ऊर्जस्विन्या (for °स्विन्य) B3 ऊर्ज स्वलश्, D6-9 T1 ऊर्ध्वमेधाश् (for ऊर्ज°) B3 Dn1 n2 D8 5 G1 यज्ञे, D2 गर्भो, T2 G1-4 M यज्ञा (for यज्ञो) — b) D2 यज्ञो, D5 गावो (for गर्भो) Dn जगतोस्य, D1-9 T2 G4 जगत (for °तश्च) — c) T1 जगतोस्य, T2 8 G रोम्ण (T2 °द) प्रभव, M रोम्ण कामप्रवह, T2 8 G रोम्ण (for *राध प्रभव) V1 B Dn D5 10 क्षिते रोधम प्रवह (B3 4 Dn1 D5 10 ह्र प्र)वह शश्वदेव, D1-8 क्षितावृ क्सप्रवाहा पुण्यभावा (D2 °गा), D4 6-9 क्षिताद्वक्स प्रवहा पुण्यभावा — d) Dn1 n2 D2-9 प्राजापत्य (for °पत्या) B1 सत्यमेव (for सर्वमिति) D10 S प्राजापत्य (D10 °र्थं, G2 8 M2 4 °त्या) सर्वविद्याप्रवाद (T1 °ह, T8 M °दा)

11 a) D6-9 प्रणुर्वंत, G2 3 प्रणर्दतु (for प्रणु°) D1 सौरास्, T2 G3 सूर्यास् (for सौ°) — b) B5 om, D5 तुल्या (for तथा) M4 दानाय (for या

गावो ममैनः प्रणुदन्तु सौर्या-
स्तथा सौम्याः स्वर्गयानाय सन्तु ।
आम्नाता मे *ददतीराश्रयं तु
तथानुक्ताः सन्तु सर्वाशिषो मे ॥ ११
शेषोत्सर्गे कर्मभिर्देहमोक्षे
सरस्वत्यः श्रेयसि संप्रवृत्ताः ।
यूयं नित्यं पुण्यकर्मोपवाह्या
दिशध्वं मे गतिमिष्टां प्रपन्नाः ॥ १२
या वै यूयं सोऽहमद्यैकभावो
युष्मान्दत्त्वा चाहमात्मप्रदाता ।
मनश्च्युता मनएवोपपन्नाः
संधुक्षध्वं सौम्यरूपोग्ररूपाः ॥ १३
एवं तस्याग्रे पूर्वमर्धं वदेत
गवां दाता विधिवत्पूर्वदृष्टम् ।
प्रतिब्रूयाच्छेषमर्धं द्विजातिः
प्रतिगृह्णन्वै गोप्रदाने विधिज्ञः ॥ १४
गां ददानीति वक्तव्यमर्घ्यवस्त्रवसुप्रदः ।
ऊधस्या भरितव्या च वैष्णवीति च चोदयेत् ॥ १५

---

नाय ) $T_1$ संत ( for सन्तु ) —$^{c}$ ) $V_1$ B Dn $D_{10}$ आत्मानं मे मातृवन्माश्रयतु, $D_{1-3}$ आहूतो मे वदतो ह्याश्रयं तु, $D_{4\ 6-9}$ य आत्मानं ददतीर्नाश्रय तु, $D_5$ आत्मान ददतीताश्रय तु ( sic ), $T_1$ सर्वान्कामानभित स्त्वत्स्थो ; $T_{2\ 3}$ $G_{3\ 4}$ $M_2$ आम्नाता मामनधी( $T_2$ $M_2$ ती )ताश्रयं तु ; $G_{1\ 3}$ $M_4$ आम्नातानामामनीताश्रयं तु, $M_{1\ 3}$ आम्नाता मामनतीता श्रयंतु —$^{d}$ ) $V_1$ तथानुयुक्ता ; $B_1$ तथा रक्ता, $B_4$ $D_{5-9}$ तथायुक्ता, $D_{2\ 3}$ तथानुरक्ता, $T_1$ युष्माभिरुक्ता ; $T_3$ तदानुक्ता ( for तथा ) $D_3$ ते ( for मे )

12 $T_1$ om $12^{ab}$ —$^{a}$ ) $D_{10}$ सर्गे सर्गे, Cn शोषोत्सर्गे ( for शेषो ) Some unused MSS देहसौख्ये ( for °मोक्षे ) ❁ Cn शोषोत्सर्गे क्षयरोगोपतापापनये क्षयरोगादिनिवृत्तौ । ❁ —$^{b}$ ) $T_2$ सरस्वत्यां ; $T_3$ $G_{2\ 4}$ $M_{1\ 4}$ °स्या ( for °त्य ) $V_1$ B Dn $D_5$ श्रेयसे, $D_{6\ 7\ 9}$ सी ( for °सि ) $D_{10}$ दत्ता ( for वृत्ता ) — $T_1$ transp $12^{cd}$ and $13^{ab}$ —$^{c}$ ) $G_2$ ध्रुव ( for यूय ) $V_1$ B $Dn_2$ सर्वपुण्योप ( for पुण्यकर्मोप ) $D_2$ वाह्यां, $D_{4-9}$ T $G_{1\ 3\ 4}$ M -वाहा, $G_2$ वाह ( for -वाह्या ) $Dn_1$ $n_2$ $D_{10}$ यूय नित्य सर्वपुण्योपवाह्या ( $D_{10}$ °ण्यप्रवाहा ) —$^{d}$ ) $D_{4-9}$ दिशंतु ( for दिशध्वं ) $V_1$ $B_{2\ 4\ 5}$ Dn $D_{4\ 6\ 7\ 9\ 10}$ $T_1$ प्रसन्ना ( for प्रपन्ना ) — After 12, $D_3$ reads from सधुक्षध्व ( in $13^{d}$ ) up to एव त ( in $14^{a}$ )

13 For the sequence in $D_3$, cf v l 12 $T_1$ transp $12^{cd}$ and $13^{ab}$ —$^{a}$ ) $B_{1\ 3}$ $D_4$ यो वै यूय, $T_1$ सौम्यायाय ( for या वै यूयं ) $B_1$ $Dn_1$, $n_2$ $D_{2\ 3}$ अद्यैव, $D_{4\ 6-9}$ अप्येक ; $M_4$ अन्यैक ( for अद्यैक ) —$^{b}$ ) $D_2$ मत्वा ( for दत्त्वा ) $B_1$ सोहम्, $D_{3\ 7}$ यहम्, $T_{2\ 3}$ G $M_{1\ 3}$ देहम् ( for चाहम् ) $T_1$ युष्मान्दत्त्वा श्रेयस सम्प्रवृत्तै ; $M_2$ °त्वा देहधर्मात्मप्रदाता ( sic ) —$^{c}$ ) $T_{2\ 3}$ $G_4$ मनश्च्युतो ( for °ता ) ❁ Cn मनएवोपपन्ना मदीयममतास्पदीभूता । ❁ —$^{d}$ ) $D_1$ सर्वा संरक्षध्व, $D_2$ सर्वाश्रक्षध्व ; $D_3$ संरक्षध्व ( for संधु° ) $D_{1\ 3}$ सोम्य- ( for सौम्य ) $B_4$ रूपा स्वरूपा, $T_{2\ 3}$ G $M_{1-3}$ -रूपाग्र्यदेहा ( for रूपोग्ररूपा ) $B_3$ सर्वा संधुक्षध्व सौम्यरूपा

14 For the sequence in $D_3$, cf v l 12 —$^{a}$ ) $D_{5\ 7\ 9}$ तस्या ( for तस्याग्रे ) $D_4$ सर्वम् ( for पूर्वम् ) $D_{1\ 10}$ एवं, $D_3$ एतद् ( for अर्धं ) S दानस्याग्रे पूर्वमेतद्वदेत —$^{b}$ ) $D_{10}$ पूर्वमिष्टं, Bom ed पूर्वदृष्ट ( for °दृष्टम् ) — $B_5$ om $14^{c}$–$16^{b}$ —$^{c}$ ) $G_4$ $M_{2\ 3}$ इति ( for प्रति ) $T_1$ शेषमस्य ; $T_2$ शेषधर्मा, $T_3$ $G_{2\ 4}$ चैष धर्मं, $G_1$ शेषधर्मं ; $G_3$ देशधर्म्यं, $M_{1-3}$ चैष धर्म्यं ( for शेषमर्धं ) —$^{d}$ ) $T_2$ $G_3$ -ग्रहान्वै ( for गृह्णन्वै ) $V_1$ om गोप्रदाने विधिज्ञ°

15 $B_5$ om 15 ( cf v l 14 ) —$^{a}$ ) $V_1$ Dn $D_5$ गोप्रदानी, $B_3$ स गोप्रदानी ( hypermetric ), $D_{6-9}$ गां ददामि ; $G_4$ गवा ददानि ( for गां द° ) —$^{b}$ ) $V_1$ $B_{1\ 3\ 4}$ अर्घवस्त्र, $D_{10}$ अर्घ्यं गृह्य ( for अर्घ्यवस्त्र ) $D_{1-3}$ अर्घ्यं मु( $D_2$ र्घ्यंमु )द्रावरप्रदं ; $D_{4-9}$ अर्घं( $D_{5\ 8}$ र्घ्यं )पात्रे पु- ( $D_{6\ 8\ 9}$ °प्पु )रस्कृता ; S अर्घ्यमुत्सृज्य सुव्रत ( $G_{1\ 3}$ °त ) —$^{c}$ ) $D_{10}$ $T_{2\ 3}$ $G_4$ ऊढव्या, $T_1$ ऊधव्या ( for °स्या ) $D_1$ भवितव्या ( for भरि ) $V_1$ $B_{1\ 2\ 4}$ Dn Cn ऊर्ध्वास्या भवितव्या च ( $B_4$ वै ), $B_3$ ऊर्जस्विन्यो भवितव्या ; $D_{4-9}$ सुधस्ते भरितव्ये च, $G_{1\ 3}$ $M_4$ ऊढव्या हरितव्या च, $G_2$ ऊढव्या भरितव्याश्च, $M_{1-3}$ ऊढव्या भरितव्येति ❁ Cnp ऊधस्यां तुभ्यं सम्प्रददे । ( also ) वत्सधेनुं भवितव्या । ❁ —$^{d}$ ) $D_3$ चोदना, $D_{6\ 7}$ नोदयेत् ( for चो° ) $D_{1\ 2}$ वैष्णवीमिति चोदना, $D_4$ °वीं च न चोदयेत् ❁ Cnp स्व गृहाणेति चोदना । ❁

16 $B_5$ om $16^{ab}$ ( cf. v l 14 ) $T_1$ om. 16, $T_2$

नाम संकीर्तयेत्तस्या यथासंख्योत्तरं स वै ।
फलं षड्विंशदष्टौ च सहस्राणि च विंशतिः ॥ १६
एवमेतान्गुणान्वृद्धान्गवादीनां यथाक्रमम् ।
गोप्रदाता समाप्नोति समस्तानष्टमे क्रमे ॥ १७
गोदः शीली निर्भयश्चार्घदाता
न स्याद्दुःखी वसुदाता च कामी ।
ऊधस्योढा भारत यश्च विद्वा-
न्व्याख्यातास्ते वैष्णवाश्चन्द्रलोकाः ॥ १८
गा वै दत्त्वा गोव्रती स्यात्त्रिरात्रं
निशां चैकां संवसेतेह ताभिः ।
काम्याष्टम्यां वर्तितव्यं त्रिरात्रं
रसैर्वा गोः शकृता प्रस्नवैर्वा ॥ १९
वेदव्रती स्यादृषभप्रदाता
वेदावाप्तिर्गोयुगस्य प्रदाने ।
तथा गवां विधिमासाद्य यज्वा
लोकानग्र्यान्विन्दते नाविधिज्ञः ॥ २०
कामान्सर्वान्पार्थिवानेकसंस्था-
न्यो वै दद्यात्कामदुघां च धेनुम् ।
सम्यक्ताः स्युर्हव्यकव्यौघवत्य-
स्तासामुक्ष्णां ज्यायसां संप्रदानम् ॥ २१

om 16ᵃ–17ᵇ — ᵃ) V1 नामानि (for नाम स) D4 6–9 अस्यास् (for तस्या) — ᵇ) D5 तथा (for यथा) D10 च (for स) D1 8 यथासख्य यथोत्तर (D8 °म), D6–9 तथा सख्योत्तर स (D7 च) वै, S (T1 2 om) यथासख्योत्तराय वै — ᶜ) V1 B2 4 5 Dn D5 षट्त्रिंशद् (D5 °शम्), D4 6–9 षड्विंशम् (for °शद्)

17 T2 om 17ᵃᵇ (cf v l 16) — ᵃ) V1 B Dn D8 10 विद्याद्, T1 शुद्ध (for वृद्धान्) — ᵇ) T1 -भावस्तत्र, T3 G4 M1–8 भावनीयं, G1 भावादीना (for ग°) — ᶜ) D10 गोप्रद स, S °दानात् (for °दाता) — ᵈ) M पदे (for क्रमे)

18 ᵃ) B8 S गोदानशीलो (for गोद शीली) B1 Dn8 D10 T1 G M4 चार्घ्यदाता, D1–8 चाम्य°, D7 T8 चान्न°, T2 चास्य दाता, M1 8 चार्हदाता (for चार्घ°) — T1 om 18ᵇᶜ — ᵇ) D1 न स्यात्तदा, D2 8 न स्रोतदो (sic), D10 ताभ्योऽसदो, S (T1 om) तस्याददे (for न स्याद् खी) Dn2 वस्त्र, D10 बहु- (for वसु) V1 B2–5 Dn D5 काम, D6–9 गोमी (for कामी) D4 6–9 तथान्नदो वसुदाता च (D4 °नश्च) गोमी — D9 om 18ᶜ–19ᵈ — ᶜ) B5 om, D1–8 हलस्योढा, T2 ऊढस्यूढा, T8 M ऊढस्योढा (for ऊधस्योढा) B5 G2 भारते (for त) V1 B1–4 Dn D5 उधस्योढा भारते यश्च विद्वान्, D4 6–8 ऊधस्यार्थ्य सेवते यश्च विद्या (D4 °त्तं) — ᵈ) B1 Dn1 व्या( Dn1 वि )ख्यातास्तैर्; B2 5 Dn2 n8 D2–8 वि( B2 Dn8 वा )ख्यातास्ते, B8 व्याख्यातस्य, T1 तस्य प्रोक्ता, T2 8 G M समाख्यातास्ते (for व्याख्यातास्ते) B8 Dn2 चेंद्रलोका, D8 शक्र°, D4 6–8 चात्र लोके, D5 चाद्रलोका, T8 चंद्रलोकान्, M1 चैव लोका (for चन्द्रलोका)

19 D9 om 19 (cf v l 18) — ᵃ) V1 B Dn2 n3 D1 2 10 गा वै, D3–8 T2 8 G M4 गावो (for गा वै) — ᵇ) D8 T2 M1 2 एका, D6 वैका (for चैकां) B8 सवसेदिहीह, B5 Dn2 संवसते ह, Dn1 D2 G4 °सेत ह, D4–8 °सेच्चैव (for °सेतेह) — T1 om 19ᵈ — ᶜ) D4 6 8 कामाष्टम्या, M1–8 काम्ये° (for काम्या°); — ᵈ) B1 corrupt, B8 D1–8 गवा रसै (B8 °सैर्वा); D10 गोरसैर्वा, M1–8 रसैर्गवा (for रसैर्वा गो) B5 D5 10 T2 8 M1 2 4 प्रस्त्रवैर्, D4 8 प्रश्रवैर्, G4 प्रसृतैर्, some MSS प्रभवैर् (for प्रस्न°) G1 8 गवा रसैर्गोश कृष्णस्रवैर्वा, G2 corrupt

20 ᵃ) B Dn D1 2 10 M1 देवव्रती, D9 corrupt (for वेदव्रती) D1 M1–3 ऋषभ (for वृ°) V1 B Dn D1–4 10 M2 -प्रदाने (for °ता) — ᵈ) B5 अप्रान् D4–9 वै विधिज्ञ; D10 T2 8 G M गोवि, T1 [s,सौ वि° (for नावि°)

21 ᵃ) B2 5 Dn8 D1 काम (for कामान्) D10 om पार्थिवान् D10 नाक (for एक). B8 कामं सर्वान्पार्थिवो लोकसस्थान् — ᵇ) B1 8 D10 दुहा, D5 M4 दुग्धा (for -दुघा) T G M4 भूमिं (for धेनुम्) — T1 om 21ᶜᵈ — ᶜ) B1 सम्यक्पृक्ता स्युर्, D2 सम्यक्तासु, T2 G2 °ग्यास्ता स्युर्, T8 corrupt, M सम्यग्या स्युर् (for क्ता स्युर्) S (T1 om) -कव्यं वहंस्यस (for -कव्यौघवत्यस्) — ᵈ) D4 उग्र, D6 om, D7 9 damaged (for उक्ष्णां) D4 6–9 ज्यायस (for °सां) B8 तासामुक्तमक्षय गोप्रदान, S (T1 om) ता उत्सृज्याद (T8 °ज्याप्य )क्षय स

22 ᵃ) B2 5 T2 G वा, D4 6–8 om (for च)

न चाशिष्यायाव्रतायोपकुर्या-
न्नाश्रद्दधानाय न वक्रबुद्धये ।
गुह्यो ह्ययं सर्वलोकस्य धर्मो
नेमं धर्मं यत्र तत्र प्रजल्पेत् ॥ २२
सन्ति लोके श्रद्दधाना मनुष्याः
सन्ति क्षुद्रा राक्षसा मानुषेषु ।
येषां दानं दीयमानं ह्यनिष्टं
नास्तिक्यं चाप्याश्रयन्ते ह्यपुण्याः ॥ २३
बार्हस्पत्यं वाक्यमेतन्निशम्य
ये राजानो गोप्रदानानि कृत्वा ।
लोकान्प्राप्ताः पुण्यशीलाः सुवृत्ता-
स्तान्मे राजन्कीर्त्यमानान्निबोध ॥ २४
उशीनरो विष्वगश्वो नृगश्च
भगीरथो विश्रुतो यौवनाश्वः ।
मान्धाता वै मुचुकुन्दश्च राजा
भूरिद्युम्नो नैषधः सोमकश्च ॥ २५
पुरूरवा भरतश्चक्रवर्ती
यस्यान्वये भारताः सर्व एव ।
तथा वीरो दाशरथिश्च रामो
ये चाप्यन्ये विश्रुताः कीर्तिमन्तः ॥ २६
तथा राजा पृथुकर्मा दिलीपो
दिवं प्राप्तो गोप्रदाने विधिज्ञः ।
यज्ञैर्दानैस्तपसा राजधर्मै-
र्मान्धाताभूद्गोप्रदानैश्च युक्तः ॥ २७
तस्मात्पार्थ त्वमपीमां मयोक्तां
बार्हस्पतीं भारतीं धारयस्व ।

$D_{4}$ $_{6-9}$ नाव्रताय ( for अ° ) —[b]) $B_{3}$ च क्रुद्धाय, $Dn_{3}$ च कुबुद्धये, $T_{1}$ $G_{1}$ $_{3}$ $M_{4}$ वक्रबुद्धे ( for बुद्धये ) —[c]) $T_{1}$ [ऽ]यं वै ( for ह्यय ) —[d]) $D_{1-3}$ नेमान्धर्मान्, $D_{5}$ $_{6}$ $_{8}$ $_{9}$ नैन धर्मं; $T_{2}$ $_{3}$ $G_{1-3}$ M न मांधातर्, $G_{4}$ om ( for नेम धर्मं ) $G_{1}$ तत्र ( for यत्र ) $D_{10}$ om तत्र $D_{4-9}$ [उ]प ( for प्र ) $T_{1}$ न मांधातर्हीयते यत्र तत्र

23 $T_{1}$ om 23 —[a]) $D_{4-9}$ सतीह ( for सन्ति ) $B_{1}$ लोके च ( for लोके ) —[b]) $V_{1}$ om, $Dn_{3}$ $D_{2}$ $_{9}$ राक्षस, $D_{4}$ राजस ( for राक्षसा ) —[c]) $B_{1}$ $Dn_{1}$ $n_{2}$ ए( $Dn_{2}$ ये )षामेतद् ( for येषा दान ) $B_{6}$ ह्यनित्य; $T_{2}$ ह्यशिष्ट ( for ह्यनिष्ट ) —[d]) $D_{2}$ om अपि $D_{4}$ $_{6}$ $_{8}$ $_{9}$ चाप्याश्रयते, $D_{5}$ $_{7}$ वा ह्या, S ( $T_{1}$ om ) ये ( $M_{4}$ ते ) स ( for चाप्याश्र ) $V_{1}$ B Dn $D_{10}$ ये नास्तिक्य चा ( $Dn_{3}$ वा )श्रयतेऽल्पपु( $D_{10}$ ते ह्यपु )ण्या

24 [b]) $B_{2}$ राजानो ये ( by transp ), $D_{4-9}$ ते राजानो, $T_{1}$ मांधातासौ, $T_{2}$ $_{3}$ $G_{4}$ राजानो वै $V_{1}$ B Dn $D_{2}$ दत्वा ( for कृत्वा ) —[c]) $V_{1}$ सुप्रवृत्तास्, $B_{1}$ $Dn_{1}$ $n_{2}$ $D_{2}$ प्रवृत्तास्, $D_{4}$ corrupt ( for सुवृत्तास् ) $T_{1}$ लोकान्प्राप्ता पुण्यशीलान्सुवृत्तान् —[d]) $T_{1}$ अन्यान्, $T_{2}$ $_{3}$ $G_{1-3}$ स्थाने ( for तान्मे ) $T_{1}$ राज्ञ ( for राजन् ) $M_{1}$ $_{3}$ क्रियमाणान् ( for कीर्त्य )

25 [a]) $T_{1}$ पृषदश्वो ( for विष्वगश्वो ) —[b]) $G_{1-3}$ भगीरथो यौवनाश्वो विधिज्ञ —[c]) $D_{2}$ मुचकुंदश्च $D_{4-9}$ [ऽ]थ ( for च ) $B_{4}$ om राजा —[d]) $G_{4}$ द्युम्नद्युम्नो ( for भूरि° )

26 [a]) $D_{6}$ भारतश्च $D_{4-9}$ चापि राजन् ( for चक्रवर्ती ) —[b]) $V_{1}$ $B_{2-5}$ Dn $D_{6}$ $_{10}$ $G_{3}$ [अ]न्ववाये, T $G_{1}$ $_{2}$ $_{4}$ M [अ]न्वया ( for °ये ) $B_{5}$ $Dn_{1}$ $T_{3}$ $M_{1}$ भरता; $D_{8}$ भारत ( for °ता ) — $D_{8}$ om ( hapl ) 26[cd] —[d]) $D_{4}$ [अ]न्ये च ( for [अ]प्यन्ये ) $D_{1}$ $_{2}$ कीर्तिता ( for विश्रुता )

27 $T_{1}$ $G_{2}$ om 27[ab] —[a]) $D_{8}$ तथा स ( for तथा ) $D_{4-9}$ पृथुकीर्तिर् ( for °कर्मा ) $D_{10}$ पृथुश्च ( for दिलीपो ) —[b]) $V_{1}$ B Dn $D_{2}$ $_{3}$ $_{5}$ प्रदानैर् ( for °ने ) $D_{10}$ $G_{4}$ दिवं प्राप्ता गोप्रदानैर्वि( $G_{4}$ °ने वि )धिज्ञा —[c]) $G_{3}$ $M_{3}$ होमैस् ( for दानैस् ) $T_{1}$ चोत्तमेन ( for राजधर्मैर् ) $T_{2}$ $_{3}$ $G_{1}$ $_{2}$ $_{4}$ $M_{1}$ $_{3}$ यज्ञैर्होमैस्तपसा दानधर्मैर् —[d]) $G_{2}$ $_{4}$ M वै ( for [अ]भूद् ) $B_{3}$ $_{4}$ $G_{2}$ मुक्त ( for युक्त° ) $T_{1}$ युक्ता सर्वे गोप्रदाने महांत, $T_{2}$ $_{3}$ मांधाता वै गोप्रदाने च युक्त, $G_{1}$ $_{3}$ महाभागा गोप्रदानैश्च युक्ता

28 [a]) $B_{4}$ $T_{3}$ मयोक्त, $D_{4}$ यथोक्तां ( for मयोक्तां ) —[b]) S बार्हस्पत्यां ( for °तीं ) $T_{1}$ धारयश्च ( for °यस्व ) —[c]) Some MSS द्विजाग्र्येभ्य $T_{2}$ $_{3}$ G प्रयच्छस्व ( for संप्रयच्छ ) $D_{1}$ $_{2}$ $_{9}$ $M_{2}$ प्रपीतो ( for प्रतीतो ) $V_{1}$ B Dn $D_{2}$ $_{6}$ द्विजाग्र्येभ्य संप्रयच्छस्व प्रीतो —[d])

द्विजाग्र्येभ्यः संप्रयच्छ प्रतीतो
गाः पुण्या वै प्राप्य राज्यं कुरूणाम् ॥ २८

वैशंपायन उवाच ।

तथा सर्वं कृतवान्धर्मराजो
भीष्मेणोक्तो विधिवद्गोप्रदाने ।
स मान्धातुर्देवदेवोपदिष्टं
सम्यग्धर्मं धारयामास राजा ॥ २९

इति नृप सततं गवां प्रदाने
यवशकलान्सह गोमयैः पिबानः ।
क्षितितलशयनः शिखी यतात्मा
वृष इव राजवृषस्तदा बभूव ॥ ३०

स नृपतिरभवत्सदैव ताभ्यः
प्रयतमना ह्यभिसंस्तुवंश्च गा वै ।
नृपधुरि च न गामयुङ्क्त भूय-
स्तुरगवरैरगमच्च यत्र तत्र ॥ ३१

इति श्रीमहाभारते अनुशासनपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

D4–7 9 राजा ( for राज्यं )

29 a ) Dn2 तस्मात्, G2 om ( for तथा ) D1–3 सम्यक् ( for सर्वं ) G2 कृत्वा ( for कृतवान् ) — b ) D7 भीष्मोक्त ( for भीष्मेणोक्तो ) B2 4 D1–2 7 गोप्रदान ( for °ने ) B1 D4–6 8–10 भीष्मेणोक्तं त्रिधिवद्गो( D4 °स्स )प्रदान — c ) B6 om स B8 सर्वं धात्रा ( for स मान्धातुर् ) M -गुरूप ( for देवोप ) D10 T G स माधाता दे( D10 °तर्दे )वगुरूपदिष्टं — d ) T1 सर्वं, T2 3 G1–3 M4 सत्यं ( for सम्यग् )

30 a ) D1–3 स ( D2 स्म ) गो- ; D4–9 गो- ( for गवां ) T1 M इति नृपतिरवस्थित प्र( T1 °तो गोप्र )दाने, T2 इति स नृपतिवर सुस्थितो गोप्रदाने, T3 G इति नृपतिवर स्थितो गोप्र — b ) Dn3 सकणान् ( for -शकलान् ) D4–9 रसान्सह ( for सह ) S यवशकलै सह गोमय पिबान ( T1 विधाने ) — c ) D10 स वै, T1 सुखं ( for शिखी ) — d ) D10 तथा ( for तदा )

31 D1–3 T1 om 31 — a ) V1 B Dn नरपतिर् ( for स नृ° ) D10 गोभ्य ( for ताभ्य ) — b ) T2 3 G प्रवणमना ( for प्रयत° ) V1 B Dn D10 सु ( for हि ) D5–10 -संस्तवंश् ( for सस्तुवश् ) V1 B1 2 4 5 Dn ता स, B3 तास्तु स, D4–9 गाव ; D10 ता वै; T2 G1–3 भावै°, G4 गा वै ( for गा वै ) — c ) V1 B2 Dn3 D10 M4 नृपतिधुरि च ( Dn3 न ), T3 3 G न च धुरि नृप ( for नृपधुरि च न ) M2 भूपस् ( for भूयस् ) B1 3 5 नृपतिधुरि न गामयु( B3 मु )क्त भूयस्, B4 Dn1 n2 नृपतिधुरि च गामयु( B4 °मु )क्त भूपस्; D4 6 7 9 नृपधुरि च जगाम सयुक्तरूपस्, D5 °धुरि च जगाम युक्तरूपस्; D8 धुरि च जगाम रूपयुक्तस् — d ) D4–9 च जगाम, G4 भ्रमरच्च ( for अगमच्च ) B6 तत्र ( for यत्र )

Colophon — *Parvan name* B1–4 Dn3 D1 3 शाति — *Sub-parvan* V1 B D1 2 5–10 दानधर्मं — *Adhy name* V1 B Dn D10 गोप्रदानिकं, D1–3 बार्हस्पत्यगोप्रदानविधि, D4–9 गोप्रदानविधि, T2 धर्मशास्त्रनिर्णये दानप्रकरणे माधातृबृहस्पतिसंवादे गोमाहात्म्यं — *Adhy no* ( figures, words or both ) V1 76, D4 70, D10 80, T1 M 104, T2 3 G2 4 111, G1 3 105 — *Śloka no* D4 31.

# ७६

वैशंपायन उवाच ।
ततो युधिष्ठिरो राजा भूयः शांतनवं नृप ।
गोदाने विस्तरं धीमान्पप्रच्छ विनयान्वितः ॥ १
युधिष्ठिर उवाच ।
गोप्रदाने गुणान्सम्यक्पुनः प्रब्रूहि भारत ।
न हि तृप्याम्यहं वीर शृण्वानोऽमृतमीदृशम् ॥ २
इत्युक्तो धर्मराजेन तदा शांतनवो नृप ।
सम्यगाह गुणांस्तस्मै गोप्रदानस्य केवलान् ॥ ३
भीष्म उवाच ।
वत्सलां गुणसंपन्नां तरुणीं वस्त्रसंवृताम् ।
दत्त्वेदृशीं गां विप्राय सर्वपापैः प्रमुच्यते ॥ ४
असुर्या नाम ते लोका गां दत्त्वा तत्र गच्छति ।
पीतोदकां जग्धतृणां नष्टदुग्धां निरिन्द्रियाम् ॥ ५
जरोग्रामुपयुक्तार्थां जीर्णां कूपमिवाजलम् ।
दत्त्वा तमः प्रविशति द्विजं क्लेशेन योजयेत् ॥ ६
दुष्टा रुष्टा व्याधिता दुर्बला वा
न दातव्या याश्च मूल्यैरदत्तैः ।
क्लेशैर्विप्रं योऽफलैः संयुनक्ति
तस्यावीर्याश्चाफलाश्चैव लोकाः ॥ ७
बलान्विताः शीलवयोपपन्नाः

## 76

1 $B_6$ om 1–2 $G_2$ om the ref — b) $V_1$ $B_1$ ₃,₄ D $T_1$ $G_{1\,3}$ $M_{1\,2}$ नृप (for नृप) — c) $V_1$ $Dn_1$ $n_2$ $G_{1\,3\,4}$ गोदान $D_{1-9}$ गोप्रदाने वि( $D_5$ °नवि )र्थि धीमान् ( $D_1$ सम्यक् ) — d) $D_{1\,4\,7}$ पप्रच्छ विनयानत

2 $B_5$ om 2 (cf v 1 1) $T_1$ om 2 $T_{2\,3}$ G $M_4$ om the ref — a) $V_1$ $B_{2-4}$ Dn $D_{6\,10}$ $G_3$ गोप्रदान $T_2$ ₂ $G_{1-3}$ $M_{1\,3\,4}$ सर्वान् (for सम्यक्) — b) $V_1$ B ( $B_5$ om ) Dn $D_{3\,10}$ मे (for प्र) — c) $D_{4\,7}$ चोवाच, $D_{6\,8\,9}$ [इ]ति चोवाच (hypermetric) (for [अ]ह वीर) — d) $M_4$ शृण्वन् (for शृण्वानो) $D_{1-9}$ ऽसम (for ईदृशम्)

3 Before 3, $V_1$ B Dn $D_{1-3}$ ₆₋₈ ₁₀ ins वैशंपायन उवाच — a) $V_1$ $B_{1\,2\,4\,5}$ Dn धर्मराजाय (for जेन) — b) $D_8$ पुन (for तदा) $B_{1\,5}$ Dn $D_{1\,3\,6\,8\,10}$ $T_1$ नृप (for नृप) — c) $V_1$ तस्मिन् (for तस्मै) — d) $T_1$ $G_1$ केवल (for °लान्)

4 $G_4$ om the ref — a) $Dn_2$ वत्सलो — b) $D_2$ वसु (for वस्त्र) $V_1$ सवृता, $D_{6\,8}$ -सयुता (for -संवृताम्) $B_3$ $T_1$ तरगीं वत्सयुता — c) $T_1$ M तु (for गां)

5 a) $V_1$ B $Dn_2$ $D_{1\,2\,4\,6}$ असूर्या, T G $M_{1\,3\,4}$ अनंशा (for असुर्या) $D_{5\,7}$ ये, $D_9$ तो (for ते) $D_{5\,9}$ लोकान् (for लोका) — b) $Dn_2$ गा; $D_{1\,3}$ या, $D_2$ ता (for गां) $Dn_1$ $n_2$ ताश्च, $D_8$ S यत्र (for तत्र) — $5^{cd}$ = (var) Katha U $3^{ab}$ $T_1$ om $5^c$–$6^d$ — c) $D_{5\,7}$ लब्ध, $T_2$ G त्यक्त (for जग्ध) — d) $V_1$ B Dn $D_{10}$ नष्टक्षीरां, $D_4$ नष्टदुग्धा, $T_2$ $G_2$ $M_{1-3}$ दुष्टदुग्धां, $T_3$ $G_{1\,3\,4}$ जुष्टदुग्धां, $M_4$ दुग्धदुष्टां (for नष्टदुग्धां)

6 $T_1$ om 6 (cf v 1 5) $D_{5-7\,9}$ om $6^{ab}$ — a) $D_{1-3}$ जलोग्राम् (sic), S ( $T_1$ om ) ज्वरार्ताम् (for जरोग्राम्) $B_3$ -भुक्तानां, $D_2$ युक्तार्थं; $D_4$ भुक्तार्थं (for युक्तार्थां) $Dn_1$ $n_2$ जरारोगोपसपन्ना, $D_{10}$ सुरोगामुपभुक्तार्थां — b) $D_1$ $T_3$ $M_{1\,2\,4}$ जीर्णं (for जीर्णां) $V_1$ B Dn $D_{2\,3\,10}$ जीर्णां वापीमिवाजला, $D_4$ जीर्णकूपमिवाजला — c) S ( $T_1$ om ) तमो दत्त्वा (by transp) — d) $T_2$ कोपेन (for क्लेशेन) $B_{2\,4\,5}$ $D_{1\,7}$ $G_1$ $M_{1\,2}$ योजयन् (for °येत्) $D_4$ (also as in text) दुष्टा क्लेशेन योजयन्

7 a) $V_1$ B Dn $D_{10}$ रुष्टा दुष्टा (by transp), $T_1$ दुष्टारिष्टा; $G_2$ दुष्टा दुष्टा $M_{1\,3}$ च (for वा) $D_{1-9}$ $T_2$ दुष्टा क्लि( $T_2$ रु )ष्टां व्याधितां दुर्बलां च — b) $V_1$ B Dn $D_2$ नो, $D_8$ om (for न) $D_{1\,3}$ या च, $T_2$ $G_{2\,4}$ यास्तु, M या स्म (for याश्च) $D_{1-9}$ न वै दद्यात्तादृशीं ब्राह्मणाय, $T_1$ न दातव्या मा स मूल्यान्य दत्त्वा, $T_3$ न दातव्या यास्तु मूल्यैर्न दत्ता; $G_{1\,3}$ न दातव्या या तु मूल्यैर्विहीना — c) $D_2$ [ऽ]फल°, $T_1$ नर (for ऽफलै) — d) $D_{1\,3-9}$ [अ]पि (for [ए]व)

8 = 13 72 40 $T_1$ om 8 — a) $T_2$ बलासीता (for न्विता) $T_{2\,3}$ G $M_{1\,3}$ वीर्योप (for वयोप)

सर्वाः प्रशंसन्ति सुगन्धवत्यः ।
यथा हि गङ्गा सरितां वरिष्ठा
तथार्जुनीनां कपिला वरिष्ठा ॥ ८

युधिष्ठिर उवाच ।

कस्मात्समाने बहुलाप्रदाने
सद्भिः प्रशस्तं कपिलाप्रदानम् ।
विशेषमिच्छामि महानुभाव
श्रोतुं समर्थो हि भवान्प्रवक्तुम् ॥ ९

भीष्म उवाच ।

वृद्धानां ब्रुवतां तात श्रुतं मे यत्प्रभाषसे ।
वक्ष्यामि तदशेषेण रोहिण्यो निर्मिता यथा ॥ १०
प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा ।
असृजद्वृत्तिमेवाग्रे प्रजानां हितकाम्यया ॥ ११
यथा ह्यमृतमाश्रित्य वर्तयन्ति दिवौकसः ।
तथा वृत्तिं समाश्रित्य वर्तयन्ति प्रजा विभो ॥ १२
अचरेभ्यश्च भूतेभ्यश्चराः श्रेष्ठास्ततो नराः ।
ब्राह्मणाश्च ततः श्रेष्ठास्तेषु यज्ञाः प्रतिष्ठिताः ॥ १३
यज्ञैराप्यायते सोमः स च गोषु प्रतिष्ठितः ।
सर्वे देवाः प्रमोदन्ते पूर्ववृत्तास्ततः प्रजाः ॥ १४
एतान्येव तु भूतानि प्राक्रोशन्वृत्तिकाङ्क्षया ।
वृत्तिदं चान्वपद्यन्त तृषिताः पितृमातृवत् ॥ १५
इतीदं मनसा गत्वा प्रजासर्गार्थमात्मनः ।

— b) V1 B3-5 सर्वं, B1 Dn1 n3 G1 3 सर्वे (for सर्वा) D8-9 T2 3 G1 3 4 प्रशस्यंति (for प्रशसन्ति) — Before 8cd, D4-7 9 10 ins युधिष्ठिर उवाच

9 D4-9 om the ref — a) D4-6 तस्मात् (for क°) D10 प्रमगाद् (for समाने) S कस्मात्साम्ये बहु (M1 3 कपि)लाना प्रदानात् — c) V1 B Dn D4-10 G3 महाप्रभाव, D1 2 M4 °नुभावा — d) V1 B Dn D2 5 T1 [s]स्मि, D4 9 G1 3 [s]सि, D8 [s]स्ति (for हि) T1 भवत्प्रयुक्त (for भवान्प्रवक्तुम्).

10 a) B1 Dn3 वदतां (for ब्रुवतां) S श्रुत्वा (for तात) — b) D1 मे य, D2 श्रेय (for मे यत्) V1 B Dn D8 पुरातनं (for प्रभाषसे) S कपिलानामथोद्भव — c) T2 G4 चापि (for तद्) D4-9 तद्वक्ष्यामि विशेषेण — d) T2 तथा (for यथा)

11 a) M4 गोप (for प्रजा) Dn1 n3 चादिष्ट, T2 व्यादिष्ट (for °ष्ट) T1 गाश्चासृजत्पुरादिष्ट — b) D8 पूर्वे दक्ष, T1 दक्ष पूर्वं (by transp) — c) T2 3 G नासृजद् (for अ°) G1 3 यज्ञम् (for वृत्तिम्)

12 a) B3 तथा (for यथा) D8 आस्थाय (for आश्रित्य) — b) D5-7 वर्तयते — D1 reads 12cd twice — c) D4 यथा, T2 तदा (for तथा) T1 गाव (for वृत्तिं) B5 समासाद्य, D8 स्थाय, T2 3 G M उपाश्रित्य (for समा°) B3 तथा हि वृत्तमाश्रित्य — d) D1 (first time) दिवौकस, D1 (second time) 2 प्रजा प्रभो, D3 द्विजा विभो, D4 6-9 प्रजा इमा, D5 इमा प्रजा, S प्रजा सदा (for प्रजा विभो)

13 a) B3 अमरेभ्यश्च, D1 अजरे° (for अचरे°) D6-9 चरेभ्यश्च (for च भूतेभ्यश्च) — b) D4 तथा (for चरा) Dn1 n3 सदा, T2 तु ते (for ततो) — c) V1 B Dn3 D10 T3 G1-3 तथा (for तत) T3 ब्राह्मणेभ्यश्चरा श्रेष्ठा — d) T2 येषु (for तेषु)

14 B5 D3 om (hapl) 14ab — a) V1 B2-4 Dn D1, 4-9 T1 M2 4 अवाप्यते (for आप्यायते) D2 यज्ञेनावाप्यते सोम — c) V1 B1-4 Dn D2 5 10 ततो देवा, D4 6 7 9 सर्ववेदा, S वाम्यो देवा (for सर्वे देवा) B6 ततो देवा प्रतिष्ठंते — d) V1 B Dn पूर्वं वृत्तिस्, D4 5 पूर्वं वृत्तास्, D8 पूर्वंदत्तास् (for °वृत्तास्) D4-8 तथा, D8 यथा (for तत) D10 S प्रजानां वृत्तिरासु च — After 14, D10 S ins

371* तत प्रजासु सृष्टासु दक्षाद्यै क्षुधिता प्रजा
प्रजापतिमुपाधावन्विनिश्चित्य चतुर्मुखम् ।

[(L 2) T1 om the post half D10 T2 3 G3 4 विचिन्त्य च (for विनिश्चित्य) ]

15 T1 om 15a — a) D1 2 4-9 जातानि (for ए°) G4 च (for तु) V1 B Dn प्रजातान्येव भूतानि — b) D10 प्रक्रोशन्, T1 आ° (for प्रा°) — T1 om 15c-16b — c) D10 S (T1 om) मा(G3 अ)न्वपद्यंत

16 T1 om 16ab (of v l 15) — a) D1 S (T1 om) तं (for [इ]दं) — b) T2 M1 प्रजा (for प्रजा) — c) V1 B1 3-5 D10 तु बलवान्; B2 Dn तु भगवान्, D1-8 बलाधारम्, T1 बलादानम्, G1 3 4 बलाधारम् (for °धानम्) — d) G1 3 प्राप तत् (for प्रपिबत्) T1 तत; G3 तथा (for तदा)

प्रजापतिर्बलाधानममृतं प्रापिबत्तदा ॥ १६
स गतस्तस्य तृप्तिं तु गन्धं सुरभिमुद्गिरन् ।
ददर्शोद्गारसंवृत्तां सुरभिं मुखजां सुताम् ॥ १७
सासृजत्सौरभेयीस्तु सुरभिर्लोकमातरः ।
सुवर्णवर्णाः कपिलाः प्रजानां वृत्तिधेनवः ॥ १८
तासाममृतवर्णानां क्षरन्तीनां समन्ततः ।
बभूवामृतजः फेनः स्रवन्तीनामिवोर्मिजः ॥ १९
स वत्समुखविभ्रष्टो भवस्य भुवि तिष्ठतः ।
शिरस्यवाप तत्क्रुद्धः स तदोदैक्षत प्रभुः ।
ललाटप्रभवेनाक्ष्णा रोहिणीः प्रदहन्निव ॥ २०
तत्तेजस्तु ततो रौद्रं कपिला गा विशां पते ।
नानावर्णत्वमनयन्मेघानिव दिवाकरः ॥ २१
यास्तु तस्मादपक्रम्य सोममेवाभिसंश्रिताः ।
यथोत्पन्नाः स्ववर्णस्थास्ता नीता नान्यवर्णताम् ॥ २२
अथ क्रुद्धं महादेवं प्रजापतिरभाषत ।
अमृतेनावसिक्तस्त्वं नोच्छिष्टं विद्यते गवाम् ॥ २३
यथा ह्यमृतमादाय सोमो विष्यन्दते पुनः ।
तथा क्षीरं क्षरन्त्येता रोहिण्योऽमृतसंभवाः ॥ २४
न दुष्यत्यनिलो नाग्निर्न सुवर्णं न चोदधिः ।
नामृतेनामृतं पीतं वत्सपीता न वत्सला ॥ २५

---

17 ᵃ) D10 S शसतस् (for स गतस्) D8 वै तृप्तिं, D8 तृप्त्या तु (for तृप्तिं तु) — ᵇ) S गधात्सुर भिरुत्थिता — After 17ᵃᵇ, D10 S ins

372* मुखजा सासृजद्धातु सुरभिं लोकमातरम् ।
[ T2 ससृजे (for सासृजद्) T1 M1 3 सुरभिर् ]

— T1 om (hapl) 17ᶜ–18ᵇ — ᶜ) S (T1 om) दर्शनी यरसां वृत्तिं (G3 4 M4 त्ता) — ᵈ) V1 B1 2 6 Dn D2 8 8 10 सुरभीं, G8 M1–8 °भिर् (for °भिं) B5 D1 8 6 T2 सुखजा (for मु) B4 शुभां; D8 om, D4 तथा, D7 तु ता, D9 श्रुतां (for सुताम्) B8 सुरभीं सुमुखीं शुभा

18 T1 om 18ᵃᵇ (cf v l 17) — ᵃ) D5 7–9 सोऽसृजत् (for सा) D1 6–10 T2 8 G M1–8 सौरभेयीं D6 7 स, D8 च, D9 om (for तु) — ᵇ) D1–8 8 सुरभी, D1 6 7 9 10 G2 मीर् (for भिर्) B1 Dn1 n8 D10 मातृका, G4 -मातर (for मातर) V1 B1–8. 5 Dn2 सुरभी लोकमातृका — ᵈ) D3–10 T1 हेतव (D10 °वे) (for धेनव)

19 ᵃ) D1–8 -कल्पाना, S -वृत्तीनां (for वर्णाना) — ᶜ) T2 बभूवामृतज फेन — ᵈ) D1 इह (for इव) D1–4 6–10 T1 M4 [ऊ]र्मय (for [ऊ]र्मिज)

20 ᵇ) M1 विष्ठित (for तिष्ठत) B1 2 (marg as in text) भवमूर्धनि विष्ठित — ᶜ) D6–9 [अ]थापतत् (for [अ]वाप तत्) — ᵈ) V1 B5 Dn8 ततोनैक्षत, B4 5 D3 10 तदावै; Dn1 n2 G2 4 तदैक्षत च, D1–8 तदा वै कृत, T1 corrupt, T2 8 G3 4 तदैक्षत स; M1–8 ततोद्वीक्ष्य तत् (for °दैक्षत) G1 3 तदोदैक्षत स प्रभु — ᵉ) V1 B D10 प्रभवेण (for वेन) — ᶠ) V1 B Dn1 n2 D8 6 रोहिणीं, G2 M °ण्य (for °णी)

21 ᵇ) V1 B2–5 Dn D10 कपिलास्ता, B1 ला ता; D4 5 S °लां गा (for °ला गा)

22 ᵃ) D1 4–9 T2 अतिक्रम्य, D8 अभि, G8 उप° (for अप) — ᵇ) B3 4 D1 संस्थिता (for संश्रिता) — ᶜ) V1 B3 4 D1 8–10 T2 8 G2 4 सु (for स्व) B1 तथोत्पन्ना सुवर्णस्थास्, T1 तदोत्पन्ना सवर्णास्तास् — ᵈ) D10 T G श्वेता, M1–8 श्वासां, M4 श्वतो (for नीता) S -वर्णगा (T1 M4 °का) (for -वर्णताम्) D1–0 ता न नीता विवर्णता

23 ᶜ) D6 om (hapl) from वसिक्त up to नामृतेना (in 25ᶜ) B8 शिष्टस्त्व, T8 सिक्तस्य (for स्त्वं)

24 D6 om 24 (cf v l 23) T1 om 24ᵃᵇ — ᵇ) V1 B Dn विस्यंदते, D5 7 निष्पद्यते, D8 9 निष्यंदते (for विष्यन्दते) — ᶜ) T1 सदा (for तथा) D1–5 8 9 स्रवति (for क्षरन्ति) — ᵈ) V1 B Dn D1 7 समवं (for वा)

25 D6 om up to नामृतेना (in 25ᶜ) (cf v l 23) — ᵃ) T2 G8 4 दूष्यति B8 वह्निर्; D7 नापि (for नाग्निर्) — ᵇ) D10 S घृत दधि (for न चोदधि) — ᶜ) T1 om न — ᵈ) S न वत्सैर्दु (T8 M1–8 °र्दु) ष्यते पय

26 ᵃ) V1 B (except B3) D1 2 भविष्यति, D8 गमि; D1–9 मविष्यैस्यो (D6 °वो), T1 चरिष्यंति, T2 धारयिष्यति (hypermetric), T8 G M धरिष्यंति (for भरि) — ᵇ) D1–8 हविष B3–5 Dn1 D8 6 7 9 प्रस्रवेण, Dn2 n8 D2 8 T2 G1 प्रस्रवेन, D1 प्रस्र (for

रक्तोत्पलवनैश्चैव मणिदण्डैर्हिरण्मयैः ।
तरुणादित्यसंकाशैर्भान्ति तत्र जलाशयाः ॥ २०
महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः ।
नीलोत्पलविमिश्रैश्च सरोभिर्बहुपङ्कजैः ॥ २१
करवीरवनैः फुल्लैः सहस्रावर्तसंवृतैः ।
संतानकवनैः फुल्लैर्वृक्षैश्च समलंकृताः ॥ २२
निर्मलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः ।
उद्धूतपुलिनास्तत्र जातरूपैश्च निम्नगाः ॥ २३
सर्वरत्नमयैश्चित्रैरवगाढा नगोत्तमैः ।
जातरूपमयैश्चान्यैर्हुताशनसमप्रभैः ॥ २४
सौवर्णगिरयस्तत्र मणिरत्नशिलोच्चयाः ।
सर्वरत्नमयैर्भान्ति शृङ्गैश्चारुभिरुच्छ्रितैः ॥ २५
नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः ।
दिव्यगन्धरसैः पुष्पैः फलैश्च भरतर्षभ ॥ २६
रमन्ते पुण्यकर्माणस्तत्र नित्यं युधिष्ठिर ।
सर्वकामसमृद्धार्था निःशोका गतमन्यवः ॥ २७
विमानेषु विचित्रेषु रमणीयेषु भारत ।
मोदन्ते पुण्यकर्माणो विहरन्तो यशस्विनः ॥ २८
उपक्रीडन्ति तान्राजञ्शुभाश्चाप्सरसां गणाः ।
एताल्लोकानवाप्नोति गां दत्त्वा वै युधिष्ठिर ॥ २९
यासामधिपतिः पूषा मारुतो बलवान्बली ।
ऐश्वर्ये वरुणो राजा ता मां पान्तु युगंधराः ॥ ३०

-षडैर्; B8 4 -पट्टैर्, Dn D5 M4 खंडैर् (for दण्डैर्) — $^{d}$) D8 यत्र (for तत्र)

21 D4-7 9 repeat $21^{ab}$ after $25^{ab}$ — $^{a}$) D1, 8 -चित्रैश् (for -पत्रैश्) — $^{b}$) M1 स्रव, M2 -स्रज, M3 4 स्रज- (for प्रभ) Some MSS केशरै T G कांचनोपमकेसरै — $^{c}$) V1 तु (for च) — $^{d}$) D6 सरोजैर्, D8 रोमभिर् (sic), T2 3 G M1-3 सरासि (for सरोभिर्)

22 T1 om $22^{ab}$ — $^{a}$) D4-9 पुण्यै, D6 (also) पुष्पै (for फुल्लै) — B5 om (hapl) $22^{bc}$ — $^{b}$) G1-3 सहस्रावृत्त (for °वर्त) — D10 om $22^{cd}$ — $^{d}$) G1-3 पुष्पैश् (for वृक्षैश्) B8 समलंकृतै

23 $^{b}$) V1 B Dn D10 प्रभै (for -धनै) — After $23^{ab}$, D10 reads $25^{ab}$ repeating it in its proper place — $^{c}$) V1 B Dn D2 4 5 9 10 T1 G2 M4 उन्नूत (for उद्धूत) D1 पवनास् (for -पुलि°) B1 तद्वज् (for सत्र)

24 $^{b}$) V1 B Dn D10 द्रुमोत्तमै, D4-9 ऋतु° (for नगो°) — T1 om $24^{cd}$

25 D10 reads $25^{ab}$ for the first time after $23^{ab}$ — $^{a}$) V1 B Dn D2 10 (both times) M1 3 सौवर्णा, D1 3-9 सुवर्ण (for सौ°) — D3 om (hapl) $25^{b}$-$26^{a}$ — $^{b}$) D4 om मणिरत्न B5 शिलोच्चयान् — After $25^{ab}$, D4-7 9 repeat $21^{ab}$ D4-7 9 om $25^{cd}$ — $^{c}$) T1 नव, T2 3 G4 मणि (for सर्व)

26 D3 om $26^{a}$ (cf v 1 25) — $^{a}$) B8 दिव्य- (for नित्य) D4 5 7 9 -फलैस् (for फलास्) — $^{b}$) Dn2 D4 8 9 यत्र (for पत्र-) M4 -रथारुहा (for °कुला) B3 नगा यत्र समाकुला — T1 om $26^{cd}$ — $^{c}$) T2 3 G M1 3 नित्य- (for दिव्य) B3 मयै पुण्यै, D4-9 -वहै पुण्यै (for -रसै पुष्पै) — $^{d}$) D8 फलैश्च पुरुषर्षभ, D4-9 पुष्पै फलसमन्वितै; S (T1 om) फलैश्च मुनिसत्तम

27 $^{a}$) T2 3 G2 4 रज्यंते (for रमन्ते) — $^{b}$) D4-8 महामुने, D9 om, T1 सुखप्रदा, T2 3 G M सुखा (G2 सम)न्विता (for युधिष्ठिर) — $^{c}$) B1 समृद्धात्मा; T2 3 G4 °द्धाश्च (for °द्धार्था) — $^{d}$) B2 D1 3 विशोका, D6 8 9 निःशोक-, D7 °क (for निःशोका) T1 विशोका गतमत्सरा

28 $^{b}$) T2 3 G सत्तम (for भारत) — $^{c}$) T2 3 G2-4 मोदत — $^{d}$) D1 10 विहरते, S (except M4) °रति (for °रन्तो)

29 T1 om 29 — $^{a}$) T2 3 G2 4 M1 3 4 ब्रह्मन् (for राजन्) — $^{c}$) S (T1 om) इमाल्ँ (for एताल्ँ) — $^{d}$) D8 गा (for गा) D4-9 दत्त्वा गावो युधिष्ठिर, S (T1 om) गां (M गा) दत्त्वा मुनिसत्तम — After 29, D1-3 ins

382* अप्सरोभिश्च सहितो भाति वै गोप्रदो नर ।

30 $^{a}$) V1 B Dn D10 येषाम् (for यासाम्) — $^{b}$) T1 प्रभु; T2 3 G बले (for बली) D1 6-9 मारुतो बलवद्धकं — After $30^{ab}$, D4 6 7, 9 read $36^{a}$-$41^{b}$

सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः ।
प्राजापत्या इति ब्रह्मञ्जपेन्नित्यं यतव्रतः ॥ ३१
गास्तु शुश्रूषते यश्च समन्वेति च सर्वशः ।
तस्मै तुष्टाः प्रयच्छन्ति वरानपि सुदुर्लभान् ॥ ३२
न द्रुह्येन्मनसा चापि गोषु ता हि सुखप्रदाः ।
अर्चयेत सदा चैव नमस्कारैश्च पूजयेत् ।
दान्तः प्रीतमना नित्यं गवां व्युष्टिं तथाश्नुते ॥ ३३
येन देवाः पवित्रेण भुञ्जते लोकमुत्तमम् ।
यत्पवित्रं पवित्राणां तद्घृतं शिरसा वहेत् ॥ ३४
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतं प्राशेद्घृतं दद्याद्गवां व्युष्टिं तथाश्नुते ॥ ३५
त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं पिबेत्पयः ।
गवामुष्णं पयः पीत्वा त्र्यहमुष्णं घृतं पिबेत् ।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो भवेत्त्र्यहम् ॥ ३६
निर्हृतैश्च यवैर्गोभिर्मासं प्रसृतयावकः ।
ब्रह्महत्यासमं पापं सर्वमेतेन शुध्यति ॥ ३७

---

T1 om 30cd  D5 repeats 30c–32d after 42  — a) D8 नित्य (for राजा)  D4 6 9 ऐश्वर्ये च रणे नित्यं, D5 (second time) ऐश्वर्येण चरा नित्य (sic)  — d) V1 B Dn D2 5 (first time) नाममात्र, D3 G2 ता मा पांतु, D4 तां स्वीयां तु (sic), D5 (second time) गास्त्वा पांतु, D6–9 तास्त्वा पांतु (for ता मां पान्तु) T2 3 G1 3 4 M1–3 सुगंधरै (for °रा)  D10 ता मा यातु गवा वरा  — After 30, D8 reads 36–42

31 For the repetition in D5, of v 1 30 31ab = 79 12ab  — a) B3 निरूपा, Dn2 स°, T2 3 G म (for सु°)  V1 वर्णं (for बहु)  — b) G2 om (hapl) विश्वरूपाश्च  — T1 om 31cd  — c) V1 B1–3 Dn2 n3 D10 प्राजापत्यम्, B4 Dn1 D5 (both times) प्रजापत्यम्, M4 प्राजापत्य (for °पत्या)  B5 प्रजापत्य मपि ब्रह्मन्  — d) D3 damaged  D1 3 जपन्, D5 (both times) 6 7 9 यजेत् (for जपेत्)  D8 9 जित (for यत)

32 For the repetition in D5, cf v 1 30  — a) G2 गां (for गास्)  V1 B2–5 Dn D1 3 5 (both times) 10 T1 च (for तु)  B1 D10 यो वै, D1 3 यस्तु, D5 (second time) चैव (for यश्च)  D2 6–9 गास्तु (D7 श्च) शुश्रूषयेचस्तु, D4 G1 3 गास्तु शुश्रूषवेतश्च (D4 माणस्तु)  — b) B1 5 समर्चेति, B3 सम्यग्गिति (for समन्वेति)  Dn2 सर्वत (for °शः)  — c) B5 तुष्टास्तस्मै (by transp)  — d) D5 (both times) अति (for अपि)  T2 3 G च (for सु)

33 a) V1 B Dn D2 8 10 T G1 3 4 M4 द्रुह्येत (by transp)  B3 4 Dn D1 2 4–7 9 10 T G M4 वा (for च)  — b) B1 3 4 तेषा, D2 नित्य; T2 3 G2 4 ता सु, G1 3 ताभि (for ता हि)  B1 3 सुखप्रद (for प्रदा)  V1 B2 5 Dn D10 M1–3 गोषु नित्य (M1–3 चापि) सुखप्रद, D5 गोषु नित्य यतव्रत  — c) D4 अर्चयित्वा, D6 7 9 यीत, D8 °यान (for °येत)  D1 3 गा वै, D2 गावो, D4 6 वापि, D7–9 चापि (for चैव)  B1 अर्चयेत्सतत चैव  — T1 om 33ef  — e) D2 दाता (for दान्त)  — f) G3 गावस् (for गवां)  B1 T2 3 G तुष्टिं  B3 M1–3 पुष्टिं (for व्युष्टिं)  V1 **श्नुते, D5 समश्नुते (for तथा)  — After 33, V1 B Dn D5 read 36

34 G3 om (hapl) 34–35  — b) B3 भुंजते लोकसत्तम  — D8 reads 34cd after 35  — c) D1 तस्प विश्र, D10 पवित्र च (for यत्पवित्र)  — d) Dn2 यद्धृत, T2 3 G4 तद्धृह, G1 तद्रतं (for तद्धृत)  D5 पिबेत् (for वहेत्)  D4 6 7 9 यद्रूप मनसा जपेत्

35 G3 om 35 (cf v 1 34)  D4 6 7 9 om 35 Dn2 om 35ab  — c) D8 प्राश्य, T2 प्राश्येद् (for प्राशेद्)  — d) Dn1 n2 T1 M पुष्टिं, D10 T2 3 G1 3 4 तुष्टिं (for व्युष्टिं)  — After 35, D8 reads 34cd

36 D1–3 om 36ab  V1 B Dn D5 read 36 after 33  D4 6 7 9 read 36a–41b after 30ab, D8 reads 36–42 after 30  Dn2 om (hapl) 36bc  — b) D4–9 पय पिबेत् (by transp)  — D4–9 T1 om (hapl ?) 36cd  — c) B4 Dn2 D1–3 त्र्यहम् (for गवाम्)  — B1 (hapl) 36de  — e) Dn3 G2 घृतम् (for त्र्यहम्)  D2 शीत (for उष्णं)  Dn3 त्र्यह; G2 पिबेत् (for घृतं)  — f) B1 वायुभक्ष्यो (for °क्षो)  D4–9 त्र्यह भवेत् (by transp)

37 For the sequence in D4 6–9, cf v 1 36  D2 T1 om 37ab  — a) B3 D10 T2 3 G1 3 4 निर्हृतैश्च, D4–9 निर्ह°, G3 निर्ग°, M4 निर्घृ° (for निर्हृ°)  — b) B2–5 D4 मास, D8 मास; D10 T2 3 G M1–3 मासात् (G1 3 M1 3 न्) (for मास)  V1 B1 (marg) 5 Dn2

पराभवार्थं दैत्यानां देवैः शौचमिदं कृतम् ।
देवत्वमपि च प्राप्ताः संसिद्धाश्च महाबलाः ॥ ३८
गावः पवित्राः पुण्याश्च पावनं परमं महत् ।
ताश्च दत्त्वा द्विजातिभ्यो नरः स्वर्गमुपाश्नुते ॥ ३९
गवां मध्ये शुचिर्भूत्वा गोमतीं मनसा जपेत् ।
पूताभिरद्भिराचम्य शुचिर्भवति निर्मलः ॥ ४०
अग्निमध्ये गवां मध्ये ब्राह्मणानां च संसदि ।
विद्यावेदव्रतस्नाता ब्राह्मणाः पुण्यकर्मिणः ॥ ४१
अध्यापयेरञ्शिष्यान्वै गोमतीं यज्ञसंमिताम् ।
त्रिरात्रोपोषितः श्रुत्वा गोमतीं लभते वरम् ॥ ४२
पुत्रकामश्च लभते पुत्रं धनमथापि च ।
पतिकामा च भर्तारं सर्वकामांश्च मानवः ।
गावस्तुष्टाः प्रयच्छन्ति सेविता वै न संशयः ॥ ४३
एवमेता महाभागा यज्ञियाः सर्वकामदाः ।
रोहिण्य इति जानीहि नैताभ्यो विद्यते परम् ॥ ४४
इत्युक्तः स महातेजाः शुकः पित्रा महात्मना ।
पूजयामास गा नित्यं तस्मात्त्वमपि पूजय ॥ ४५

इति श्रीमहाभारते अनुशासनपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

---

प्राश्रित-; B2 4 Dn1 n2 D2 प्रश्रित , D1 3 5 प्रसृति- (for प्रसूत ) D5-9 -यावकं (for °क ) M4 मासा त्प्रभृतयावक — d ) B2 4 Dn T3 शुध्यते (for °ति ) B1 सर्वमेव व्यपोहति

38 For the sequence in D4 6-9, cf v 1 36 B2 partly damaged — a) V1 B2 5 Dn D5 10 M4 पराभवाच्च (D5 °र्थे ) — b ) B6 शुभ, T1 हृत (for कृतम् ) — T1 om 38cd — c ) D1-9 सं (for च ) Dn1 n2 D10 ते देवत्वमपि प्राप्ता — d ) D1-8 महा फला ( for °बला )

39 For the sequence in D4 6-9, cf v 1 36 — a ) D2 T2 3 G4 पुण्या पवित्राश्च ( by transp ), D1-9 पुण्य पवित्र, T1 G1-3 M पुत्र (T1 परं, G1 3 पूना ) पवित्राश्च — b ) G1 पावक (for नं ) — c ) गाश्च , D10 T2 3 G अपि (for ताश्च ) D7 दत्ता (for दत्त्वा ) D8 पवित्रेभ्यो (for द्विजातिभ्यो ) — d ) V1 D1-7 9 धवाप्नुते (D4 °यात् ) ( for उपाश्नुते )

40 For the sequence in D4 6-9, cf v 1 36 — b ) B5 D1 2 4 6 7 9 गोमतिं (for गोमतीं ) D1-8 सतत (for मनसा ) — c ) B3 पूजाभिर् ( for पूता ) D5 7 9 चाचम्य (for आ° )

41 For the sequence in D4 6-9, cf. v 1 36 D4 6 7 9 om 41c-42a — c ) M1-3 वेदविद्या- (for विद्यावेद ) D10 T G M1 3 स्नातान् — d ) D10 S ( except M3 ) ब्राह्मणान् B4 5 Dn1 D1 T1 2 G1-3 कर्मण

42 For the sequence in D3, cf v 1 36 D4 6 7 9 om 42 (cf v 1 41) — a ) D10 अध्यापयेत , T2 °यति, T3 G1 3 4 °येत, G2 °येच्च (for °येरन् ) · B3 शिष्यार्थे, D5 वै शिष्यान् ( by transp ) D8 अध्या प्याप्यपरे शिष्यान् — b ) D1 2 गोमतिं — c ) V1 B Dn D5 8 भूत्वा (for श्रुत्वा ) T1 त्रिरात्रोपोषणं कृत्वा — d ) B1 धनं, D8 फलं, D5 10 T2 3 G2 4 परा, M1-3 पर ( for वरम् ) D1 2 गोमतिं लभते फलं, T1 यथेष्टं लभते परान् — After 42, D5 repeats 30c-32d

43 B2 partly damaged — a ) Dn3 तु (for च ) D5 सततं ( for लभते ) D1-8 पुत्रकामो लभेत्पुत्रान् — b ) B1 D1-8 M1-3 पुत्रान् (for पुत्रं ) V1 B3-5 Dn D6 8 9 वा ( for च ) D1-8 धनकामो धनानि च — d ) D2 T1 G1 3 मानवा — e ) D8 पुष्टिं (for तुष्टा ) — f ) D1-8 सेवेत्ता ( for सेविता ) T1 च (for वै )

44 a ) B3 4 एभिर्, D10 T3 G4 उक्ते (for एता ) T3 G2 महाभाग (for °गा ) — b ) B1 D1 2 4 यज्ञिका, D5 T2 3 M4 याज्ञिया , D6-9 याज्ञिका , G M1-3 याज्ञीया ( for यज्ञिया ) — c ) T1 जानीथ (for °हि )

45 Before 45, V1 (marg ) B2 ins भीष्म V1 reads 45 and the colophon on marg — a ) D6 7 9 G1 3 सु (for स ) — b ) B3 4 महर्षिणा (for महा त्मना ) — c ) B Dn1 n2 D2 4 8 गां, D10 T1 2 G3 4 M ता, G2 ता ( for गा ) — d ) V1 B3 4 5 Dn3 पूजये ( for य )

Colophon — *Parvan name* B1 2 4 Dn1 D1 2

८१

युधिष्ठिर उवाच ।

मया गवां पुरीषं वै श्रिया जुष्टमिति श्रुतम् ।
एतदिच्छाम्यहं श्रोतुं संशयोऽत्र हि मे महान् ॥ १

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गोभिर्नृपेह संवादं श्रिया भरतसत्तम ॥ २
श्रीः कृत्वेह वपुः कान्तं गोमध्यं प्रविवेश ह ।
गावोऽथ विस्मितास्तस्या दृष्ट्वा रूपस्य संपदम् ॥ ३

गाव ऊचुः ।

कासि देवि कुतो वा त्वं रूपेणाप्रतिमा भुवि ।
विस्मिताः स्म महाभागे तव रूपस्य संपदा ॥ ४
इच्छामस्त्वां वयं ज्ञातुं का त्वं क्व च गमिष्यसि ।
तत्त्वेन च सुवर्णाभे सर्वमेतद्ब्रवीहि नः ॥ ५

श्रीरुवाच ।

लोककान्तास्मि भद्रं वः श्रीर्नाम्नेह परिश्रुता ।
मया दैत्याः परित्यक्ता विनष्टाः शाश्वतीः समाः ॥ ६
इन्द्रो विवस्वान्सोमश्च विष्णुरापोऽग्निरेव च ।
मयाभिपन्ना ऋध्यन्ते ऋषयो देवतास्तथा ॥ ७
यांश्च द्विषाम्यहं गावस्ते विनश्यन्ति सर्वशः ।
धर्मार्थकामहीनाश्च ते भवन्त्यसुखान्विताः ॥ ८

---

शांति — *Sub-parvan* B1-4 Dn D1 2 5-7 9 10 M4 दानधर्म — *Adhy name* V1 B1 2 5 Dn गोप्रदानिक, B4 M गोप्रदाने ( B4 °दानिके ) व्यासशुकसंवाद , D1-8 गोमाहात्म्यं, D4 शुकदेववेदव्याससंवाद , D5-9 शुकव्याससंवाद , T2 श्रीव्यासशुकसंवादे गोमाहात्म्य — *Adhy no* ( figures, words or both ) D5 75, T1 M 109, T2 3 G2 4 116, G1 3 110 — *Śloka no* Dn2 47, D4 46 — After 13 80, D10 S ins passages given in App I ( Nos 9, 9A and 9B )

81

1 V1 reads 1 on marg — [a]) D1-8 गवा मूत्र (for मया गवा) D5 च, D10 T G हि (for वै) — [b]) D4 6-9 श्रीजुष्टमिति वै श्रुतं — [c]) D1 पुतम् (for एतद्) G1 3 कथितु (for [अ]हं श्रोतुं) — [d]) D5 ह्यत्र (by transp) B Dn पितामह, T1 महान्हि मे (for हि मे महान्) D1-3 संशयो हि (D3 मे) पितामह

2 [c]) B1 D4-7 9 तु सह, D8 तु नृप (for नृपेह) — [d]) T1 भारत (for भ )

3 [a]) D1 T1 [ए]व, D2 M3 [इ]व (for [इ]ह) — [b]) V1 B2-4 D1 4-9 गोमध्ये प्र, B5 Dn °ध्येषु (for ध्य प्र ) — [cd]) B3 partly damaged B1 तस्माद्, B4 तास (for तस्या) D8-9 दृष्ट्वा तस्या (by transp )

4 [a]) D1 8 [ऽ]सि (for वा) D4-7 9 [अ]सि (for त्वं) — [d]) D6-9 रूपस्य तव संपदा

5 [a]) V1 B Dn D2 3 इच्छाम M2 3 त्वा (for त्वां) — [c]) V1 B Dn वर, D4-9 G2 सुर ; T G1 3 4 M हि सु- (for च सु ) D10 सत्त्वेन हि सुवर्णाभे — [d]) B5 D6 G2 मे (for न )

6 G1-3 om the ref — [a]) D10 S (except G4) लोकस्य कांतिर्भद्रं व — [b]) V1 B4 Dn3 D8 नाम्नाह, B1-3 5 Dn1 n2 नामाहं, D10 S (except T1) नामेह (for नाम्नेह) — [c]) D1 मह्या (for मया) — After 6, V1 B (except B2) Dn D1 5 8 T2 ins

383* मयाभिपन्ना देवाश्च मोदन्ते शाश्वती समा ।

7 [b]) D4-9 निधिपोंबुप एव च — [c]) V1 B Dn सिध्यंते; D1 3 वर्धंते, D2 बाध्यते, D10 S दीप्यंते (for ऋध्यन्ते) — [d]) D1-2 मुनयो (for ऋषयो)

8 [a]) V1 B1-4 D10 नाविशामि, D4 च निंदामि, T1 M1-3 च हि( T1 द्वे )ष्यामि (for 'षामि) B5 यद्गो विशाम्यहं गावस् — [b]) D1 2 विरुध्यंति (for विनश्यन्ति) G4 सर्वदा (for श ) — T1 om 8[cd] — [c]) D4 6-9 सर्वार्थ (for धर्मार्थ ) V1 B Dn D5 धर्मश्चार्थश्च कामश्च, D1-3 ध( D1 क )र्मकामविहीनाश्च — [d]) D4 6-9 [अ]सुखावहा (for 'न्विता ) V1 B Dn D5 मया जुष्टा सुखान्विता ( D5 वहा )

एवंप्रभावां मां गावो विजानीत सुखप्रदाम् ।
इच्छामि चापि युष्मासु वस्तुं सर्वासु नित्यदा ।
आगता प्रार्थयानाहं श्रीजुष्टा भवतानघाः ॥ ९

गाव ऊचुः ।

अध्रुवां चञ्चलां च त्वां सामान्यां बहुभिः सह ।
न त्वामिच्छाम भद्रं ते गम्यतां यत्र रोचते ॥ १०
वपुष्मन्त्यो वयं सर्वाः किमस्माकं त्वयाद्य वै ।
यत्रेष्टं गम्यतां तत्र कृतकार्या वयं त्वया ॥ ११

श्रीरुवाच ।

किमेतद्वः क्षमं गावो यन्मां नेहाभ्यनन्दथ ।
न मां संप्रति गृह्णीथ कस्माद्वै दुर्लभां सतीम् ॥ १२
सत्यश्च लोकवादोऽयं लोके चरति सुव्रताः ।
स्वयं प्राप्ते परिभवो भवतीति विनिश्चयः ॥ १३
महदुग्रं तपः कृत्वा मां निषेवन्ति मानवाः ।
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ॥ १४
क्षममेतद्धि वो गावः प्रतिगृह्णीत मामिह ।
नावमन्या ह्यहं सौम्यास्त्रैलोक्ये सचराचरे ॥ १५

गाव ऊचुः ।

नावमन्यामहे देवि न त्वां परिभवामहे ।
अध्रुवा चलचित्तासि ततस्त्वां वर्जयामहे ॥ १६
बहुनात्र किमुक्तेन गम्यतां यत्र वाञ्छसि ।
वपुष्मत्यो वयं सर्वाः किमस्माकं त्वयानघे ॥ १७

श्रीरुवाच ।

अवज्ञाता भविष्यामि सर्वलोकेषु मानदाः ।

---

9 [a]) D4 6–9 एतत्प्रभावा, D5 एतद्भृता वा (for एवंप्रभावा) — [b]) V1 B (except B2) Dn D1 2 4–10 सुखप्रदा — [c]) B1 D10 S इच्छेय (for इच्छामि) D2 युष्माकं (for °सु) — [d]) D5 सर्वदा (for नित्यदा) — T1 om 9[ef] — [e]) V1 B2 5 Dn3 D3 आगत्य (for °ता) B1–3 Dn3 D1 3–5 7–9 M4 प्रार्थना(M4 °नी)याहं (for °यानाहं) Dn1 n2 आगत्य प्रार्थये युष्मान् — [f]) V1 B2 3 5 Dn [अ]थ वै (for [अ]नघा) B4 श्रीयुक्ता भवताथ वै

10 M1 om the ref. — [a]) D10 हि त्व; T1 G हि त्वा (G2 त्वां), M1–3 च त्वा (for च त्वां) V1 B Dn अध्रुवा चपला च त्व, D4–9 °वा चलचित्ता त्व, T2 °वां चपलां हि त्वा, T3 M4 °वा च चलां हि (M4 च) त्वा — [b]) V1 B Dn सामान्या, D4–7 9 न ग (D7 स)ता, D8 संगता, G1 3 M4 सामान्य (M4 °न्याद्), M1–3 समान्यां (for सा) — [c]) D4 5 T2 इच्छामि — [d]) V1 B2 5 Dn3 रस्यते, B1 3 Dn1 n2 D1 2 रस्यसे, D3 मस्यसे (for रोचते)

11 T1 om 11[a]–12[b] — [a]) D2 3 8 T2 3 M1 3 वपुष्मत्यो (for °ष्मन्त्यो) D4–9 शक्ता (for सर्वा) — [c]) B5 Dn D1–3 9 10 T2 यथेष्टं (for यत्रेष्टं)

12 T1 om 12[ab] (cf v l 11) G2 om the ref. — [a]) D1 2 उक्ता मा, D3 उक्तं मा (for व क्षमं) — [b]) M मा (for मां) V1 B1–3. 5 Dn D1–3 M1 [अ]भिनंदथ, D5–7 9 T3 G1. 3 [अ]भ्यनदत (D5 9 °थ) — [c]) D5 7 तन् (for न) D1–3 च मा, M मा स- (for मां सं) V1 B Dn गृह्णीध्व, D3 T1 2 M1–3 °त, G2 गृह्णाति, M4 गृह्णीथा — [d]) D4 6 7 मा (for वै) B3 सतां (for सतीम्)

13 [a]) B3 5 Dn1. n2 D4 10 T2 3 G सत्यं (for सत्यश्च) M1–3 लोके (for लोक) — [b]) D1 2 वदति (for चरति) D3 लोको निंदति सुव्रतं

14 [a]) M1 उग्र D4–9 महेंद्रप्रमुखा देवा — [b]) T2 निषेवेत; T3 निषीदंति (for निषेवन्ति) D3 मा निषेवति मानव, D4–9 ध्रुव मन्यति मानवा

15 [a]) D1 क्षमते तद् (for °मेतद्) D5 10 G2 यो (for वो) V1 B Dn प्रभाव एष मे गाव (B6 Dn1 n2 वो गाव, Dn3 गावश्च) — [b]) Dn3 परि (for प्रति) B1 D3 T2 मामिति, T1 3 माचिर (for मामिह) — [c]) V1 B Dn2 D1 5 M1–3 नावमान्या (for °मन्या) M1–3 [अ]स्मि (for हि) D3 सोम्यास्; M4 सौम्य

16 [b]) D1 3 T2 3 G3 M4 स्वा (for त्वा) — T1 om (hapl) 16[cd] — [c]) V1 (also as in text) S (T1 om) हि, D6–9 च (for [अ]सि) — [d]) D1 3 त्वा (for स्वा) Dn1 n2 वर्जयाम्यह

17 [a]) D1 6 7 च (for [अ]त्र) — [b]) D3 गंतव्यं (for गम्यतां) — B5 reads 17[cd] twice — [c]) B2 5 (first time) Dn1 D2 4–9 T1 M1 वपुष्मत्यो (for °ष्मत्यो)

प्रत्याख्यानेन युष्माभिः प्रसादः क्रियतामिति ॥ १८
महाभागा भवत्यो वै शरण्याः शरणागताम् ।
परित्रायन्तु मां नित्यं भजमानामनिन्दिताम् ।
माननां त्वहमिच्छामि भवत्यः सततं शुभाः ॥ १९
अप्येकाङ्गे तु वो वस्तुमिच्छामि च सुकुत्सिते ।
न वोऽस्ति कुत्सितं किंचिदङ्गेष्वालक्ष्यतेऽनघाः ॥ २०
पुण्याः पवित्राः सुभगा ममादेशं प्रयच्छत ।
वसेयं यत्र चाङ्गेऽहं तन्मे व्याख्यातुमर्हथ ॥ २१

भीष्म उवाच ।

एवमुक्तास्तु ता गावः शुभाः करुणवत्सलाः ।
संमन्त्र्य सहिताः सर्वाः श्रियमूचुर्नराधिप ॥ २२
अवश्यं मानना कार्या तवास्माभिर्यशस्विनि ।
शकृन्मूत्रे निवस नः पुण्यमेतद्धि नः शुभे ॥ २३

श्रीरुवाच ।

दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुग्रहात्मकः ।
एवं भवतु भद्रं वः पूजितास्मि सुखप्रदाः ॥ २४

भीष्म उवाच ।

एवं कृत्वा तु समयं श्रीर्गोभिः सह भारत ।
पश्यन्तीनां ततस्तासां तत्रैवान्तरधीयत ॥ २५
एतद्गोशकृतः पुत्र माहात्म्यं तेऽनुवर्णितम् ।
माहात्म्यं च गवां भूयः श्रूयतां गदतो मम ॥ २६

इति श्रीमहाभारते अनुशासनपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

18 $G_2$ om the ref. — $^{a}$) $T_2$ अविज्ञाता, $M_{1-3}$ नाव° (for अव°) — $B_6$ om (hapl) $18^{b}$–$19^{e}$ — $^{b}$) $V_1$ $B_{1-4}$ Dn $D_{4\ 10}$ -लोकस्य (for -लोकेषु) S मानवै (for °दा) — $^{c}$) $V_1$ B ($B_6$ om) Dn $D_4$ युष्माकं (for भि) S प्रत्याख्यातेति युष्माभि — $^{d}$) $V_1$ $B_{1-4}$ Dn $D_{4\ 10}$ मम (for इति)

19 $B_6$ om $19^{abcde}$ (cf. v l 18) — $^{a}$) $B_1$ $D_{6-8}$ $G_2$ भवत्यो, $M_{1-3}$ महत्यो (for भवत्यो) $T_{2\ 3}$ $G_{1\ 2\ 4}$ हि (for वै) — $^{b}$) $T_1$ $M_{1-3}$ शरण्या शरणगता — $^{c}$) $D_{1\ 2\ 4\ 5\ 7-9}$ परित्रायत (for °यन्तु) $M_4$ मा (for मां) $B_1$ परित्रायध्वमित्थं मां — $^{d}$) $B_{1.3}$ $D_{1\ 2\ 6\ 10}$ अनिंदिता — $^{e}$) $V_1$ $B_{1-4}$ Dn अहम् (for त्व°) $D_{4-9}$ मानं युष्मासु चेच्छामि, $D_{10}$ S मानयित्वाहमि — $^{f}$) $Dn_1$ n शिवा (for शुभा)

20 $T_1$ om $20^{ab}$ — $^{a}$) $B_3$ [ऽ]पि वो, $D_5$ त्वया, $D_8$ तु यद् (for तु वो) $V_1$ $B_{1\ 5}$ $Dn_3$ $D_4$ अप्येकांगेषु वो वस्तुम्; $Dn_1$ $n_2$ गेष्वधो वस्तुम्, $D_{10}$ S ($T_1$ om) सुप्रीतांगेषु ($M_{1-3}$ स्यांगे च) वो व — $^{b}$) $D_{10}$ $T_{2\ 3}$ G $M_{1-3}$ [इ]ह (for च) $D_{10}$ $T_{2\ 3}$ $G_4$ न (for सु) $D_{1-8}$ $M_4$ इच्छाम्यहमकुत्सिते ($M_4$ ता); $D_{4-9}$ इच्छेय ($D_4$ हं) सुजुगुप्सिते ($D_8$ स) — $^{c}$) $D_8$ हि, $G_{1\ 3\ 4}$ [ऽ]स्तु (for ऽस्ति)

21 $^{b}$) M अवादेश (for ममादेशं) $Dn_3$ $T_{2,3}$ $M_{1-3}$ प्रयच्छथ ($Dn_3$ तु) $T_1$ वस्तुमिच्छामि तत्त्वत, $G_{2\ 3}$ अवादेश प्रयच्छति — $T_1$ om $21^{cd}$ — $^{c}$) $D_{1\ 7}$ वसेह (for °य), $M_{1-3}$ तत्र (for यत्र) $V_1$ $B_{1\ 2\ 4\ 5}$ Dn $D_{10}$ $T_{2\ 3}$ G वो देहे, $B_3$ $M_4$ वो गेहे, $D_{1\ 2}$ वांगेह, $D_8$ वो गेह, $D_8$ चांगे वै (for चाङ्गेऽह) — $^{d}$) $B_1$ अर्हसि, $B_5$ $Dn_3$ $G_2$ °सि, $M_4$ °त (for °थ)

22 $V_1$ B Dn $D_{4-9}$ $T_1$ om the ref — $^{a}$) $B_1$ तथा, $D_{2\ 9}$ ततो (for तु ता) — $^{b}$) $B_1$ कारुण्य- (for करुण) — $^{c}$) $T_{2\ 3}$ $G_{1\ 2\ 4}$ M समान्य (for समन्त्र्य) $D_8$ संहता (for सहिता) $T_1$ मानयित्वा तत सर्वा

23 $^{a}$) $G_4$ अवश्यं माननं कार्यं — $^{c}$) $V_1$ B Dn $D_{3\ 10}$ निवस त्व, $D_{4\ 5}$ सत, $D_{6\ 9}$ सत, T $G_{1.3\ 4}$ M °सतां (for °स न) — $^{d}$) $M_4$ शुभं (for शुभे)

24 $Dn_2$ $G_3$ om the ref — $^{b}$) $G_2$ कृतो मेनुग्रहार्थक — $Dn_1$ repeats $24^{cd}$ after 25

25 $V_1$ B Dn $D_{9\ 10}$ om the ref — $^{c}$) $D_8$ $M_1$ पश्यतीनां, $G_2$ प्रख्यातीनां (for पश्यन्तीना) — After 25, $Dn_1$ repeats $24^{cd}$

26 $^{a}$) $V_1$ $B_{2\ 5}$ $D_{10}$ $T_1$ एव (for एतद्) $D_{3\ 4}$ गोशकृत्तां, $T_{2\ 3}$ $G_4$ ते शकृत (for गोश°) $B_1$ एव गोशकृन्मूत्रस्य, $B_{3\ 4}$ एवं गवां शकृन्मूत्र — $^{b}$) $D_{10}$ तव, $T_2$ अनु, $M_4$ ते च (for तेऽनु) $D_{4\ 6-9}$ -कीर्तित (for -वर्णितम्) — $^{d}$) $B_3$ वदतां (for गदतो)

# ८२

भीष्म उवाच ।
ये च गाः संप्रयच्छन्ति हुतशिष्टाशिनश्च ये ।
तेषां सत्राणि यज्ञाश्च नित्यमेव युधिष्ठिर ॥ १
ऋते दधिघृतेनेह न यज्ञः संप्रवर्तते ।
तेन यज्ञस्य यज्ञत्वमतोमूलं च लक्ष्यते ॥ २
दानानामपि सर्वेषां गवां दानं प्रशस्यते ।
गावः श्रेष्ठाः पवित्राश्च पावनं ह्येतदुत्तमम् ॥ ३
पुष्ट्यर्थमेताः सेवेत शान्त्यर्थमपि चैव ह ।
पयो दधि घृतं यासां सर्वपापप्रमोचनम् ॥ ४
गावस्तेजः परं प्रोक्तमिह लोके परत्र च ।
न गोभ्यः परमं किंचित्पवित्रं पुरुषर्षभ ॥ ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितामहस्य संवादमिन्द्रस्य च युधिष्ठिर ॥ ६
पराभूतेषु दैत्येषु शक्रे त्रिभुवनेश्वरे ।
प्रजाः समुदिताः सर्वाः सत्यधर्मपरायणाः ॥ ७
अथर्षयः सगन्धर्वाः किंनरोरगराक्षसाः ।
देवासुरसुपर्णाश्च प्रजानां पतयस्तथा ।
पर्युपासन्त कौरव्य कदाचिद्वै पितामहम् ॥ ८
नारदः पर्वतश्चैव विश्वावसुर्हहाहुहू ।
दिव्यतानेषु गायन्तः पर्युपासन्त तं प्रभुम् ॥ ९

---

Colophon — *Parvan name* B1. 2. 4 Dn3 D1 शांति — *Sub-parvan* V1 B Dn D1. 2. 5–10 M1. 2 दानधर्म — *Adhy name* V1 B1. 2. 4 Dn D8. 10 श्रीगोसंवाद, B3 श्रीसंवाद, B5 गोप्रदानिके गोश्रीसंवाद, D1–3. 5–7. 9 गोश्रीसंवाद, T2 गोषु श्रीस्थितिकथन — *Adhy no* (figures, words or both) V1 82, D10 88, T1 M 121, T2. 3 G2. 4 129, G1. 3 122 — *Śloka no* Dn2 28

## 82

1 D4 om 1–27 (with the ref.). G3 M1 om the ref. — [a]) V1 B Dn D10 G4 गा (for गाः). — [b]) T2. 3 G2. 4 हुतशिष्टाशनाश्च ये. — [c]) D3 om., D10 येषा (for तेषां). D6–9 सत्रं च (for सत्राणि). D1–3 तेषां सत्रश्च यज्ञश्च.

2 D4 om 2 (cf. v. l. 1). — [a]) M4 -कृतेन (for घृ°). D1 [इ]व (for [इ]ह). — [c]) D5 तेन यज्ञे हि सततम्. — [d]) D6–9 अतोमूलश्च (for °मूलं). V1 B Dn D10 कथ्यते (for लक्ष्यते).

3 D4 om 3 (cf. v. l. 1). — [a]) T3 देवानाम् (for दाना°). D1 इव, D1 (*sup. lin.*) 2. 3. 5–9 इह (for अपि). — [b]) D1–3. 5–9 विशिष्यते (for प्रशस्यते). — [d]) D3 च (for हि). S पावनं परमं तथा.

4 D4 om 4 (cf. v. l. 1). — [b]) D6–9 इह (for अपि). D2. 6. 8 T1 हि (for ह). — [c]) V1 B Dn1 n3 D2. 3. 5. 10 T1 चासां, Dn2 वासां, T2. 3 G तासां (for यासां). — [d]) Dn2 सर्वं (for सर्व°). D2 प्रनोदन, D6. 8. 9 विमोचनं, G2 -प्रणाशनं (for प्रमोचनम्).

5 D4 om 5 (cf. v. l. 1). T1 om 5[ab]. — [d]) V1 B2–5 Dn D1. 10 T G M1 भरतर्षभ (for पुरुष°).

6 D4 om 6 (cf. v. l. 1).

7 D4 om 7 (cf. v. l. 1). — [b]) V1 B Dn D8. 10 T2. 3 G शक्रस्त्रिभुवनेश्वर. — [c]) B3 समुचिताः, D6–9 प्रमुदिताः (for स°). — [d]) G1 सर्वे (for सत्य°). Dn1 -धर्मात् (for -धर्म°).

8 D4 om 8 (cf. v. l. 1). — [a]) D6–9 च (for स-). — T1 om 8[cd]. — [c]) D1–3. 5–9 देवासुरा (for सुर-). D1 T3 M3 -सुवर्णाश्च (for सुप°). — [e]) Dn3 कौंतेय (for कौरव्य). T2 ऋषय पर्युपासत.

9 D4 om 9 (cf. v. l. 1). — [a]) D2 [अ]पि (for [ए]व). — [b]) T3 G2 corrupt. B3 D6. 9 विश्वावसुर्. (for °वसु). D1 G1. 4 -हहाहुहू (G4 °हु) (for -हहाहुहू). V1 B1. 3–5 Dn2 D5 विश्वावसुर्हाहाहुहू (B1 Dn2 D2 °हू, B4 °हु), Dn1 n3 D1. 6. 10 सुर्हहाहुहू (Dn1 हु). — [c]) G1 partly damaged. B (marg. as in text). 4 तानेन, D6–9 तानानि, D10 T2. 3 G3–4 गानेन; M गानेषु (for तानेषु). D5 दिव्यता नानि गायति. T1 °गान प्रगायत. — [d]) D ते (for तं). D6–9 विभु (for प्रभुम्).

तत्र दिव्यानि पुष्पाणि प्रावहत्पवनस्तथा ।
आजह्रुरृतवश्चापि सुगन्धीनि पृथक्पृथक् ॥ १०
तस्मिन्देवसमावाये सर्वभूतसमागमे ।
दिव्यवादित्रसंघुष्टे दिव्यस्त्रीचारणावृते ।
इन्द्रः पप्रच्छ देवेशमभिवाद्य प्रणम्य च ॥ ११
देवानां भगवन्कस्माल्लोकेशानां पितामह ।
उपरिष्टाद्गवां लोक एतदिच्छामि वेदितुम् ॥ १२
किं तपो ब्रह्मचर्यं वा गोभिः कृतमिहेश्वर ।
देवानामुपरिष्टाद्यद्वसन्त्यरजसः सुखम् ॥ १३
ततः प्रोवाच तं ब्रह्मा शक्रं बलनिषूदनम् ।
अवज्ञातास्त्वया नित्यं गावो बलनिषूदन ॥ १४
तेन त्वमासां माहात्म्यं न वेत्थ शृणु तत्प्रभो ।
गवां प्रभावं परमं माहात्म्यं च सुरर्षभ ॥ १५
यज्ञाङ्गं कथिता गावो यज्ञ एव च वासव ।
एताभिश्चाप्यृते यज्ञो न प्रवर्तेत्कथंचन ॥ १६
धारयन्ति प्रजाश्चैव पयसा हविषा तथा ।
एतासां तनयाश्चापि कृषियोगमुपासते ॥ १७
जनयन्ति च धान्यानि बीजानि विविधानि च ।
ततो यज्ञाः प्रवर्तन्ते हव्यं कव्यं च सर्वशः ॥ १८
पयो दधि घृतं चैव पुण्याश्चैताः सुराधिप ।
वहन्ति विविधान्भारान्क्षुत्तृष्णापरिपीडिताः ॥ १९
मुनींश्च धारयन्तीह प्रजाश्चैवापि कर्मणा ।

10 D4 om 10 (cf v 1 1) D1 om 10[a]–11[d] T1 om 10, — [a]) D2 अत्र (for तत्र) D8 अत्र पुष्पाणि दिव्यानि — [b]) D6–8 प्रवहन्, D10 अवहत् (for प्रा ) B1 परमस्, Dn1 पवन (for नस्) B3–5 Dn1 n3 D7 8 10 (after corr) T2 सदा (for तथा) — [c]) B5 D6–9 आजग्मुर् (for ह्रुर्) D6 चैव; D6–9 सर्वे (for चापि) — [d]) Dn1 सगधीनि, D7 सुगधानि

11 D4 om 11 (cf. v 1. 1) D1 om 11[abcd] (cf v 1 10) — [a]) B1 अस्मिन् (for त°) B8 D8 एव (for देव ) Dn1 n3 तस्मिन्नेव समादा( Dn3 °धा )य, T1 समवाये तु तस्मिंस्तु — T1 om 11[cd] — [d]) D8 दिव्यस्त्रीचारणायुते, S (T1 om) °च( T2 M °चा )रणान्विते — [f]) D8 ह (for च)

12 D4 om 12 (cf v 1 1) Before 12, M1–8 ins शक्र

13 D4 om 13 (cf v 1 1) T1 om 13[cd] — [c]) D6 च (for यद्) B5 देवानां भगवन्कस्माद् — [d]) D8 [अ]विरज (for [अ]रजस ) D5–7 9 वसंत्योविरतं (D8 9 °न ) सुख

14 D4 om 14 (of v 1 1) Before 14, T2 8 G4 ins भीष्म· — [a]) T3 तत्र (for तत ) V1 B2–5 Dn D10 ब्रह्मा त (by transp ) — [b]) Some MSS निपूदनं (for निसू° ) — Before 14[c], G4 ins ब्रह्मा — [c]) M1 om from त्वया up to एताभिश्चा (in 16[c]) D5–9 सौम्य (for नित्य) — [d]) Some MSS निपूदन

15 D4 om 15 (cf v 1 1) M4 om 15 (cf v 1 14) — [b]) V1 B2–5 Dn D6–9 T1 G1 वेत्सि, D10 (before corr ) वेद (for वेत्थ) V1 B2 4 5 Dn T1 यत् (for तत् ) — [d]) D1–3 6–9 सुराधिप

16 D4 om 16 (cf v 1 1) M4 om up to एताभिश्चा (in 16[c]) (of v 1 14) — [a]) D6–9 T2 कथित (for °ता) — [c]) V1 B Dn D5 10 च विना, D3 च कृते, D6–9 ऽप्यधते, G2 चावृते (for चाप्यृते) — [d]) Dn वर्तेत (for प्रवर्तेत्) D8 कदाचन (for कथ°) B1 D10 न कथंचित्प्रवर्तते

17 D4 om 17 (cf v 1 1) — [a]) B1 2 (marg as in text ) D10 T G1 3 4 M चता , G2 सर्वा (for (for चैव) — [c]) V1 B1–4 Dn2 n3 D10 तनयैश् (for °याश्)

18 D4 om 18 (of v 1 1) — [b]) T2 3 G4 च धनानि (for विविधानि ) — [d]) B1 D8 10 हव्य (for हव्य ) D8 नित्यश (for सर्वश )

19 D4 om 19 (cf v 1 1) — [b]) D7–9 नराधिप (for सु° ) — T1 om 19[cd] — [c]) D7 9 भावान्, M1–8 भोगान् (for भारान्) T2 8 G हरति विविधान्भोगान्, M4 वहंति विविधान्भोगान् — [d]) B5 क्षुत्तृष्ण्या, Dn3 क्षुत्तृषा (for क्षुत्तृष्णा )

20 D4 om 20 (cf v 1 1) — [a]) Dn1 मनूंश् (for मुनींश्) D8 सारयतीह, D10 धारयते ह (for °तीह) — [b]) D6–9 [आ]त्म , S तु (for [अ]पि) — [c]) D1–3. 7 वासुरा( D7 सना )कूटवाहिन्य , T1 शक

वासवाकूटवाहिन्यः कर्मणा सुकृतेन च ।
उपरिष्टात्ततोऽस्माकं वसन्त्येताः सदैव हि ॥ २०
एतत्ते कारणं शक्र निवासकृतमद्य वै ।
गवां देवोपरिष्टाद्धि समाख्यातं शतक्रतो ॥ २१
एता हि वरदत्ताश्च वरदाश्चैव वासव ।
सौरभ्यः पुण्यकर्मिण्यः पावनाः शुभलक्षणाः ॥ २२
यदर्थं गा गताश्चैव सौरभ्यः सुरसत्तम ।
तच्च मे शृणु कार्त्स्न्येन वदतो बलसूदन ॥ २३
पुरा देवयुगे तात दैत्येन्द्रेषु महात्मसु ।
त्रींल्लोकाननुशासत्सु विष्णौ गर्भत्वमागते ॥ २४
अदित्यास्तप्यमानायास्तपो घोरं सुदुश्चरम् ।
पुत्रार्थममरश्रेष्ठ पादेनैकेन नित्यदा ॥ २५
तां तु दृष्ट्वा महादेवीं तप्यमानां महत्तपः ।
दक्षस्य दुहिता देवी सुरभिर्नाम नामतः ॥ २६
अतप्यत तपो घोरं हृष्टा धर्मपरायणा ।
कैलासशिखरे रम्ये देवगन्धर्वसेविते ॥ २७
व्यतिष्ठदेकपादेन परमं योगमास्थिता ।
दश वर्षसहस्राणि दश वर्षशतानि च ॥ २८
संतप्तास्तपसा तस्या देवाः सर्षिमहोरगाः ।
तत्र गत्वा मया सार्धं पर्युपासन्त तां शुभाम् ॥ २९
अथाहमब्रुवं तत्र देवीं तां तपसान्विताम् ।
किमर्थं तप्यसे देवि तपो घोरमनिन्दिते ॥ ३०

---

टाना च वाहिन्य — d) B1 यत्कृतेन (for सुकृ°) D5 8 9 वा (for च) — e) T1 उपरिष्टास् D1-8 क्षतो (for ततो) — f) D10 वसते ता (for वसन्त्येता) B2-4 D1 6 9 ह्, D7 तु (for हि)

21 D4 om 21 (cf v 1 1) T1 om. 21 — a) V1 B Dn1 n8 D2 एवं (for एतत्) D1 8 तव, D2 6-9 हि (for ते) D6 7 तत्र (for शक्र) — b) G1 partly damaged T8 G2-4 अत्र (for अद्य) — c) D5 T2 8 G M4 गावो (for गवा) D1 8 चैवोपरिष्टाद् (for दे°) B1 D10 S (T1 om) वै (for हि) — d) T2 8 G M4 समाख्याता

22 D4 om 22 (cf v 1 1) — a) D2 -दक्षाश्च (for दत्ताश्च) D8 हि (for च) T2 G2 एता हि (for वरदाश्चैव — b) V1 B Dn D1 2 6-10 [अ]पि (for [ए]व) T2 G2 वरदत्ताश्च (T2 °त्ता हि वासव, M4 दानैश्च वा° — D1 8 om 22c-24b — c) V1 B Dn D10 सुरभ्य, G1 damaged (for सौरभ्य) B4 om पुण्य D. कर्माणि, D10 -कर्मण्य, T2 G4 कर्मिभ्य, T3 G2 कर्मभ्य (for कर्मिण्य) — d) B5 पावनी M4 कृत (for शुभ)

23 D4 om 23 (cf v 1 1) D1 3 om 23 (cf v 1 22) — b) V1 B2 5 Dn D2 10 T2 3 G M4 सुर(Dn2 °रे)भ्य (for सौरभ्य) — c) T8 यच्च (for तच्च) — d) B1 गदतो (for व°)

24 D4 om 24 (cf v 1 1) D1 3 om 24ab (cf v 1 22) — b) B1 2 4 Dn देवेन्द्रेषु (for दैत्ये°) न्द्रेषु) — c) D6-9 -शास्ता हि (D7 तु); T2 -शासत्सु (for -शासत्सु)

25 D4 om 25 (cf v 1 1) — a) D8 तपमाना यास्. S (except G2) अदित्यां तप्यमानायां

26 D4 om 26 (cf v 1 1) — a) S ता दृष्ट्वा महतीं देवीं (G2 देवीं महतीं) — b) D1 2 6-10 महातप (for महत्तप) — c) T1 महिता (for दु°) — d) V1 B Dn D1 2 सुरभी, G1 damaged (for सुरभिर्)

27 D4 om 27 (cf v 1 1) — a) D6 om (hapl) from घोर up to तपो in (30d) — b) D8 श्रेष्ठा, T1 2 दृष्ट्वा (for हृष्टा) — T1 om 27cd

28 D6 om 28 (cf v 1 27) — a) B5 D1 8-5 7 G2 अ(D5 आ)तिष्ठद् (for व्यति°)

29 D6 om 29 (cf v 1 27) — a) B3 संतुष्टास् (for संतप्तास्) T1 देव्या (for तस्या) — b) B1 T G4 -पुरोगमा (for महोरगा) — T1 om 29cd — c) B4 अत्र (for तत्र) — d) D1 5 8 9 T2 2 G1-3 M प्रत्युपासंत (for पर्यु)

30 D6 om up to तपो (in 30d) (cf v 1 27) — a) T2 यथा (for अथ) M1 8 सम्नर्ग D. तात (for तत्र) — b) D1-3 7-9 तां देवीं (by transp), D. ता धेनु — c) Dn1 corrupt D1 7-9 तप्यते (for °से)

31 b) T1 चैव, T. 2 G1 तव (for [अ]नेन) G1 तपसा शोभसे तव — c) D1 3 प्रीतो (for दाता)

प्रीतस्तेऽहं महाभागे तपसानेन शोभने ।
वरयस्व वरं देवि दातास्मीति पुरंदर ॥ ३१

सुरभ्युवाच ।

वरेण भगवन्मह्यं कृतं लोकपितामह ।
एष एव वरो मेऽद्य यत्प्रीतोऽसि ममानघ ॥ ३२

ब्रह्मोवाच ।

तामेवं ब्रुवतीं देवीं सुरभीं त्रिदशेश्वर ।
प्रत्यब्रुवं यद्देवेन्द्र तन्निबोध शचीपते ॥ ३३
अलोभकाम्यया देवि तपसा च शुभेन ते ।
प्रसन्नोऽहं वरं तस्मादमरत्वं ददानि ते ॥ ३४
त्रयाणामपि लोकानामुपरिष्टान्निवत्स्यसि ।
मत्प्रसादाच्च विख्यातो गोलोकः स भविष्यति ॥ ३५
मानुषेषु च कुर्वाणाः प्रजाः कर्म सुतास्तव ।
निवत्स्यन्ति महाभागे सर्वा दुहितरश्च ते ॥ ३६
मनसा चिन्तिता भोगास्त्वया वै दिव्यमानुषाः ।
यच्च स्वर्गसुखं देवि तत्ते संपत्स्यते शुभे ॥ ३७
तस्या लोकाः सहस्राक्ष सर्वकामसमन्विताः ।
न तत्र क्रमते मृत्युर्न जरा न च पावकः ।
न दैन्यं नाशुभं किंचिद्विद्यते तत्र वासव ॥ ३८
तत्र दिव्यान्यरण्यानि दिव्यानि भवनानि च ।
विमानानि च युक्तानि कामगानि च वासव ॥ ३९
व्रतैश्च विविधैः पुण्यैस्तथा तीर्थानुसेवनात् ।
तपसा महता चैव सुकृतेन च कर्मणा ।
शक्यः समासादयितुं गोलोकः पुष्करेक्षण ॥ ४०

---

T₂ [इ]ह (for [इ]ति) G₃ वर तव (for पुरदर)

32 T₃ om the ref D₇ सुरभ्य ऊचु — ᵃ) B₃ damaged T₂ ₃ G₄ मेद्य (for मह्यं) — ᵇ) D₈ ₉ भूषयस्व, D₇ यदि चैष (for कृतं लोक) — ᶜ) D₅ मह्य (for मेऽद्य) — ᵈ) D₄₋₀ महामते; G₃ मयानघ (for ममा)

33 ᵇ) Dn₁ n₃ D₂ ₉ S सुरभिं D₄ त्रिदिवेश्वर (for त्रिदशे) — ᶜ) M प्रत्यब्रव (for °ब्रुवं) D₄ ब्रवं देव, D₅ ₇ च देवेश (for यद्देवेन्द्र) D₆ ₈ ₉ प्रत्यब्रवीच्च देवेश — ᵈ) D₅ अनेश्वर (for शचीपते)

34 T₁ om (hapl) 34ᵃᵇ — ᵃ) D₅ अलोभ्य (for अलोभ) T₂ ₃ G₃ कामा मां, G₁ ₂ M₂ ₃ -कामाया; G₄ कामा मा, M₁ ₄ -कामया (for काम्यया) — ᵇ) V₁ B Dn D₂ शुभा(B₄ वरा)मने; D₄ ₅ ₇ शुभेन च (D₄ व), D₆ ₈ ₉ शुभे तव, D₁₀ सुशोभने (for शुभेन ते) S (T₁ om) तपसा शुचिना च ते — ᶜ) T₁ देवि (for तस्माद्) — ᵈ) B₃ damaged, B₄ Dn₁ n₂ D₂ ₄₋₉ T G₃ ₄ ददामि (for °नि) B₅ च (for ते)

35 B₃ partly damaged — ᵇ) D₄₋₉ च वस्त्यसि (D₈ °सि) (for निवत्स्यसि) — ᵈ) B₁ Dn₁ D₁ ₈ T₁ स, B₃ ₄ प्र (for स)

36 ᵃ) B₁ D₈ ₉ ₁₀ T₂ ₃ G₄ मर्त्य(B₁ G₄ म)नुष्येषु, G₁ मलोकेषु (sic) (for मानुषेषु) B₄ om, D₁₋₄ प्र; D₆₋₉ तु (for च) — ᵇ) V₁ B₂ (marg as in text) ₃₋₆ Dn₃ D₄ T₁ शुभास्तव (T₁ °दा), B₁ शुभाशुभ, Dn₁ n₂ शुभ तथा (for सुतास्तव) — ᵈ) B₁ G₂ च ये, D₁ ₈ तथा, D₃ तव (for च ते)

37 ᵇ) T₂ ₃ G₃ ₄ दिव्याश्च (for वै दिव्य) D₁₋₃ ये दिव्या ये च मानुषा — ᶜ) D₁₀ यद्यत् (for यच्च) The portion from °सुखं to the end of the Parvan is lost in D₃ on missing folios V₁ B Dn₂ स्वर्गे, Dn₁ सर्वं (for स्वर्ग) — ᵈ) V₁ B₃ ₆ Dn₂ D₁₀ तत् (for ते) B₅ मया, T₁ [ऽ]नघे (for शुभे) B₁ ₃ ₄ तत्तत्स्यपद्यते शुभे

38 D₃ missing (cf v l 37) — ᵃ) D₆₋₉ तस्य (for तस्या) — ᵇ) M₄ -कर्म (for काम) — ᵈ) T₂ ₃ G₃ ₄ कालो (for जरा) D₁ ₂ पापक, D₄₋₉ पातक (for पावक) — ᵉ) V₁ B₁₋₄ Dn दैव, B₁ ₆ D₁₀ वैरं (for दैन्यं) B₂ वा, Dn₂ च (for न)

39 D₃ missing (cf v l 37) D₁ om (hapl) 39 — ᵃ) D₁₀ रत्नानि (for [अ]रण्यानि) — ᵇ) Dn₁ n₂ [आ]भरणानि (for भवनानि) — D₆ ₉ om 39ᶜᵈ — ᶜ) V₁ B Dn D₈ ₁₀ T₁ सु (for च) — V₁ B Dn D₂ ₄ ₅ ₇ ₁₀ ins. after 39 D₁ after 38

384* ब्रह्मचर्येण तपसा सत्येन च दमेन च ।

40 D₃ missing (cf v l 37) — ᵃ) V₁ B Dn D₁₀ दानैश्च (for व्रतैश्च) — ᵇ) B₁ D₁₀ सीर्थोप (for तीर्थानु) T₁ सथा तीर्थाभिषेवणै — ᶜ) G₁ damaged

वासवाकूटवाहिन्यः कर्मणा सुकृतेन च ।
उपरिष्टात्ततोऽस्माकं वसन्त्येताः सदैव हि ॥ २०
एतत्ते कारणं शक्र निवासकृतमद्य वै ।
गवां देवोपरिष्टाद्धि समाख्यातं शतक्रतो ॥ २१
एता हि वरदत्ताश्च वरदाश्चैव वासव ।
सौरभ्यः पुण्यकर्मिण्यः पावनाः शुभलक्षणाः ॥ २२
यदर्थं गा गताश्चैव सौरभ्यः सुरसत्तम ।
तच्च मे शृणु कार्त्स्न्येन वदतो बलसूदन ॥ २३
पुरा देवयुगे तात दैत्येन्द्रेषु महात्मसु ।
त्रील्ँलोकाननुशासत्सु विष्णौ गर्भत्वमागते ॥ २४
अदित्यास्तप्यमानायास्तपो घोरं सुदुश्चरम् ।
पुत्रार्थममरश्रेष्ठ पादेनैकेन नित्यदा ॥ २५
तां तु दृष्ट्वा महादेवीं तप्यमानां महत्तपः ।
दक्षस्य दुहिता देवी सुरभिर्नाम नामतः ॥ २६
अतप्यत तपो घोरं हृष्टा धर्मपरायणा ।
कैलासशिखरे रम्ये देवगन्धर्वसेविते ॥ २७
व्यतिष्ठदेकपादेन परमं योगमास्थिता ।
दश वर्षसहस्राणि दश वर्षशतानि च ॥ २८
संतप्तास्तपसा तस्या देवाः सर्षिमहोरगाः ।
तत्र गत्वा मया सार्धं पर्युपासन्त तां शुभाम् ॥ २९
अथाहमब्रुवं तत्र देवीं तां तपसान्विताम् ।
किमर्थं तप्यसे देवि तपो घोरमनिन्दिते ॥ ३०

---

टाना च वाहिन्य — [d]) B1 यत्कृतेन (for सुकृ°) D5 8 9 वा (for च) — [e]) T1 उपरिष्टात् D1-8 अतो (for ततो) — [f]) D10 वसते ता (for वसन्त्येता) B2-4 D1 6 9 ह, D7 तु (for हि)

21 D4 om 21 (cf v l 1) T1 om. 21 — [a]) V1 B Dn1 n8 D2 एव (for एतत्) D1 8 तत्, D2 6-9 हि (for ते) D5 7 तत्र (for शक्र) — [b]) G1 partly damaged T8 G2-4 अत्र (for अद्य) — [c]) D5 T2 8 G M4 गावो (for गवा) D1 8 चैवोपरिष्टाद् (for दे°) B4 D10 S (T1 om) वै (for हि) — [d]) T2 8 G M4 समाख्याता

22 D4 om 22 (cf v l 1) — [a]) D2 -दक्षाश् (for दत्ताश्) D8 हि (for च) T2 G2 एता हि वरदाश्चैव — [b]) V1 B Dn D1 2 5-10 [अ]पि (for [ए]व) T2 G2 वरदत्ताश्च (T2 °त्ता हि वासव, M4 °दानैश्च वा° — D1 8 om 22[c]-24[b] — [c]) V1 B Dn D10 सुरभ्य, G1 damaged (for सौरभ्य) B1 om पुण्य D2 कर्माणि, D10 कर्मण्य, T2 G4 कार्मिस्य, T3 G2 कर्मभ्य (for कर्मिण्य) — [d]) B6 पावनी M4 कृत (for शुभ)

23 D4 om 23 (of v l 1) D1 8 om 23 (cf v l 22) — [b]) V1 B2 5 Dn D2 10 T3 3 G M4 सुर(Dn2 रे)भ्य (for सौरभ्य) — [c]) T8 यच्च (for तच्च) — [d]) B1 गदतो (for व°)

24 D4 om 24 (cf v l 1) D1 8 om 24[ab] (cf v l 22) — [b]) B1 3 4 Dn देवेंद्रेषु (for दैत्ये)
न्द्रेषु) — [c]) D6-9 -शास्ता हि (D7 तु), T2 -शासत्सु (for शासत्सु)

25 D4 om 25 (of v l 1) — [a]) D8 तपमाना यास्. S (except G2) अदित्या तप्यमानायां

26 D4 om 26 (cf v l 1) — [a]) S ता दृष्ट्वा महतीं देवीं (G2 देवीं महतीं) — [b]) D1 2 6-10 महातप (for महत्तप) — [c]) T1 महिता (for दु°) — [d]) V1 B Dn D1 2 सुरभी, G1 damaged (for सुरभिर्)

27 D4 om 27 (of v l 1) — [a]) D8 om (hapl) from घोरं up to तपो in (30[d]) — [b]) D5 श्रेष्ठा, T1 2 दृष्ट्वा (for हृष्टा) — T1 om 27[cd]

28 D8 om 28 (cf v l 27) — [a]) B5 D1 6-8 7 G2 अ(D6 आ)तिष्ठद् (for व्यति°)

29 D8 om 29 (of v l 27) — [a]) B3 संतुष्टास् (for संतप्तास्) T1 देव्या (for तस्या) — [b]) B1 T G1 -पुरोगमा (for महोरगा) — T1 om 29[cd] — [c]) B1 अत्र (for तत्र) — [d]) D4 5 8 9 T2 2 G1-3 M प्रत्युपासत (for पर्यु)

30 D8 om up to तपो (in 30[d]) (cf v l 27) — [a]) T2 यथा (for अथ) M2 3 समय D2 तात (for तत्र) — [b]) D1-2 7-9 ता देवीं (by transp), D5 ता धेनु — [c]) Dn1 corrupt D1 7-9 तप्यते (for से)

31 [b]) T1 चैव, T 2 G1 तव (for [अ]नेन) G1 तपसा शोभने तव — [d]) D1 3 प्रीतो (for दाता)

प्रीतस्तेऽहं महाभागे तपसानेन शोभने ।
वरयस्व वरं देवि दातास्मीति पुरंदर ॥ ३१

सुरभ्युवाच ।

वरेण भगवन्मह्यं कृतं लोकपितामह ।
एष एव वरो मेऽद्य यत्प्रीतोऽसि ममानघ ॥ ३२

ब्रह्मोवाच ।

तामेवं ब्रुवतीं देवीं सुरभीं त्रिदशेश्वर ।
प्रत्यब्रुवं यद्देवेन्द्र तन्निबोध शचीपते ॥ ३३
अलोभकाम्यया देवि तपसा च शुभेन ते ।
प्रसन्नोऽहं वर तस्मादमरत्वं ददानि ते ॥ ३४
त्रयाणामपि लोकानामुपरिष्टान्निवत्स्यसि ।
मत्प्रसादाच्च विख्यातो गोलोकः स भविष्यति ॥ ३५
मानुषेषु च कुर्वाणाः प्रजाः कर्म सुतास्तव ।
निवत्स्यन्ति महाभागे सर्वा दुहितरश्च ते ॥ ३६
मनसा चिन्तिता भोगास्त्वया वै दिव्यमानुषाः ।
यच्च स्वर्गसुखं देवि तत्ते संपत्स्यते शुभे ॥ ३७
तस्या लोकाः सहस्राक्ष सर्वकामसमन्विताः ।
न तत्र क्रमते मृत्युर्न जरा न च पावकः ।
न दैन्यं नाशुभं किंचिद्विद्यते तत्र वासव ॥ ३८
तत्र दिव्यान्यरण्यानि दिव्यानि भवनानि च ।
विमानानि च युक्तानि कामगानि च वासव ॥ ३९
व्रतैश्च विविधैः पुण्यैस्तथा तीर्थानुसेवनात् ।
तपसा महता चैव सुकृतेन च कर्मणा ।
शक्यः समासादयितुं गोलोकः पुष्करेक्षण ॥ ४०

---

T2 [इ]ह (for [इ]ति) G2 वर तव (for पुरदर)

32 T3 om the ref D7 सुरभ्य ऊचु — a) B2 damaged T2 3 G4 मेद्य (for मह्यं) — b) D6 8 भूषयस्व, D7 यदि चैष (for कृतं लोक) — c) D5 मम (for मेऽद्य) — d) D4-8 महामते, G3 मयानघ (for ममा)

33 b) Dn1 n3 D2 9 S सुरभिं D4 त्रिदिवेश्वर (for त्रिदशे°) — c) M प्रत्यब्रव (for °ब्रुव) D4 यद्यं देव; D6 7 च देवेश (for यद्देवेन्द्र) D8 8 9 प्रत्यब्रवीच्च देवेश — d) D5 जनेश्वर (for शचीपते)

34 T1 om (hapl) 34ab — a) D5 अलोभ्य (for अलोभ) T2 3 G3 कामा मां, G1.3 M2 3 कामाया, G3 -कामा मा, M1 4 -कामया (for काम्यया) — b) V1 B Dn D2 शुभा(B4 वरा)नने, D4 5 7 शुभेन च (D4 स); D6 8 9 शुभे तव, D10 सुशोभने (for शुभेन ते) S (T1 om) तपसा शुचिना च ते — c) T1 देवि (for तस्माद्) — d) B3 damaged, B4 Dn1 n2 D2 4-9 T G2 4 ददामि (for °नि) B5 च (for ते)

35 B3 partly damaged — b) D4-9 च वत्स्यति (D8 °सि) (for निवत्स्यसि) — d) B1 Dn1 D1 8 T1 स, B3 4 प्र (for स)

36 a) B4 D8 9 10 T2 3 G4 मा(B4 G4 म)नुष्येषु; G1 अलोकेषु (sic) (for मानुषेषु) B4 om, D1-4 प्र, D8-9 तु (for च) — b) V1 B2 (marg as in text) 8-6 Dn3 D4 T1 शुभास्तत्र (T1 °दा), B1 शुभाशुभ, Dn1 n2 शुभ तथा (for सुतास्तव) — d) B1 G2 च ये, D1 8 तथा, D2 तव (for च ते)

37 b) T2 3 G2 4 दिव्याश्च (for वै दिव्य-) D1-3 ये दिव्या ये च मानुषा — c) D10 यद्यत् (for यच्च) The portion from °सुख to the end of the Parvan is lost in D3 on missing folios V1 B Dn3 स्वर्गे, Dn1 सर्वं (for स्वर्ग) — d) V1 B° 6 Dn2 D10 तत् (for ते) B5 मया, T1 [s]नघे (for शुभे) B1 3. 4 ततस्तत्पद्यते शुभे

38 D3 missing (cf v l 37) — a) D6-8 तस्य (for तस्या) — b) M4 -कर्म (for काम) — c) T2 3 G2 4 कालो (for जरा) D1 2 पापक, D4-9 पातक (for पावक) — e) V1 B2-4 Dn दैव, B1 5 D10 वैर (for दैन्य) B2 वा, Dn2 च (for न)

39 D3 missing (cf v l 37) D1 om (hapl) 39 — a) D10 रत्नानि (for [अ]रण्यानि) — b) Dn1 n3 [आ]भरणानि (for भवनानि) — D8 9 om 39cd — c) V1 B Dn D8 10 T1 सु (for च) — V1 B Dn D2 4 5 7 10 ins after 39 D1 after 38

384* ब्रह्मचर्येण तपसा सत्येन च दमेन च ।

40 D3 missing (cf v l 37) — a) V1 B Dn D10 दानैश्च (for व्रतैश्च) — b) B1 D10 तीर्थोप (for तीर्थानु) T1 तथा तीर्थाभिषेवणै — c) G1 damaged

एतत्ते सर्वमाख्यातं मया शक्रानुपृच्छते ।
न ते परिभवः कार्यो गवामरिनिषूदन ॥ ४१

भीष्म उवाच ।

एतच्छ्रुत्वा सहस्राक्षः पूजयामास नित्यदा ।
गाश्चक्रे बहुमानं च तासु नित्यं युधिष्ठिर ॥ ४२
एतत्ते सर्वमाख्यातं पावनं च महाद्युते ।
पवित्रं परमं चापि गवां माहात्म्यमुत्तमम् ।
कीर्तितं पुरुषव्याघ्र सर्वपापविनाशनम् ॥ ४३
य इदं कथयेन्नित्यं ब्राह्मणेभ्यः समाहितः ।
हव्यकव्येषु यज्ञेषु पितृकार्येषु चैव ह ।
सार्वकामिकमक्षय्यं पितॄंस्तस्योपतिष्ठति ॥ ४४
गोषु भक्तश्च लभते यद्यदिच्छति मानवः ।
स्त्रियोऽपि भक्ता या गोषु ताश्च कामानवाप्नुयुः ॥ ४५
पुत्रार्थी लभते पुत्रं कन्या पतिमवाप्नुयात् ।
धनार्थी लभते वित्तं धर्मार्थी धर्ममाप्नुयात् ॥ ४६
विद्यार्थी प्राप्नुयाद्विद्यां सुखार्थी प्राप्नुयात्सुखम् ।
न किंचिद्दुर्लभं चैव गवां भक्तस्य भारत ॥ ४७

इति श्रीमहाभारते अनुशासनपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

T1 [ग्र]पि (for [पू]व) —$^f$) M1 गोलोक (for °क)

41 D3 missing (cf v l 37) D5 om (hapl.) 41–42 —$^b$) S [ग्र]भि (for [ग्र]नु-) —$^d$) Some MSS -निपूदन V1 B Dn D10 T1 G1 8 गवामसुर सूदन

42 D3 missing (cf v l 37) D5 om 42 (cf v l 41) G2 om the ref. —$^a$) Dn2 एव (for एतच्) — T1 om 42$^{cd}$ —$^c$) M चक्रे स (M4 च) (for गाश्चक्रे) —$^d$) B1 तासा (for तासु)

43 D3 missing (cf v l 37) —$^a$) T G1 3 M पुण्यम् (for सर्वम्) T1 G1 3 M आख्यान (for °त) — T1 om 43$^{bc}$ —$^b$) D5 महीपते (for महाद्युते) —$^e$) D1 2 4–7 कीर्तन (for कीर्तितं) —$^f$) V1 B2 5 Dn विमोचन, D2 6 7 T1 प्रणाशन (for विना°)

44 D3 missing (cf v l 37) —$^c$) D1–7 8 देवेषु, G1 om (for यज्ञेषु) —$^d$) D6 कार्ये च (for कार्येषु) Dn1 D5 S हि (for ह) —$^e$) V1 D6 8 9 T3 G2 4 M8 सर्वं (for सार्व) —$^f$) V1 B2–5 Dn D2 10 तिष्ठते, S -गच्छति (for -तिष्ठति)

45 D3 missing (cf v l 37) —$^a$) D10 S भक्ति (for भक्तश्च) — T1 om 45$^{cd}$ —$^d$) D1–5 वै (for च) V1 B Dn D1 5 10 कामम् (for कामान्)

46 D3 missing (cf v l 37) —$^a$) D1 2 4 6 7 9 पुत्रार्थिनी लभेत्पुत्रं —$^b$) D6–7 वरम् (for पतिम्) V1 B2 (marg) 5 Dn D10 कन्यार्थी तामवा (D10 तां समा)मुयात्, T1 कन्यार्थी कन्यका लभेत — S (except T1) om (hapl) 46$^{cd}$ —$^c$) T1 धनकामी लभेद्द्रव्य — T1 om 46$^d$–47$^a$ —$^d$) D1 2 यशोर्थी लभते यश, D1–9 स्वर्गार्थी स्वर्गमाप्नुयात्

47 D3 missing (cf v l 37) T1 om 47$^a$ (cf v l 46) —$^a$) V1 B1 5 Dn D6 10 चाप्नुयाद्, B3 4 D1 2 5 7 लभते (for प्राप्नुयाद्) —$^b$) B1 चाप्नुयात्, D1 2 कामार्थी काममश्नुते, D6 7 सुखार्थी सुखमाप्नुयात् —$^c$) B1 D10 वस्तु, D1 2 लोके (for चैव) —$^d$) G8 भक्तिमान् (for भारत)

Colophon — *Parvan name* B1–4 Dn3 D1 आदि — *Sub parvan* V1 B Dn D1 3 8 10 M दानधर्म — *Adhy name* V1 D1 2 गोप्रश्न, B1–3 5 Dn D10 गोलोकप्रश्न, B4 गोलोकप्रश्ने महेन्द्रसंवादः, D1–5 पिता महेन्द्रसंवादे गोमा(D5 गवां मा)हात्म्य, T3 धर्मशास्त्रगते दानप्रकरणे महेन्द्रसंवादे गोमाहात्म्यकथन, M गोलोकप्रश्ना — *Adhy no* (figures, words or both) V1 83, D10 88, T1 M 123, T2 3 G 1 129, G1 3 123 — *Śloka no* Dn 51, D1 49

# ८३

युधिष्ठिर उवाच ।

उक्तं पितामहेनेदं गवां दानमनुत्तमम् ।
विशेषेण नरेन्द्राणामिति धर्ममवेक्षताम् ॥ १
राज्यं हि सततं दुःखमाश्रमाश्च सुदुर्विदाः ।
परिवारेण वै दुःखं दुर्धरं चाकृतात्मभिः ।
भूयिष्ठं च नरेन्द्राणां विद्यते न शुभा गतिः ॥ २
पूयन्ते तेऽत्र नियतं प्रयच्छन्तो वसुंधराम् ।
पूर्वं च कथिता धर्मास्त्वया मे कुरुनन्दन ॥ ३
एवमेव गवामुक्तं प्रदानं ते नृगेण ह ।
ऋषिणा नाचिकेतेन पूर्वमेव निदर्शितम् ॥ ४
वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ।
सर्वक्रतुषु चोद्दिष्टं भूमिर्गावोऽथ काञ्चनम् ॥ ५
तत्र श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै ।
एतदिच्छाम्यहं श्रोतुं पितामह यथातथम् ॥ ६
किं सुवर्णं कथं जातं कस्मिन्काले किमात्मकम् ।
किं दानं किं फलं चैव कस्माच्च परमुच्यते ॥ ७
कस्माद्दानं सुवर्णस्य पूजयन्ति मनीषिणः ।
कस्माच्च दक्षिणार्थं तद्यज्ञकर्मसु शस्यते ॥ ८

## 83

☞ This adhy is missing in D8 (cf v l 13 82 37)

1 Before the ref., T2 ins

385* नम सर्वसहाभ्यश्चेत्यभिधाय दिने दिने।
नमस्करोति गोभ्यो य स सुख याति तत्पथम्।

While M1-8 ins before the ref

386* वैशपायन उवाच।
एष श्रुत्वा परं पुण्यं गवां दानमनुत्तमम्।
धर्मराज प्रहृष्टात्मा कौरवं पुनरब्रवीत्।

G1 om the ref — $^b$) D9 गवां माहात्म्यमुत्तम — D5 reads 1$^{cd}$ twice — $^c$) D5 (second time) भूयिष्ठं च (for विशेषेण) — $^d$) V1 B Dn D2 10 M4 इह; T1 इद, G1 नीति (for इति) D1 2 अवेक्षत, D5 (both times) 7 क्ष्यतां

2 T1 om 2$^{abcd}$ — $^a$) G1 8 partly damaged D5 राज्ये D1 T2 8 G1 M च (for हि) — V1 B Dn om (hapl) 2$^{bc}$ — $^c$) G3 4 M1 2 4 परिचारेण (for °वारेण) — $^e$) D1 हि (for च) — $^f$) D1 7 1 9 नो (for न)

3 $^a$) V1 B1-2 5 Dn D4 तत्र; D2 10 T3 G1-3 M2-4 ते तु, D6-9 नात्र; T1 तेपि; G4 सन्तु (for तेऽत्र) B1 पूयति तत्र नियतं, T2 °ते सन्तु यद्विसं, M1 °ते ते तु नियता — $^c$) V1 B Dn सर्वे, D6 पूर्वे (for पूर्वं) — After 3, D5 ins 389*

4 D6 om 4-35 T1 om 4$^{ab}$ — $^a$) D1 6 7 9 10 राज्ञा चैव यथाप्रा(D6 °दा प्रा, D7 °द्यप्रा)स — $^b$) Dn2 प्रदानेन; D4 6 9 10 दानाद्दाने, D3 प्रदान तु (for °न ते) D1 2 नृपेण (for नृगेण) — $^c$) D1 नासिकेतेन (for नाचि°) — $^d$) B1 निवेदित, D3 10 (by corr) निदर्शन (for °र्शितम्) — For 4$^{cd}$, D2 subst

387* निदर्शितं पूर्वमेव ऋषिणा नासिकेतुना।

5 D5 om 5 (cf v l 4) — $^a$) Dn1 n2 T1 वेदोपनिषदश्च, D10 °निषदा — $^b$) B (except B1) Dn D3 T1 G2 4 दक्षिणा, D1 2 4 T2 3 णा (for णा) — $^c$) S [उ]द्दिष्टा

6 D5 om 6 (cf v l 4) — $^a$) T1 2 (for तत्र) D3 स्तुतिस् (for श्रु) T1 — $^b$) D4 6-8 च (for वै) — $^c$) D6-9 श्रोतु) — $^d$) Dn1 यथा तथा (for [illegible]

7 D5 om. 7 (cf v l 4) — $^c$) V1 D1 2 दैव (for दान) — T1 om 7$^d$-8$^a$ — lacuna. D1 2 फलम् (for परम्)

8 D5 om 8 (cf. v l 4) T1 om 8$^a$ (cf v — $^a$) G1 8 तस्माद् (for क°) — $^c$) V1 B D दक्षिणार्थे V1 B1 च, D4 6-8 तु (for तद्)

9 D5 om 9 (cf v l 4). — $^a$) B3 श्रेयो (for

कस्माच्च पावनं श्रेष्ठं भूमेर्गोस्यथ काञ्चनम् ।
परमं दक्षिणार्थे च तद्ब्रवीहि पितामह ॥ ९

भीष्म उवाच ।

शृणु राजन्नवहितो बहुकारणविस्तरम् ।
जातरूपसमुत्पत्तिमनुभूतं च यन्मया ॥ १०
पिता मम महातेजाः शंतनुर्निधनं गतः ।
तस्य दित्सुरहं श्राद्धं गङ्गाद्वारमुपागमम् ॥ ११
तत्रागम्य पितुः पुत्र श्राद्धकर्म समारभम् ।
माता मे जाह्नवी चैव साहाय्यमकरोत्तदा ॥ १२
ततोऽग्रतस्तपःसिद्धानुपवेश्य बहूनृषीन् ।
तोयप्रदानात्प्रभृति कार्याण्यहमथारभम् ॥ १३
तत्समाप्य यथोद्दिष्टं पूर्वकर्म समाहितः ।
दातुं निर्वपणं सम्यग्यथावदहमारभम् ॥ १४
ततस्तं दर्भविन्यासं भित्त्वा सुरुचिराङ्गदः ।
प्रलम्बाभरणो बाहुरुदतिष्ठद्विशां पते ॥ १५
तमुत्थितमहं दृष्ट्वा परं विस्मयमागमम् ।
प्रतिग्रहीता साक्षान्मे पितेति भरतर्षभ ॥ १६
ततो मे पुनरेवासीत्संज्ञा संचिन्त्य शास्त्रतः ।
नायं वेदेषु विहितो विधिर्हस्त इति प्रभो ।
पिण्डो देयो नरेणेह ततो मतिरभून्मम ॥ १७
साक्षान्नेह मनुष्यस्य पितरोऽन्तर्हिताः क्वचित् ।
गृह्णन्ति विहितं त्वेवं पिण्डो देयः कुशेष्विति ॥ १८
ततोऽहं तदनादृत्य पितुर्हस्तनिदर्शनम् ।
शास्त्रप्रमाणात्सूक्ष्मं तु विधिं पार्थिव संस्मरन् ॥ १९

---

श्रेष्ठ ) — $^{c}$ ) D4 6-8 दक्षिगार्थं ( for °र्थे ) — $^{d}$ ) G1 8 lacuna T2 8 G4 मे ब्रूहि ( for ब्रवीहि )

10 D5 om 10 ( cf v l 4 ) G1 8 lacuna for the ref — $^{d}$ ) D4 -रूप ( for -भूतं ) Dn2 तन् ( for यन् )

11 D5 om 11 ( cf v l 4 ) — $^{a}$ ) D4 मे सु ( for मम ) — $^{b}$ ) Some MSS शातनुर् — D6 reads from मुपागमम् ( in 11$^{d}$ ) up to श्राद्ध ( in 12$^{b}$ ) twice — $^{d}$ ) G2 गंगापारम् ( for °द्वारम् ) S उपागत ( for °गमम् )

12 For the repetition in D6, cf v l 11 D5 om 12 ( cf v l 4 ) — $^{a}$ ) S ( G1 8 damaged ) तत्रा हमागम्य ( T2 °त्य ) पितु — $^{b}$ ) D6 ( first time ) 7-9 G4 श्राद्धं ( for श्राद्ध- ) T8 समावह ( for °रभम् ) — D2 4 6 7 9 om ( hapl ) 12$^{c}$-14$^{d}$ G2 reads 12$^{cd}$ after 16 — $^{c}$ ) V1 B1 तत्र , B2-5 Dn D8 10 चात्र ( for चैव )

13 D5 om 13 ( cf v l 4 ) D2 4 6 7 9 om 13 ( cf v l 12 ) D1 om ( hapl ) 13 — $^{a}$ ) S तत्रागतास् ( for ततोऽग्रतस् ) B4 D10 ततोग्रतपस सिद्धान् — $^{d}$ ) S कार्याण्यथ समारभ

14 D5 om 14 ( cf v l 4 ) D2 4 6 7 9 om 14 ( cf v l 12 ) — $^{a}$ ) D1 8 damaged. T3 तदा ( for यथा ) — $^{b}$ ) T1 2 G M4 सर्वं , T8 सर्वं ( for पूर्व- ) B5 समारभ , T1 °हित ( for °हित ) — T1 om 14$^{cd}$ — $^{c}$ ) D1 8 10 T2 G M निव्र( G1 8 °वा )पनं ( for निर्व पण )

15 D5 om 15 ( cf v l 4 ) — $^{a}$ ) D10 सु , T G2 4 स ( for त ) — $^{b}$ ) T1 8 G1 8 4 हित्वा ( for भित्त्वा ) B5 T8 G1 4 स ( for सु ) D10 नीत्वा सुरु चिरागुलि — $^{c}$ ) D6 9 प्रलबावरणो बाहुर् — D6 om from तिष्ठद्विशां ( in 15$^{d}$ ) up to भरतर्षभ ( in 16$^{d}$ )

16 D5 om 16 ( cf v l 4 ) D6 om 16 ( cf v l 15 ) G1 om 16–17 — $^{a}$ ) G8 damaged D10 समुत्थितम् , T1 M मुहूर्तं ( T1 M4 °र्ते ) तम् ( for तमुत्थि तम् ) T2 8 G2 4 मुहूर्तमपि त ( G2 °तं पितर ) दृष्ट्वा — $^{b}$ ) B1 T2 8 G2-4 आगत ( for मम् ) — After 16, G2 reads 12$^{cd}$

17 D5 om 17 ( cf v l 4 ) G1 om 17 ( cf v l 16 ) — $^{b}$ ) T1 प्रज्ञा ( for सज्ञा ) T3 सश्रित्य ( for सचिन्त्य ) — $^{c}$ ) V1 विदितो ( for विहितो ) — $^{f}$ ) D10 नरस्य ( for नरेण )

18 D5 om 17 ( cf. v l 4 ) — $^{a}$ ) T1 देहे , T2 8 G M4 देहं ( for नेह ) D10 मनुष्येषु ( for °ष्यस्य ) — $^{b}$ ) V1 B Dn D10 पिंड हि पितर क्वचित् — $^{c}$ ) D1 गृह्णते ( for न्ति ) M1 3 विविध ( for विहित ) V1 B2 ( marg ) 4 Dn2 n3 D8 चैतयं ( for त्वेव ) — $^{d}$ ) T1 [इ]ह ( for [इ]ति )

19 D5 om 19 ( cf v l 4 ) D10 reads 19$^{ab}$

ततो दर्भेषु तत्सर्वमददं भरतर्षभ ।
शास्त्रमार्गानुसारेण तद्विद्धि मनुजर्षभ ॥ २०
ततः सोऽन्तर्हितो बाहुः पितुर्मम नराधिप ।
ततो मां दर्शयामासुः स्वप्नान्ते पितरस्तदा ॥ २१
प्रीयमाणास्तु मामूचुः प्रीताः स्म भरतर्षभ ।
विज्ञानेन तवानेन यन्न मुह्यसि धर्मतः ॥ २२
त्वया हि कुर्वता शास्त्रं प्रमाणमिह पार्थिव ।
आत्मा धर्मः श्रुतं वेदाः पितरश्च महर्षिभिः ॥ २३
साक्षात्पितामहो ब्रह्मा गुरवोऽथ प्रजापतिः ।
प्रमाणमुपनीता वै स्थितिश्च न विचालिता ॥ २४

तदिदं सम्यगारब्धं त्वयाद्य भरतर्षभ ।
किं तु भूमेर्गवां चार्थे सुवर्णं दीयतामिति ॥ २५
एवं वयं च धर्मश्च सर्वे चास्मत्पितामहाः ।
पाविता वै भविष्यन्ति पावनं परमं हि तत् ॥ २६
दश पूर्वान्दश परांस्तथा संतारयन्ति ते ।
सुवर्णं ये प्रयच्छन्ति एवं मे पितरोऽब्रुवन् ॥ २७
ततोऽहं विस्मितो राजन्प्रतिबुद्धो विशां पते ।
सुवर्णदानेऽकरवं मतिं भरतसत्तम ॥ २८
इतिहासमिमं चापि शृणु राजन्पुरातनम् ।
जामदग्न्यं प्रति विभो धन्यमायुष्यमेव च ॥ २९

---

twice — a) B8 तम् ( for तद् ) T G2.4 अपाकृत्य ( for अनादृत्य ) — b) T G3 M पितृ ( for पितुर् ) — G1 om (hapl.) $19^{c}$–$20^{b}$ — c) V1 B Dn D10 प्रामाण्य ; D4 प्रमाण ( for णात् ) D4.6–9 तं ( for तु ) T1 G3 M शास्त्रप्रामाण्यसूक्ष्मार्थम्, T2.3 G2.4 प्रमाणसूक्ष्मा( G2 °श्रा )र्थम् — d) V1 B Dn D2.10 पिंडस्य ( for पार्थिव ) T1 स्मृत्वा पार्थिवसत्तम, T2.3 G2–4 M इम पार्थिव संस्मरे

20 D5 om. 20 (cf v l 4) G1 om $20^{ab}$ (cf v l 19) — b) G4 मद्दत्तं, M अददां ( for अदद ) — D2 om $20^{c}$–$21^{b}$ T3 om (hapl.) $20^{cd}$ — d) T1 तदाह ( for तद्विद्धि ) B1 D1.10 M4 तद्विद्धि भरतर्षभ, T2 °द्धि त्वं युधिष्ठिर

21 D5 om 21 (cf v l. 4) D2 om $21^{ab}$ (cf v l 20) G1.3 partly damaged — b) B1–4 Dn1 n2 D1.4.6–10 T G2.4 जनाधिप ( for नरा ) — c) V1 B मे, M4 मा ( for मां ) — d) S तृप्तास्ते ( for स्वप्नान्ते ) V1 B2.5 Dn D1.2 तथा ( for तदा )

22 D5 om 22 (cf v l 4) — a) D1 T2 M1.2 (orig ) 3 च, T1.3 G M2 ( sup lin ) 4 स्म ( for तु ) — b) T2 तु ( for स्म ) — d) B1 यत्नत ( for धर्मत )

23 D5 om 23 (cf. v l 4) — a) V1 तु ( for हि ) — b) D1.4.6–9 इति ( for इह ) T2.3 G2.4 भारत ( for पार्थिव ) — c) B3 D1.4 आत्मधर्म°; D6.8.9 आत्मधर्मं ( for आत्मा धर्मं ) — d) V1 B5 Dn [ऋ]षिभि सह, D8 सहर्षिभि ; T2 महर्षय ( for °र्षिभि )

24 D5 om 24 (cf v l 4) — b) D1.4.6.7.9 च ( for ऽथ ) — c) D1 प्रामाण्यम् — d) D2 om च B5 विचाल्यते, T3 °रिता ( for °लिता ) Bom ed स्थिताश्च न विचालिता

25 D5 om 25 (cf v l 4) G1.3 partly damaged — b) B1 D8 च, T1 हि ( for [अ]द्य ) — c) V1 B2 किं च भूमेर्, B3 अतर्भू° ( for किं तु भू° ) D4.6–9 किं तु भूमिश्च गाश्चैव, T1 अस्मदर्थे त्वया भूमि — d) T1 इह ( for इति ) D4.6–9 सुवर्णं च प्रदीयता

26 D5 om 26 (cf v l 4) — a) V1 B2.5 Dn D2 च धर्मज्ञ, B1.4 D10 च धर्मज्ञा , D1 सधर्माश्च ( for च धर्मश्च ) B3 एव च पंच धर्मज्ञा — c) T1 पालिता, T3 प्रापिता ( for पाविता ) Dn2 याचिता ये भविष्यति — d) Dn1 n2 हि पर ( for परम ) D1 हित ( for हि तत् )

27 D5 om. 27 (cf v l. 4) T1 om. 27 — a) V1 B Dn1 n2 D10 [ए]वान्यांस् ( for परास् ) S ( T1 om ) नव पूर्वानथश्चान्यान् — b) D1.2 त्ववश्यास्, D4.6–9 अथ स , S ( T1 om ) नव स ( for तथा स ) Dn3 तु ( for ते ) — d) V1 B Dn3 मा पितरो, Dn1 n2 मपि ( for मे पि° ) D2.10 S ( T1 om ) [इ]त्येव मा पि( D2 मपि ; M1–3 मा पि )तरोऽब्रुवन्

28 D5 om 28 (cf. v l 4) — a) B4 असो ( for ततो ) — c) T1 सुवर्णदानैकपरां — d) V1 B Dn D10 मतिं च भरतर्षभ, T1 मतिं वै कृतवान्पर — After 28, T1 M1–3 ins an addl colophon [ *Sub parvan* M1–3 दानधर्म — *Adhy no* T1 M1–3 123 ]

29 D5 om 29 (cf v l 4) — a) V1 इदं ( for

स शक्रलोके वसति पूज्यमानो द्विजातिभिः ।
अप्सरोभिश्च सततं देवैश्च भरतर्षभ ॥ १९
दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
स्नातकाय महाबाहो संशिताय द्विजातये ॥ २०
सोऽपि लोकानवाप्नोति दैवतैरभिपूजितान् ।
गोलोके स मुदा युक्तो वसति प्रेत्य भारत ॥ २१
एतत्ते भरतश्रेष्ठ मया कार्त्स्न्येन कीर्तितम् ।
छत्रोपानहदानस्य फलं भरतसत्तम ॥ २२

इति श्रीमहाभारते अनुशासनपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

# ९९

युधिष्ठिर उवाच ।
आरामाणां तडागानां यत्फलं कुरुनन्दन ।
तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ ॥ १
भीष्म उवाच ।
सुप्रदर्शा वनवती चित्रधातुविभूषिता ।
उपेता सर्वबीजैश्च श्रेष्ठा भूमिरिहोच्यते ॥ २

---

भावी ) —$^{d}$ ) T1 3 G3 M3 4 तत्र ( for मेऽत्र )

18 G1 om 18 ( cf v l 16 ) —$^{a}$ ) T1 यो ( for हि ) D1 3 4 6-9 छत्र हि पुरुषव्याघ्र ; T2 छत्र हि परम श्रेष्ठ —$^{b}$ ) T1 सं ( for य ) D1 2 T2 प्रयच्छेद् ( for प्रदद्याद् ) —$^{c}$ ) D1 शुभ, D4 छत्र ( for शुभ्र ) T3 च ( for वै ) —$^{d}$ ) D2 अश्नुते ( for एधते )

19 $^{b}$ ) T1 सुरर्षिभि ( for द्विजातिभि ) —T1 om 19$^{cd}$ — After 19, G1 reads 15$^{cd}$

20 $^{b}$ ) D1 प्रयच्छेद् ( for च्छति ) — For 20$^{ab}$, S subst

442* उपानहौ च यो दद्याच्छ्लक्ष्णौ स्नेहसमन्वितौ ।

[ T1 M श्लक्ष्णस्नेहसमन्विते ( for the post half ) ]

—$^{c}$ ) T3 महाभाग ( for °बाहो ) —$^{d}$ ) T1 सुप्रीताय ( for संशि° ) T2 M द्विजाय वै ( for °तये ) G3 4 संश्रिताय द्विजाय वै

21 $^{b}$ ) Some MSS देवतैर् B1 D4 8 9 अपि ( for अभि ) T G1, 3 4 M -पूजित , G2 शोभित ( for -पूजितान् ) D1, 2 शाश्वतान्भरतर्षभ — D4 T1 om 21$^{cd}$ —$^{c}$ ) V1 om स B1 3 D1 गोलोके च, S ( T1 om ) °केषु ( for °के स ) Dn3 D2 6-8 गोलोके च सदा युक्तो

22 D1 om 22$^{ab}$ —$^{c}$ ) D2 T1 2 G M1-3 -धर्मस्य ( for दानस्य ) —$^{d}$ ) D1 2 फल वे परिकीर्तित — After 22, D2 ins

443* मया भारतशार्दूल किं भूय श्रोतुमिच्छसि ।

Colophon — *Parvan name* B1-4 Dn3 शाति — *Sub parvan* V1 B Dn D2 6-10 दानधर्म, D5 दानखंड — *Adhy name* V1 B5 D10 छत्रोपानहप्रशंसा, B1 2 4 Dn D5 G2 छत्रोपानहदानप्रशसा, D1 2 T3 G4 छत्रोपानहदान, D4 6-9 छत्रोपानहोत्पत्ति , T2 G3 जमदग्निसूर्यसवादे छत्रोपानहदानप्रशसा ( G3 °सन ), G1 जमदग्निसूर्यसंवाद — *Adhy no* (figures, words or both) Dn1 94, D10 105, T1 M4 138, T2 3 G2 4 145, G1 3 M1 139, M2 3 140 — *Śloka no* Dn3 22 — After 98, D10 S ins passages given in App I ( Nos 10 and 10A )

## 99

☞ This adhy is missing in D3 ( cf v l 13 82 37 ) It is omitted in G2 V1 B Dn D1 2 8 10 T1 M1-3 read this adhy after 13 57

1 $^{a}$ ) D1 damaged D2 S ( G2 om ) सत्कृतानां ( T3 M °स्करणा ) तटाकाना —$^{b}$ ) V1 B1-3 5 Dn D2 8 10 T1 2 G1 3 4 M4 पुगव ( for -नन्दन ) —$^{d}$ ) D5 त्वत्तो भरतसत्तम

2 D1-7 9 om 2-3 —$^{a}$ ) B1 अप्रदर्शा, D10 सुप्रदेशा ( for दर्शा ) V1 B Dn D8 बलवती ( for वन ) S ( G2 om ) सुप्रदर्शो धनपतिश्च —$^{b}$ ) V1 B Dn चित्रा ( for चित्र ) T G1 3 4 M2 4 -विभूषित

तस्याः क्षेत्रविशेषं च तडागानां निवेशनम् ।
औदकानि च सर्वाणि प्रवक्ष्याम्यनुपूर्वशः ॥ ३
तडागानां च वक्ष्यामि कृतानां चापि ये गुणाः ।
त्रिषु लोकेषु सर्वत्र पूजितो यस्तडागवान् ॥ ४
अथ वा मित्रसदनं मैत्रं मित्रविवर्धनम् ।
कीर्तिसंजननं श्रेष्ठं तडागानां निवेशनम् ॥ ५
धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः ।
तडागं सुकृतं देशे क्षेत्रमेव महाश्रयम् ॥ ६
चतुर्विधानां भूतानां तडागमुपलक्षयेत् ।
तडागानि च सर्वाणि दिशन्ति श्रियमुत्तमाम् ॥ ७

देवा मनुष्या गन्धर्वाः पितरोरगराक्षसाः ।
स्थावराणि च भूतानि संश्रयन्ति जलाशयम् ॥ ८
तस्मात्तांस्ते प्रवक्ष्यामि तडागे ये गुणाः स्मृताः ।
या च तत्र फलावाप्तिर्ऋषिभिः समुदाहृता ॥ ९
वर्षमात्रे तडागे तु सलिलं यस्य तिष्ठति ।
अग्निहोत्रफलं तस्य फलमाहुर्मनीषिणः ॥ १०
शरत्काले तु सलिलं तडागे यस्य तिष्ठति ।
गोसहस्रस्य स प्रेत्य लभते फलमुत्तमम् ॥ ११
हेमन्तकाले सलिलं तडागे यस्य तिष्ठति ।
स वै बहुसुवर्णस्य यज्ञस्य लभते फलम् ॥ १२

---

$D_8$ विचित्रा धातुभूषिता, $M_{1\ 3}$ चित्रधातुर्विभूषित — T $G_{1\ 3\ 4}$ M om $2^{c}$–$4^{b}$ — $^{c}$) $V_1$ B Dn -भूतैश्च् (for बीजैश्च्) $B_{1.\ 3\ 4}$ $D_{8\ 10}$ तु, $B_2$ (marg as in text) या (for च) — $^{d}$) $B_2$ वास (for श्रेष्ठा).

3 $D_{1-7\ 9}$ T $G_{1.\ 3\ 4}$ M om. 3 (cf v l 2) — $^{a}$) $V_1$ B $Dn_1$ $D_1$ -विशेषश्च्, $Dn_2$ $n_3$ °षाश्च् (for °षं) $D_2$ सस्यक्षेत्रविशेषाश्च — $^{b}$) $V_1$ B Dn $D_{1\ 2}$ च अधनं (for निवेशनम्)

4 T $G_{1\ 3\ 4}$ M om $4^{ab}$ (cf v l 2) — $^{a}$) $D_{10}$ तटाकाना (for तडागाना) — $^{b}$) $D_{1\ 2\ 4-7\ 9}$ कृताना ये गुणा स्मृता — $^{d}$) $V_1$ B Dn $D_{8\ 10}$ पूजनीयस् (for पूजितो यस्) T $G_1$ M तटाकवान्

5 $^{a}$) T $G_{1\ 3\ 4}$ $M_4$ इह चामुत्र सदनं ($T_1$ फलद), $M_{1-3}$ मातृणा नदन पौत्रं — $^{b}$) $M_{1-3}$ सर्वं पितृ, $M_4$ पौत्र सर्व (for मैत्र मित्र) Madras ed पुत्रीय वित्त वर्धन — $^{d}$) $D_2$ तडाकाना $D_5$ S ($G_2$ om) तटाकानां

6 $T_1$ om $6^{cd}$ — $^{c}$) $Dn_3$ $D_{6\ 7\ 9\ 10}$ तडाग, $D_2$ तडाक, $D_5$ S ($T_1$ $G_2$ om) तटाकं $D_{1\ 10}$ सुकृते (for °त) $D_6$ लोके (for देशे) — $^{d}$) $Dn_1$ $n_2$ एक (for एव) $B_1$ गृहाश्रम, $B_5$ महाश्रमं (for °श्रयम्) S ($T_1$ $G_2$ om) क्षेत्रे दे($G_4$ M °त्रदे)शसमाश्रय

7 $D_8$ om (hapl) 7–13 — $^{b}$) $D_{4\ 5\ 7\ 9}$ तडागानि, S ($G_2$ om) तटाकम् $D_{1\ 2}$ तडागान्युपकल्पयेत् — $D_{8\ 10}$ om $7^{cd}$ — $^{c}$) S ($G_2$ om) तटाकानि $D_{4\ 5\ 7\ 9}$ तुष्टानि तानि सर्वाणि — $^{d}$) $T_{1\ 2}$ $G_4$ दिशंते

8 $D_6$ om 8 (cf v l 7) — $^{a}$) Dn $D_{5\ 8}$ $M_{3-4}$ मनुष्य (for °ष्या) $B_1$ पितरो (for गन्धर्वा) $M_1$ देवमानुषगंधर्वा — $^{b}$) $B_1$ गधर्वोरगराक्षसा, $B_8$ $T_1$ पितरो यक्ष°, $D_{1\ 7\ 10}$ पितरो नाग°, $T_2$ $G_4$ पतगोरग° — $^{d}$) $D_{2\ 4\ 8\ 10}$ $T_3$ जलाश्रयं (for °शयम्)

9 $D_6$ om 9 (cf v l 7) — $^{a}$) $D_{4\ 7\ 9}$ ते सं, $D_5$ तस्स, $T_1$ तान्स (for तांस्ते) — $^{b}$) $Dn_3$ तडागेषु, T $G_1$ M तटाके ये (for तडागे ये). — $^{c}$) $B_3$ $D_{4\ 5}$ यावत् (for या च) $T_3$ $G_{1\ 3\ 4}$ फलप्राप्तिर्. — $^{d}$) $D_{1\ 2}$ ऋषिभि सप्रकीर्तिता.

10 $D_6$ om 10 (cf v l 7) — $^{a}$) $V_1$ $B_{1\ 4\ 5}$ Dn $D_{4\ 5\ 7\ 9}$ $M_2$ वर्षाकाले, $B_2$ $D_{1\ 2}$ वर्षारात्रे; $B_3$ वर्षामात्रे; $T_3$ वर्षरात्रे, $M_{1\ 3\ 4}$ °काले (for °मात्रे). Some MSS तटाके $T_1$ वर्षरात्रे तटाकेषु — $^{b}$) $D_9$ $T_{2\ 3}$ $G_{1.\ 3\ 4}$ यत्र (for यस्य) — $D_{5\ 7}$ transp $10^{cd}$ and $11^{ab}$ — $^{c}$) $V_1$ $Dn_3$ समं (for फल) — $G_{1\ 3}$ om (hapl) $10^{d}$–$15^{c}$ — $^{d}$) $D_{1\ 2}$ [इ]त्येवम्; $D_{4\ 5\ 7\ 9}$ एवम्, $D_8$ समम् (for फलम्) $T_1$ महर्षय (for मनीषिण) $T_2$ $G_{2\ 4}$ फल वै ऋषयोब्रुवन्

11 $D_6$ om 11 (cf v l 7) $G_{1\ 3}$ om 11 (cf v l 10) $T_{1\ 3}$ om 11–14 $T_2$ $G_4$ M om (hapl ?) 11–12 $D_{5\ 7}$ transp $10^{cd}$ and $11^{ab}$ — $^{a}$) $D_{4\ 5\ 7\ 9}$ च (for तु) — $B_3$ om (hapl) $11^{c}$–$12^{b}$

12 $D_6$ om 12 (cf v l 7) $G_{1\ 3}$ om 12 (cf v l 10) T $G_4$ M om 12, $B_3$ om $12^{ab}$ (for all, cf v l 11) — $^{d}$) $D_{1\ 2}$ यज्ञस्य फलभाग्भवेत्

13 $D_6$ om 13 (cf v l 7) $G_{1\ 3}$ om 13 (cf v l 10) $T_{1\ 3}$ om 13 (cf v l 11) — $^{a}$) $D_1$ om वै $V_1$ $B_{1\ 4}$ $D_{10}$ शिशिरे (for शै°) $D_2$ $T_2$ $G_4$

यस्य वै शैशिरे काले तडागे सलिलं भवेत् ।
अग्निष्टोमस्य यज्ञस्य फलमाहुर्मनीषिणः ॥ १३
तडागं सुकृतं यस्य वसन्ते तु महाश्रयम् ।
अतिरात्रस्य यज्ञस्य फलं स समुपाश्नुते ॥ १४
निदाघकाले पानीयं तडागे यस्य तिष्ठति ।
वाजपेयसमं तस्य फलं वै मुनयो विदुः ॥ १५
स कुलं तारयेत्सर्वं यस्य खाते जलाशये ।
गावः पिबन्ति पानीयं साधवश्च नराः सदा ॥ १६
तडागे यस्य गावस्तु पिबन्ति तृषिता जलम् ।
मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ॥ १७
यत्पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च ।
तडागदस्य तत्सर्वं प्रेत्यानन्त्याय कल्पते ॥ १८
दुर्लभं सलिलं तात विशेषेण परत्र वै ।
पानीयस्य प्रदानेन प्रीतिर्भवति शाश्वती ॥ १९
तिलान्ददत पानीयं दीपान्ददत जाग्रत ।
ज्ञातिभिः सह मोदध्वमेतत्प्रेतेषु दुर्लभम् ॥ २०
सर्वदानैर्गुरुतरं सर्वदानैर्विशिष्यते ।
पानीयं नरशार्दूल तस्माद्दातव्यमेव हि ॥ २१
एवमेतत्तडागेषु कीर्तितं फलमुत्तमम् ।
अत ऊर्ध्वं प्रवक्ष्यामि वृक्षाणामपि रोपणे ॥ २२

---

M यस्य शैशिरकाले तु, D6 7 काले च यस्य शिशिरे, D9 यस्य शिशिरे काले च —$^{b}$) D2 तडाके, some MSS तटाके —$^{c}$) V1 B Dn D8 10 तस्याग्निष्टोम यज्ञस्य —$^{d}$) M4 महर्षय (for मनीषिण) D8 फल च समुपाश्नुते

14 G1 3 om 14 (cf v l 10) T1 3 om 14 (cf. v l 11) T2 G4 M om 14 —$^{a}$) D9 lacuna D4 6 7 छोके (for यस्य) —$^{b}$) D8 10 च (for तु) D4 6 7 9 क्षेत्रमेव महाश्रय —D1 2 6 subst for 14$^{ab}$ D4 6 7 9 ins after 14$^{ab}$

444* वसन्तकाले पानीय तडागे यस्य तिष्ठति ।
[ D1. 2 सलिल (for पानीय) D2 तडाके ]

—D2 om. (hapl.) 14$^{c}$–15$^{b}$ —$^{d}$) D4 6 9 स फल (by transp), D8 10 फल च

15 G1 3 om 15$^{abc}$ (cf v l 11) D2 om 15$^{ab}$ (cf v l 14) D4 om 15 —$^{a}$) T G4 M सलिल (for पानीयं) —$^{b}$) Some MSS तटाके —$^{c}$) B Dn D8 10 वाजिमेध, D6 अग्निहोत्र, D7 9 अश्वमेध (for वाजपेय) B1 Dn D2 9 T G4 फल तस्य (for ॰सम तस्य) V1 वाजिमेधसहस्रस्य —$^{d}$) D1 2 ऋषयो (for मुनयो) D5–7 9 स फल समुपाश्नुते; S (G2 om) फल वै (M1–3 वा) ऋषयोऽब्रुवन्

16 $^{a}$) T3 G3 वंशं (for सर्वं) T1. 2 G1 4 M स कल तारयेद्वंश —$^{b}$) D5 जलाश्रये (for शये) —$^{c}$) V1 B Dn D8 10 सलिल (for पानीय) —$^{d}$) D2 स नर (for च नरा) T1 सकला मृगपक्षिण

17 G1 om 17 G4 om 17$^{ab}$ —$^{b}$) Some MSS तटाके —$^{b}$) D9 (marg sec m) पानीय प्रपिबन्त्युत —$^{c}$) D9 (marg sec m) पशवश्च, M1 पशुपक्षि (for मृग॰)

18 $^{a}$) D4–7 9 G1 3 ये (for यत्) D8 10 पयस् (for जल) T2 तस्य (for तत्र) —$^{b}$) D1 2 स्नाति विश्रमयति च —$^{c}$) B3 4 Dn2 D2 तडागे त (Dn2 D2 य) स्य तत्सर्वं, D5 तडागस्य च य, S (G2 om) तटाककर्तुस्त —$^{d}$) B5 कल्प्यते, D10 कल्पयेत् (for कल्पते)

19 $^{a}$) D9 तस्य (for तात) —$^{b}$) B1 D6 परत्र च, T2 परतप (for परत्र वै) —$^{d}$) D1 2 5 T1 3 M4 तृप्तिर्, T2 सिद्धिर्, M1–3 कीर्तिर् (for प्रीतिर्)

20 $^{a}$) V1 तिलं (for तिलान्) G4 ददाति (for ददत) T2 G1 3 तिल ददाति पानीयं —$^{b}$) D1 दीपं (for दीपान्) D8 कामत (for जाग्रत) S (G2 om) दीपमन्न प्रतिश्रयं (T2 ॰य) —$^{c}$) S (G2 om) बान्धवै (for ज्ञातिभि) —$^{d}$) V1 B1–5 Dn D6–8 10 प्रेत्य सु (for प्रेतेषु)

21 $^{a}$) D10 सर्वदाने D9 (marg sec m) सर्वदानेषु यत्पुण्य —$^{b}$) G1 partly damaged D9 (marg sec m) जल (for सर्वं) —$^{d}$) Dn3 om. from मेव हि up to जातय (in 23$^{b}$) D1 ह, D4 T1 च (for हि)

22 Dn3 om 22 (cf v l. 21) —$^{a}$) D3 4–7 9 एव (for एतत्) V1 B2–5 Dn1 n2 तडागस्य, S (G2 om) तटाकेषु (for तडागेषु) —After 22$^{ab}$, T2 ins

445* एकाहमपि कौन्तेय भूमिस्थमुदक कुरु ।
कुल तारयते जन्म सप्त सप्त च सप्त च ।

स्थावराणां च भूतानां जातयः षट् प्रकीर्तिताः ।
वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः ॥ २३
एता जात्यस्तु वृक्षाणां तेषां रोपे गुणास्त्विमे ।
कीर्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभम् ॥ २४
लभते नाम लोके च पितृभिश्च च महीयते ।
देवलोकगतस्यापि नाम तस्य न नश्यति ॥ २५
अतीतानागते चोभे पितृवंशं च भारत ।
तारयेद्वृक्षरोपी च तस्माद्वृक्षान्प्ररोपयेत् ॥ २६
तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः ।
परलोकगतः स्वर्गं लोकांश्चाप्नोति सोऽव्ययान् ॥ २७
पुष्पैः सुरगणान्वृक्षाः फलैश्चापि तथा पितॄन् ।
छायया चातिथींस्तात पूजयन्ति महीरुहाः ॥ २८
किंनरोरगरक्षांसि देवगन्धर्वमानवाः ।
तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान् ॥ २९
पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान् ।
वृक्षदं पुत्रवद्वृक्षास्तारयन्ति परत्र च ॥ ३०

---

— d ) Dn1 n2 D5 अव , D1 परि- ( for अपि ) Dn1. n2 रोपण D2 वृक्षाणा यत्फल भवेत्

23 Dn3 om up to जातय ( in 23b ) ( cf v l 21 ) — a ) T G3 M तु ( for च ) D5 स्थावराणा चराणा च — d ) S ( G2 om ) त्वक्सार ( for °रास् ) D1 2 -वीरुध ( for जातय ) — After 23, M1-3 ins 446*

24 T2 om 24ab — a ) G1 partly damaged D1 2 षड्विधाना च वृक्षाणां — b ) D1 2 चापि, T3 G1 3 4 रोप- ( for रोपे ) — T3 G1 3 4 M4 ins after 24ab T1 after 24 M1-3 after 23

446* पनसाम्रादयो वृक्षा गुल्मा मन्दारपूर्वका ।
नागिका मरिचा वल्ल्यो मालतीत्यादिका लता ।
वेणुक्रमुकत्वक्सारा सस्यानि तृणजातय ।

[ ( L 2 ) T1 नालिका , T3 नागका , M4 दाशिका ( for नागिका ) T1 M3 माधवी ( for मालती ) — ( L 3 ) T1 कदलीवेणुपूगाश्च ( for the prior half ) T1 त्वक्सारास् ( for सस्यानि ) ]

T1 cont

447* सस्यानि रोपणादेषा तृप्तिर्भवति शाश्वती ।

— d ) D1 partly damaged D1 [इ]ह ( for [ए]व ) D4-7 9 फल स्मृत , T2 3 M शुभ फलं ( by transp ) D3 प्रेत्य चेह च फलं लभेत्

25 a ) D1 damaged V1 D3 10 नाकलोके , D2 G1 3 4 M1-3 नाकपृष्ठे ( D2 ष्ठ ) ( for नाम लोके ) D6 8 लभते मानवो लोके, T1 लभ्यते मानुषे लोके; T2 लभते नाकपृष्ठेषु , T3 M4 लभ्यते नाकपृष्ठे च — b ) D2 पितृ- स्यश ( for °भिश ) D4-7 9 स ( for च ) — c ) B1-3 5 Dn D4-7 10 देवलोके ( for क- )

26 D1 partly damaged D2 om 26b-27a D10 repeats 26b after 27c — b ) D6 7 9 वशे च; T1 M1-3 वशस्य, T2 3 G1 3. 4 M4 -वशाश्च ( for वंश च ) — After 26ab, B2 5 ins

448* शतावराञ्शतपरान्मातापितृपितामहान् ।

[ B5 ऋतुपरान् ( for शत° ) B5 परान्मातृ- ( for माता पितृ ) ]

— After 26, V1 B2 ins

449* रोपयित्वा तु यो वृक्षान्काले शुश्रूषते नगान् ।

27 D3 om 27abc ( cf v l 26 ) D1 damaged — a ) S ( except G1, G2 om ) [ए]व ( for [ए]ते ) — c ) B3 4 चापि, T1 2 G3 4 M स्वर्गे ( for स्वर्गं ) T3 परलोके गत स्वर्गे — D10 repeats 27c after the repetition of 26b — d ) D2 आप्नोति ( for चा° ) D4 चाव्ययान्, D5 सोक्ष°, D6 7 9 चाक्ष° ( for सोऽव्य° )

28 ab ) B2 ( marg ) Dn3 नित्यं ( for वृक्षा ) D1 2 पुष्पै सुरभिभिश्चैव पत्रैश्चैव ( D2 °श्चापि ) फलैस्तथा — c ) V1 B Dn1 n3 D10 शाखया ( for छायया ) V1 B5 Dn D1 9 [अ]तिथिं ( for °थींस् ) — d ) B Dn D1 5-7 9 10 महीरुह ( for °रुहा ) — For 28cd, T1 subst.

450* पूजयन्ति क्षितिरुहाश्छायया ह्यतिथीन्सदा ।

29 a ) T1 मर्त्याश्च ( for रक्षासि ) — b ) B1 मानुषा , T1 राक्षसा , T2 दानवा ( for मानवा ) — c ) Dn3 [अ]प्यृषि , D4 6 9 ह्यर्षि ( for ऋषि ) — d ) T G1 M सश्रयते

30 c ) D4 6 7 9 वृक्षप , S ( G2 om ) वृक्षदान् ( for °द ) G1 पितृवद् ( for पुत्र° ) D5 वृक्षा पचसु पुत्रा हि — d ) V1 B2-4 Dn D4 6 9 तु , D5 त, G1 damaged ( for च )

तस्मात्तडागे वृक्षा वै रोप्याः श्रेयोर्थिना सदा ।
पुत्रवत्परिपाल्याश्च पुत्रास्ते धर्मतः स्मृताः ॥ ३१
तडागकृद्वृक्षरोपी इष्टयज्ञश्च यो द्विजः ।
एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ॥ ३२
तस्मात्तडागं कुर्वीत आरामांश्चैव रोपयेत् ।
यजेच्च विविधैर्यज्ञैः सत्यं च सततं वदेत् ॥ ३३

इति श्रीमहाभारते अनुशासनपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

## १००

युधिष्ठिर उवाच ।
गार्हस्थ्यं धर्ममखिलं प्रब्रूहि भरतर्षभ ।
ऋद्धिमाप्नोति किं कृत्वा मनुष्य इह पार्थिव ॥ १
भीष्म उवाच ।
अत्र ते वर्तयिष्यामि पुरावृत्तं जनाधिप ।
वासुदेवस्य संवादं पृथिव्याश्चैव भारत ॥ २
संस्तूय पृथिवीं देवीं वासुदेवः प्रतापवान् ।
पप्रच्छ भरतश्रेष्ठ यदेतत्पृच्छसेऽद्य माम् ॥ ३
वासुदेव उवाच ।
गार्हस्थ्यं धर्ममाश्रित्य मया वा मद्विधेन वा ।

---

31 $G_{1\ 3}$ om (hapl.) 31–32 — [a]) Some MSS तटाके $V_1$ तु वृक्षा, $Dn_1$ $n_2$ सद्वृक्षा (for वृक्षा वै) $B_{1\ 2\ 5}$ $Dn_3$ तस्मात्तडागेषु वृक्षा, $B_3$ गतीरेषु, $B_4$ तस्मा द्वृक्षास्तडागेषु, $D_{8\ 10}$ वृक्षास्तस्मात्तडागेषु — $D_4$ om 31[cd] — [c]) $D_{10}$ प्रति (for परि) S ($G_{1-3}$ om) रक्ष्याश्च (for -पाल्याश्च) $D_5$ वै (for च) — [d]) $B_5$ सुतास्ते; $T_1$ पुत्रार्थे (for स्ते)

32 $G_{1\ 3}$ om 32 (cf v l 31) — [a]) $D_9$ om (hapl) from तडाग up to तस्मा (in 33[a]) $V_1$ $B_5$ $D_2$ तडागवद्; some MSS तटाककृद् $D_{4\ 5\ 7\ 9}$ तडागे वृक्षरोपी च — [b]) M नर (for द्विज) $D_{5\ 7}$ इष्टि यज्ञकरो द्विज — [c]) Dn सर्वे (for स्वर्गे)

33 $D_9$ om तस्मा (in 33[a]) (cf v l 32) — [a]) $G_1$ partly damaged $B_3$ $D_2$ तडागान्; some MSS तटाक (for तडाग) — [b]) $T_1$ स्वारामांश्च (for आ°) S ($G_2$ om.) [अ]पि (for [ए]व) $D_1$ तरूंश्चैव च रोपयेत् — [c]) $D_{2\ 5}$ यजेत (for °च्च) $T_2$ विधि वद् (for विविधैर्) — [d]) $T_{2\ 3}$ $G_{1,3\ 4}$ M विधिवद् (for सततं)

Colophon — *Parvan name* $B_{1\ 2\ 4}$ $Dn_3$ $D_1$ शांति — *Sub-parvan* $V_1$ $B_{3-5}$ Dn $D_{1\ 2\ 4\ 5\ 8\ 10}$ $M_{1-3}$ दानधर्म — *Adhy name* $V_1$ $B_{2\ 4\ 5}$ Dn आरामतडागवर्णन, $B_1$ तडागारामवर्णन; $D_{1,2\ 5-7\ 9}$ आरामतटाकीय, $D_8$ आरामतडागारोपणं, $D_{10}$ तटाक वर्णन, $T_2$ तटाकवृक्षकर्तृधर्मकथनं — *Adhy no* (figures, words or both) $V_1$ $D_2$ 58, $D_{10}$ 62, $T_1$ 140, $T_{2\ 3}$ $G_4$ 154, $G_{1\ 3}$ $M_1$ 148, $M_{2\ 3}$ 149, $M_4$ 147 — *Śloka no* $D_4$ 30

## 100

☞ This adhy is missing in $D_8$ (cf v l 13 82 37)

1 [a]) $M_{1\ 3}$ गार्हस्थ्य $D_{1\ 2}$ गार्हस्थ्य नाम यदिद — [b]) $D_{6-9}$ प्रब्रूहि पुरुषर्षभ — [c]) $T_2$ $G_{1,3\ 4}$ $M_4$ वृद्धिम् (for ऋ°) $D_{1,2}$ किं कृत्वा सुखमाप्नोति — [d]) $D_{10}$ इति (for इह) $D_{2\ 5}$ भारत (for पार्थिव)

2 [a]) $V_1$ एतत् (for अत्र) $T_3$ [ए]व (for ते) $D_2$ $G_4$ अत्र ते वर्णयिष्यामि — [b]) $T_1$ वृत्तावृत्त (for (for पुरा) $D_{1\ 2}$ नराधिप, $G_4$ च भारत (for जना धिप)

3 [a]) $Dn_3$ $D_2$ संभूय, $G_1$ damaged (for संस्तूय) $T_2$ संस्तूयमान पृथिवीं — [b]) $D_{6\ 9}$ प्रभाववान् (for प्रताप) — [d]) $G_{1\ 3}$ यथा (for यद्) $D_4$ यथा; $D_6$ [ऽ]द्य मा (for ऽद्य माम्) $V_1$ B Dn $D_{5\ 9\ 10}$ मां त्वं यत्पृच्छसेद्य वै ($B_5$ मे, $D_9$ मां); $T_3$ यत्त्व पृच्छसि सौम्य मां

4 T G $M_4$ श्रीभगवान् (for वासुदेव) — [a]) $B_1$

किमवश्यं धरे कार्यं किं वा कृत्वा सुखी भवेत् ॥ ४
पृथिव्युवाच ।
ऋषयः पितरो देवा मनुष्याश्चैव माधव ।
इज्याश्चैवार्चनीयाश्च यथा चैवं निबोध मे ॥ ५
सदा यज्ञेन देवांश्च आतिथ्येन च मानवान् ।
छन्दतश्च यथानित्यमर्हान्युञ्जीत नित्यशः ।
तेन ह्यृषिगणाः प्रीता भवन्ति मधुसूदन ॥ ६
नित्यमग्निं परिचरेदभुक्त्वा बलिकर्म च ।
कुर्यात्तथैव देवा वै प्रीयन्ते मधुसूदन ॥ ७
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितॄणां प्रीतिमाहरन् ॥ ८
सिद्धान्नाद्वैश्वदेवं वै कुर्यादग्नौ यथाविधि ।
अग्नीषोमं वैश्वदेवं धान्वन्तर्यमनन्तरम् ॥ ९
प्रजानां पतये चैव पृथग्घोमो विधीयते ।
तथैव चानुपूर्व्येण बलिकर्म प्रयोजयेत् ॥ १०
दक्षिणायां यमायेह प्रतीच्यां वरुणाय च ।
सोमाय चाप्युदीच्यां वै वास्तुमध्ये द्विजातये ॥ ११
धन्वन्तरेः प्रागुदीच्यां प्राच्यां शक्राय माधव ।
मनोर्वै इति च प्राहुर्बलिं द्वारे गृहस्य वै ।
मरुद्भ्यो देवताभ्यश्च बलिमन्तर्गृहे हरेत् ॥ १२

---

आसाद्य, D8 आस्थाय (for आश्रित्य) — c) D1 6–9 T1 M4 भवेत् (for धरे) T1 किं वा (for कार्यं) — d) G1 partly damaged V1 B Dn D10 कृत, D5 कथं (for सुखी) T2 3 G2–4 किं कृत्वा वा सुखं (T3 स सुखी, G3 वा कृत) भवेत्

5 D6 7 भीष्म, D8 9 पृथ्वी, T2 G भूमिर् (for पृथिवी) — b) T2 G2 4 [ऋ]षि (for [ए]व) — c) T1 2 G1 3 4 M पूज्याश् (for इ°) T3 पूज्या गृहस्थाश्रमिणा — d) B4 5 तथा (for यथा) B2 4. 5 Dn1 n3 D9 10 चैव, D1 2 7 -वृत्तं, D4 च तन्, T1 G1 3 4 चैतन्, T2 3 G2 M वै तन् (for चैव) D6 8 यथावत्तन्निबोध मे

6 a) T1 यथा (for सदा) V1 B Dn D1 2 4–9 देवा स्युर् (for देवांश्च) — D6 om 6bcde — b) D1 2 4 7–9 मानुषा, M1–3 मानुषान् (for मानवान्) V1 B Dn D5 10 सदातिथ्येन मानुषा — G1 damaged for 6cd — c) D8 छदोभ्यश् (for छन्दतश्) B1 यथान्यायम्, D1 2 यथाकृत्यम् (for °नित्यम्) D4 7 9 छंदोभ्यश्च यथाकृत्यम्, S छंदतस्त(T1 तर्पयेत्त)र्पणेनापि (T3 °णेनैव, G4 णे वापि) — d) M4 पितॄन् (for अर्हान्) B2 3 5 Dn D7 9 भुजीत (for युञ्जीत) T1 पितॄन्भुजीत वै तव, T2 3 G2–4 M1–3 पितॄन्युजति नित्यश — e) B1 D8 9 ऋषि, D2 त्वर्षि, T3 वार्षि (for ह्यृषि) D7 प्रीतास्तेन ऋषिगणा — f) S ब्रह्मचर्येण चा(M वा)-नघ

7 D4 om (hapl) 7 — a) D3 9 चरेद्विप्रो, D7 चरेत्प्राज्ञ (for परिचरेद्) — b) D2 त तु वै, T3 दत्वा च, G2 हुत्वा च (for अभुक्त्वा) — c) D1 2 [इ]ह, D6–9 [इ]ति (for [ए]व) T2 G1 3 4 देवान्, G3 वेदान् (for देवा) — T1 om 7d–10a — d) T2 G प्रिय मे (for प्रीयन्ते)

8 =(var) Manu 3 82 T1 om 8 (cf v l 7) — b) V1 B4. 5 Dn D5 T3 च (for वा). B1 अन्ना चैरुदकेन च — d) B1 3 आवहन्, D1 2 4 6 8 9 आहरेत्, D7 S (T1 om) आवहेत् (for आहरन्)

9 T1 om 9 (cf. v l 7) For 9ab, cf Manu 3 84ab — a) D1 2 सिद्धाश्च, D4 सिद्धेन्नै, D6 सिद्धान्नो; D7 °न्ने (for °न्नाद्) S (T1 om) सि(T2 शु)द्धस्य वैश्वदेवस्य (M1–3 °व च) — c) G1 damaged D1 5 अग्नीषोमौ, T3 M4 अग्निष्टोमं (for अग्नीषोम) — d) B5 D5 M धन्वतर्यम्, D4 T3 धा(T3 ध)न्वतरम् (for धान्वन्तर्यम्) B1 ब्रह्मा *समनतरं, T2 G धन्वतर्यं च यद्धवि

10 T1 om 10a (cf v l 7) — b) V1 सोमो, D4 6–9 एव (for होमो) — c) D2 वा (for च) V1 Dn2 D5–9 G3 [अ]नुपूर्वेण (for [आ]नुपूर्व्येण) — d) G4 M3 प्रचोदयेत्

11 a) D7 दक्षिणस्या; T3 °णाशा (for °णाया) V1 B Dn D2 5 10 [इ]ति, T1 [इ]द, G1 damaged (for [इ]ह) — d) V1 B Dn D5 प्रजापते, D1 2 ध्रुवाय च (for द्विजातये)

12 a) T1 धन्वतर्यै, M °तरये (hypermetric) (for धन्वन्तरे) — T3 om 12bc — b) D3 प्राच्यं — c) G1 partly damaged D3 मानुषेभ्य (hypermetric), T1 2 G M4 मरुन्दय (for मनर्वै) V1 B Dn D5 10

तथैव विश्वेदेवेभ्यो बलिमाकाशतो हरेत् ।
निशाचरेभ्यो भूतेभ्यो बलिं नक्तं तथा हरेत् ॥ १३
एवं कृत्वा बलिं सम्यग्दद्याद्भिक्षां द्विजातये ।
अलाभे ब्राह्मणस्याग्नावग्रमुत्क्षिप्य निक्षिपेत् ॥ १४
यदा श्राद्धं पितृभ्यश्च दातुमिच्छेत मानवः ।
तदा पश्चात्प्रकुर्वीत निवृत्ते श्राद्धकर्मणि ॥ १५
पितॄन्संतर्पयित्वा तु बलिं कुर्याद्विधानतः ।
वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणवाचनम् ॥ १६
ततोऽन्नेनावशेषेण भोजयेदतिथीनपि ।
अर्चापूर्वं महाराज ततः प्रीणाति मानुषान् ॥ १७
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ १८
आचार्यस्य पितुश्चैव सख्युराप्तस्य चातिथेः ।
इदमस्ति गृहे मह्यमिति नित्यं निवेदयेत् ॥ १९
ते यद्वदेयुस्तत्कुर्यादिति धर्मो विधीयते ।
गृहस्थः पुरुषः कृष्ण शिष्टाशी च सदा भवेत् ॥ २०
राजर्त्विजं स्नातकं च गुरुं श्वशुरमेव च ।
अर्चयेन्मधुपर्केण परिसंवत्सरोषितान् ॥ २१
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ।
वैश्वदेवं हि नामैतत्सायंप्रातर्विधीयते ॥ २२
एतांस्तु धर्मान्गार्हस्थान्यः कुर्यादनसूयकः ।

M1-8 म( D10 मा )नुष्येभ्य इति प्राहुर् —d) D8 10 T2 8 G3.4 बलिर् (for बलिं) V1 B Dn D5 10 द्वारि, G1 damaged (for द्वारे) D8 T3 च (for वै) —e) V1 B Dn2 n3 D5-7 10 दै( D6 7 दे )वतेभ्यश् (for देवताभ्यश्) Dn1 महद्भ्यो देवतेभ्यश्च —f) D4 6-9 अत्र गृहे, G1 अंतर्गृहं (for °र्गृहे)

13 Cf. Manu 3 90 Dn1 om (hapl.) 13ab —a) Some MSS विश्वदेवेभ्यो —D5 om (hapl ?) 13c-14d —d) T3 चरेत् (for हरेत्)

14 D5 om 14 (cf v l 13) T2 reads 14ab twice —a) B1 ज्ञात्वा, D1 4 6 8 9 उक्त्वा, D7 T3 दत्त्वा (for कृत्वा) T2 (second time) यतीश्वराय च तथा —b) T3 भिक्षां दद्याद् (by transp) D2 द्विजाय वै, D7 च भिक्षवे (for द्विजातये) T2 (second time) G3.4 वद्याद्भिक्षा( G4 क्षु )द्वयं तथा (T2 दा) —d) V1 B Dn D7 10 T3 उद्धृत्य (for उत्क्षिप्य) T1 अन्नमुत्क्षिप्य विक्षिपेत्, T2 G अग्रमन्नं समुत्क्षिपेत्

15 a) D4 सदा; T1 यथा (for यदा) V1 B Dn D5 10 [5]पि, D2 6 7 9 तु (for च) —b) D1 दातुमिच्छेच्च माधव —c) D6 corrupt T1 तथा (for तदा) D4-9 बलिं (for पश्चात्) —d) Dn3 T2 3 M निर्वृत्ते (for निवृत्ते)

16 a) B1 च (for तु) —b) D1 स्वा, T3 दद्याद् (for कुर्याद्) B5 विचक्षण (for विधानत) —c) D4 7 9 तथा (for तत) —d) T2 G भोजन (for -वाचनम्) D6 ब्राह्मणानां च वाचन, T1 तस्माद्ब्राह्मणवाचक

17 a) T1 अतो (for ततो) V1 B4.6 Dn1.n3 वि (for [अ]व) —b) M3 पूजयेद् (for भो°) —c) V1 B3-6 अर्घ्यं, Dn3 T1 G3 अर्घ्यं, T2 3 G1 2 4 अर्घ्यं (for अर्चा) V1 पूज्य (for पूर्वं) M अर्घ्यपूर्वं महाबाहो —d) T1 प्रीणातु V1 B Dn D10 मानवान् (for मानुषान्)

18 = Manu 3 102cd —a) G1 3 स्थितिर् (for स्थितो)

19 G3 om 19c-21b —c) T3 इदमस्मिन्गृहे द्रव्यम्

20 G3 om 20 (cf v l. 19) —b) D7 व्यवस्थित (for विधीयते) —c) T1 गृहस्थे पुरुषे कृष्ण —d) B3 om from सदा up to वैश्वदेव (in 22c) B1 तथा; D5 सदा, D6 8 यदा (for सदा)

21 Cf Manu 3 119 G3 om. 21ab (cf v l 19) B3 om 21 (cf v l 20) D4 6-9 om 21ab —a) T1 राजर्त्विजान्; T3 M2-4 र्त्विजौ (for °र्त्विजं) ऋत्विज स्नातक चैव —b) T3 गुरूश्च

22 B3 om up to वैश्वदेव (in 22c) —b) G वपेद् (for [आ]वपेद्) T1 —22cd = Manu 3 121cd D1 2 om [ए]व (for [ए]तत्)

23 a) B2 6 धर्मांस्तु (by transp), च (T1 हि) धर्मान् T G M3 गार्हस्थ्ये, °स्थ्यान् (for स्थान्) —b) D4 6-9 य —c) T1 M1 4 इह ऋद्धिं (for स इहर्द्धिं) (for परां) V1 B Dn D2 5 स [illegible] 6-9 इहर्द्धिं स वरान्प्राप्य, T3 इहर्द्धिं पुरुष प्राप्य. B3-5 Dn3 प्रेत्य लोके, T1 2 G3 4 M स्वर्गलोके; ब्रह्मलोके, G1.3 प्रेत्य स्वर्गे (for प्रेत्य नाके)

स इहर्द्धिं परां प्राप्य प्रेत्य नाके महीयते ॥ २३

भीष्म उवाच ।

इति भूमेर्वचः श्रुत्वा वासुदेवः प्रतापवान् ।
तथा चकार सततं त्वमप्येवं समाचर ॥ २४

एवं गृहस्थधर्मं त्वं चेतयानो नराधिप ।
इहलोके यशः प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ २५

इति श्रीमहाभारते अनुशासनपर्वणि शततमोऽध्यायः ॥ १०० ॥

## १०१

युधिष्ठिर उवाच ।

आलोकदानं नामैतत्कीदृशं भरतर्षभ ।
कथमेतत्समुत्पन्नं फलं चात्र ब्रवीहि मे ॥ १

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मनोः प्रजापतेर्वादं सुवर्णस्य च भारत ॥ २

तपस्वी कश्चिदभवत्सुवर्णो नाम नामतः ।
वर्णतो हेमवर्णः स सुवर्ण इति पप्रथे ॥ ३

कुलशीलगुणोपेतः स्वाध्याये च परं गतः ।
बहून्स्ववंशप्रभवान्समतीतः स्वकैर्गुणैः ॥ ४

स कदाचिन्मनुं विप्रो ददर्शोपससर्प च ।
कुशलप्रश्नमन्योन्यं तौ च तत्र प्रचक्रतुः ॥ ५

---

24 D4 8 9 om the ref — c) D7 स सर्वं (for सततं) — d) B3 D6 [ए]तत् (for [ए]व) D3 10 सदाचर (for समाचर)

25 a) V1 B1 5 Dn D1 6 7 10 T2 8 G2 एतद्; B2 T1 M एतं (for एव) G2 धर्मस् (for धर्मं) B3 T3 च, Dn2 तु (for त्व) D5 एतद्गृहस्थधर्मे तु, G1 8 एतद्गार्हस्थ्यधर्मं त्व — b) B4 D5 चेष्टमानो, D4 6–9 T3 चिंतयानो (for चेत°) B3 D10 T2 M4 जनाधिप (for नरा°) V1 B1. 2 5 Dn चेष्टमानो जनाधिप, T1 G चिंतयानो जनाधिप

Colophon — *Parvan name* B1–4 Dn3 D1 शांति — *Sub-parvan* V1 B Dn D1 2 5–10 M1–3 दानधर्म — *Adhy name* V1 बलिदानधर्म, B1 Dn3 बलिदानविधि°, B2 4, 5 Dn1 n2 D5 10 बलिप्रदानविधि, D1 6–9 बलिप्रदानिक, D2 गृहस्थबलिप्रदानक, D4 बलिप्रदान, T2 गार्हस्थ्यधर्मे सदाचारबलिकर्मणि वासुदेवभूमिसवाद, T3 G2 सदाचारे बलिकर्मणि वासुदेवभूमिसवाद, G1 गृहस्थधर्मलक्षणं, G3 गार्हस्थ्यधर्मलक्षण — *Adhy no* (figures, words or both) V1 97, Dn1 95, D10 106, T1 M4 148, T2 3 G2 4 155, G1 3 M1 149, M2 3 150 — *Śloka no* Dn2 26, D4 24

## 101

☞ This adhy is missing in D3 (cf v l 13 82 37)

1 G2 om the ref — c) M च तत् (for एतत्) — d) V1 B4 T2 वात्र, B2 5 Dn1 n2 D5 वा तद् (for चात्र) D1 2 प्रचक्ष्व (for ब्रवीहि)

2 c) T2 पूर्वं (for वादं)

3 D4–7 9 om (hapl ?) 3ab, — b) V1 B1 4 5 Dn D8 10 भारत (for नामत) — c) D1 2 G4 -वर्णश्च; T1 -वर्णेन (for -वर्ण स) B1 सुवर्णतो हेमवर्ण° — d) T1 3 M त विदु, T2 G1 3 विश्रुत°, G2 4 च श्रुत (for पप्रथे) B1 स सुवर्णेति पप्रथे

4 T1 om 4 — a) G गुण- (for कुल) — b) S (T1 om) परमं (for च पर) — c) B1 स वंश, B2 Dn1 n2 D1 2 सुवंश; D6 7 9 च वंश, G2 स देश (for स्ववंश) G4 बहून्स देशप्रवरान् — d) D4 6–9 समतीत्य (for °तीत)

5 b) D6 7 9 ह (for च) T1 ददर्शावसदस्थित° — c) G2 om कुशल — d) V1 B Dn D1 2 5 10 [उ]भौ तत्र, D4 6–9 [उ]भौ संप्र (for च तत्र)

ततस्तौ सिद्धसंकल्पौ मेरौ काञ्चनपर्वते ।
रमणीये शिलापृष्ठे सहितौ संन्यषीदताम् ॥ ६
तत्र तौ कथयामास्तां कथा नानाविधाश्रयाः ।
ब्रह्मर्षिदेवदैत्यानां पुराणानां महात्मनाम् ॥ ७
सुवर्णस्त्वब्रवीद्वाक्यं मनुं स्वायंभुवं प्रभुम् ।
हितार्थं सर्वभूतानां प्रश्नं मे वक्तुमर्हसि ॥ ८
सुमनोभिर्यदिज्यन्ते दैवतानि प्रजेश्वर ।
किमेतत्कथमुत्पन्नं फलयोगं च शंस मे ॥ ९

मनुरुवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शुक्रस्य च बलेश्चैव संवादं वै समागमे ॥ १०
बलेर्वैरोचनस्येह त्रैलोक्यमनुशासतः ।
समीपमाजगामाशु शुक्रो भृगुकुलोद्वहः ॥ ११
तमर्घ्यादिभिरभ्यर्च्य भार्गवं सोऽसुराधिपः ।
निषसादासने पश्चाद्विधिवद्भूरिदक्षिणः ॥ १२
कथेयमभवत्तत्र या त्वया परिकीर्तिता ।
सुमनोधूपदीपानां संप्रदाने फलं प्रति ॥ १३
ततः पप्रच्छ दैत्येन्द्रः कवीन्द्रं प्रश्नमुत्तमम् ।
सुमनोधूपदीपानां किं फलं ब्रह्मवित्तम ।
प्रदानस्य द्विजश्रेष्ठ तद्भवान्वक्तुमर्हति ॥ १४

शुक्र उवाच ।

तपः पूर्वं समुत्पन्नं धर्मस्तस्मादनन्तरम् ।
एतस्मिन्नन्तरे चैव वीरुदोषध्य एव च ॥ १५
सोमस्यात्मा च बहुधा संभूतः पृथिवीतले ।
अमृतं च विषं चैव याश्चान्यास्तुल्यजातयः ॥ १६
अमृतं मनसः प्रीतिं सद्यः पुष्टिं ददाति च ।

6 T1 om 6 — a) T2 G4 तत्रस्थौ (for ततस्तौ) Dn1, n2 D5 सत्य (for सिद्ध) — b) G2 मेरु- (for मेरौ) — c) D6 8 9 रमणीय (for °ये) M सदा जुष्टे (for शिलापृष्ठे) T2 3 G देवर्षिभि सदा जुष्टे

7 a) D9 ततस् (for तत्र) V1 B2-5 Dn3 तत्र तौ कथयन्नास्तां (s10), Dn1 n2 D5 6 10 T1 तत्र तौ कथयतौ स्तां (D5 ता, T1 च), D8 ततस्तौ कथयामास (s10) — b) T2 3 G कथां नानाविधाश्रयां — c) B3 D8 ब्रह्म र्षेर् (for °र्षि) S ब्रह्मदेवर्षिदैत्याना

8 b) Dn1 n2 D5 10 प्रति; D4 G1 3 प्रभु (for प्रभुम्) — c) Dn3 हितार्थे (for °र्थं) — d) G1 3 अर्हति (for °सि)

9 a) D5 यजंते च (for यदिज्यन्ते) — b) D1 2 सुरेश्वर (for प्रजे°) — For $9^{ab}$, T G M4 subst

451* सुमनोगन्धधूपाद्यैरिज्यन्ते दैवतानि च ।

[T3 धूपदीपाद्यैर् (for गन्धधू) T1 3 M4 यत् (for च)]

— c) T2 G फलम् (for कथम्) — d) V1 B5 Dn1 n2 D4-7 9. 10 T G फल (for फल)

10 d) D4. 6-9 संवादे T1 च (for वै) V1 B2 4 5 Dn1 n2 D5. 10 महात्मनो (B5 °न), B1. 3 सदा तथा (for समागमे) Dn2 सवादे वै महात्मन

11 d) D8 10 -कुलोद्भव (for °द्वह)

12 a) D4 अर्चादिभिर्, D3 8 9 अर्घा° (for अर्घ्या°)

13 b) V1 B Dn D5 10 T M4 त्वया या (by transp), G त्वया च — c) Dn3 D1 6 7 9 सुमनो दीपधूपानां — d) D1 6-8 संप्रदान (for °ने) G1 3 यदि (for प्रति)

14 b) D6 ऋषिम् (for प्रश्नम्) D8 कवींद्रमृषिसत्तम — Before $14^{cd}$, some MSS ins बलिरुवाच Dn3 repeats $14^{cdef}$ after the ref of 15 — c) B4 Dn3 (both times) D1 2 सुमनोदीपधूपानां, D4 6-9 °नो बलिधूपानां — d) T3 ब्रह्मसत्तम — f) T1 यथावद् (for तद्भवान्) B3 5 D1 2 5 10 G2 अर्हसि (for °ति)

15 T1 om $15^{a}$–$16^{b}$ (with the ref) After the ref., Dn3 repeats $14^{cdef}$ D10 T2 3 G M ins after the ref.

452* अग्नीषोमादिसृष्टौ तु विष्णो सर्वात्मन प्रभो ।

[G1 3 M1 4 अग्निष्टोमादिसृष्टौ तु (for the prior half)]

— b) D10 स्यात्तद् (for तस्माद्) — d) V1 B1 D4 6 7 9 T2 G1 2 4 M1-3 वीरुदौषध्य एव च

16 T1 om $16^{ab}$ (cf v l 15) — a) D1 2 4 6-9 बहुविध, T3 [अ]थ बहुधा (for च ब°) — b) D4 6-9 सतत (for संभूत) T2 3 पते (for तले) — c)

मनो ग्लपयते तीव्रं विषं गन्धेन सर्वशः ॥ १७
अमृतं मङ्गलं विद्धि महद्विषममङ्गलम् ।
ओषध्यो ह्यमृतं सर्वं विषं तेजोऽग्निसंभवम् ॥ १८
मनो ह्लादयते यस्माच्छ्रियं चापि दधाति ह ।
तस्मात्सुमनसः प्रोक्ता नरैः सुकृतकर्मभिः ॥ १९
देवताभ्यः सुमनसो यो ददाति नरः शुचिः ।
तस्मात्सुमनसः प्रोक्ता यस्मात्तुष्यन्ति देवताः ॥ २०
यं यमुद्दिश्य दीयेरन्देवं सुमनसः प्रभो ।
मङ्गलार्थं स तेनास्य प्रीतो भवति दैत्यप ॥ २१
ज्ञेयास्तूग्राश्च सौम्याश्च तेजस्विन्यश्च ताः पृथक् ।
ओषध्यो बहुवीर्याश्च बहुरूपास्तथैव च ॥ २२
यज्ञियानां च वृक्षाणामयज्ञियान्निबोध मे ।
आसुराणि च माल्यानि दैवतेभ्यो हितानि च ॥ २३
राक्षसानां सुराणा च यक्षाणां च तथा प्रियाः ।
पितॄणां मानुषाणां च कान्तायास्त्वनुपूर्वशः ॥ २४
वन्या ग्राम्याश्चेह तथा कृष्टोप्ताः पर्वताश्रयाः ।

Dn2 तु (for च) Dn2 [अ]न्ये (for [ए]व) — d) V1 B Dn D5 10 ये चान्ये (for याश्चान्यास्) T1 तुल्य मेव व्यजायत

17 b) T1 8 M4 रक्षा (for सद्य) B1 5 Dn2 D5 10 तुष्टिं, Dn1 तृप्तिं (for पुष्टिं) D1 दधाति (for ददाति) V1 B2–4 Dn3 सद्यस्तुष्टिं दधाति च, T2 G रक्षा पुष्टि तथैव च — c) Dn2 ह्लादयते, D1 7 T2 G ग्लाप°, D6 8 9 लोप° (for ग्लप°) M4 सर्वं (for तीव्रं) T1 मनो ह्लाप यते चैव, M1–3 मनो ग्लापयते सर्वं — d) T1 भारत (for सर्वश)

18 a) B3 ओषध्याम् (for °ध्यो हि) Dn1 n2 D1 2 4–10 सर्वा (for सर्वं) — d) T3 M तोयाग्नि (for तेजोऽग्नि-)

19 T1 om 19ab — a) B4 5 तस्माच् (for य°) — b) B1 5 D2 5 ददाति (for दधाति) V1 B Dn D10 च, D5 [अ]पि (for ह) D4 6–9 श्रिय च विदधाति वै — For 19ab, S (T1 om) subst

453* अमृत मनो ह्लादयति श्रिय चैव ददाति ह ।
[ Hypermetric M1–8 ह्लादयते M4 श्रियश् (for श्रिय) T8 च, G4 हि (for ह) ]

— D4 om (hapl) 19c–20b — c) T1 जाता (for प्रोक्ता) — d) T1 प्रोक्ता (for नरै)

20 D4 om 20ab (cf. v 1 19) — a) G1 partly damaged T G2–4 M दैवतेभ्य (for देवताभ्य) — b) D1 दधाति (for ददाति) B5 सदा (for नर) — For 20cd, V1 B Dn D5 8 10 subst

454* तस्य तुष्यन्ति वै देवास्तुष्टा पुष्टिं ददत्यपि ।
[ B1 ददाति च (for ददत्यपि) ]

While, T G M4 subst for 20cd

455* तस्मै सुमनसो देवास्तस्मात्सुमनस स्मृता ।
[ M4 तस्मात् (for तस्मै) ]

21 a) B1 T1 8 G समुद्दिश्य (for यमु°) D4 6–9 दीयते (for दीयेरन्) — b) G1 8 देवान् (for देवं). D6 7 प्रभु (for प्रभो) — D5 om 21c–22b — c) V1 Dn3 [अ]ति, B1–5 D10 [अ]स्य, S [ए]व (for [अ]स्य) — d) D4 6–9 दैत्यहा, T1 सर्वदा, T2 8 G M वै नृप (for दैत्यप)

22 D5 om 22ab (cf v. 1 21) T1 om 22 — a) D6–9 त्वउग्राश्, G3 सूग्राश् (for तू°) — b) B1 T2 8 G1 2 4 M च या, D1 2 4 6–9 तथा, G3 [ऽ]थ या (for च ता) — c) D1 2 बहुरूपाश्, D6–9 वृक्षगुल्माश् (for बहुवीर्याश्) V1 B Dn D5 10 हि (for च) D4 औषध्यो वृक्षगुल्माश्च — d) B3 D1 2 वीर्यास् (for रूपास्)

23 D4 om (hapl) 23 — a) D5 S (except T1) याज्ञीयाना (for यज्ञि°) — b) Dn1 D2 5 [अ]यज्ञीयान् (for ज्ञियान्) D6–9 न य(D7 न या-, D9 अय)ज्ञिय विधौ च ये, D10 S याज्ञीया (D10 याज्ञिका, T1 यज्ञिया) कुसुमोषया — T8 om (hapl ?) 23c–25b B5 repeats 23d–24a after 28e — d) B8 दैवतानि (for दैवतेभ्यो) B5 (second time) T1 वै (for च)

24 For the repetition in B5, cf v 1 23 T8 om 24 (cf v 1 23) — a) T1 च यक्षाणाम् (for सुराणां च) V1 B1–4 5 (both times) Dn8 D5 8 रक्षसामसुराणा च, Dn1 n2 D1 2 4 6 7 9 रक्षसामुरगाणा च — b) D7–10 यथा (for तथा) D5 तथा प्रियकराणि च, T1 असुराणा प्रियाणि वै — c) M1 मातॄणा (for पि°) V1 B Dn D5 10 मनुष्याणां पितॄणा च — d) G3 4 [आ]नु- (for [अ]नु)

25 [illegible] v 1 23) — a) T1 2 G1–3